126. मुर्छा मोहसमुच्छ्राययोः । मूर्छति । आदित्वात् क्तयोरिडभावे मूर्तः मूर्तवान् । रदादमूर्छेति वर्जनात् क्तयोस्तस्य न नत्वम् । केनिट्त्वात् क्तेटो गुरोरित्यप्रत्ययाभावे क्तौ मूर्तिः । मूर्छेति तु भिदादित्वादङि । तारकादित्वादितेे मूर्छितः । न वा भावारम्भे इति वेडभावे मूर्छितम् मूर्तमनेन प्रमूर्तः प्रमूर्छितः ॥

127. स्फुर्छा 128 स्मुर्छा विस्मृतौ । स्फूर्छति स्फूर्णः स्फूर्छितम् स्फूर्णमनेन । क्तौ स्फूर्तिः ॥

128. स्मुर्छा । स्मूर्छति स्मूर्णः स्मूर्णवान् स्मूर्छितम् स्मूर्णमनेन स्मूर्छा ॥

129. युछ प्रमादे । अस्य ह्रस्वे युच्छति । दयशव इत्यतुरन्तादेशे युच्छन्ती । क्विपि युट् ॥

अत्र उछु उञ्छे उछै विवासे इति केचित्पठन्ति । तदयुक्तं तुदादिपठिताभ्यामेवामूभ्यामभिमतरूपसिद्धेः ॥

अथ जान्ताश्चतुश्चत्वारिंशत् त्यजसञ्जयजौ सेटश्च ॥

130. धृज 131 धृजु 132 ध्वज 133 ध्वजु 134 ध्रज 135 ध्रजु 136 वज 137 व्रज 138 षस्ज गतौ । धर्जति दधर्ज । यङि क्रमतां री दरीधृज्यते । इकारोपान्त्योऽयमिति केचित् धेजति ॥

131. धृजु । उदित्वान्नागमे धृञ्जति दधृञ्ज दरीधृञ्ज्यते ॥

132. ध्वज । ध्वजति । व्यञ्जनादेर्नोपान्त्यस्यात इति वा वृद्धौ अध्वाजीत् अध्वजीत् । अचि ध्वजः ॥

133. ध्वजु । उदित्वान्नागमे ध्वञ्जति दध्वञ्ज । यङि दाध्वञ्ज्यते ॥

134. ध्रज । ध्रजति दध्राज अध्राजीत् अध्रजीत् ॥

135 ध्रजु । उदित्वान्नागमे ध्रञ्जति दध्रञ्ज । यङि दाध्रञ्ज्यते ॥

136. वज । वजति अवाजीत् अवजीत् । अनादेशादेरित्येत्वस्य न शसददेति प्रतिषेधात् ववजतुः ववजुः । घञि वाजो वेगपक्षौ । वेः सेट्त्वाच्च गत्यम् । उणादौ भिसृधीति रे वज्रः ३८७ ॥

137. व्रज । व्रजति । वदव्रजेति वृद्धौ अव्राजीत् । यङि वाव्रज्यते । यङ्लुपि वाव्रक्ति वाव्रजीति । ध्यणि परिव्राज्यम् । वेः सेट्त्वाच्च गत्यम् । णके परिव्राजकः । दिद्युद्दृदित्यादिनिपातनात् क्विपि परिव्राट् । आस्यटीति क्यपि व्रज्या प्रव्रज्या परिव्रज्या । गेहनेति निपातनात् व्रजाप्नि संस्थापि व्रजः । वज व्रज मार्गसंस्कारगत्योः । वाजयति व्राजयति ॥

138. षस्ज । षः स इति षस्य सत्वे । सस्य शषाविति सस्य शत्वे । तृतीयस्तृतीयेत्यासन्नत्वाच्छस्य जे सज्जति । णौ सनि षोपदेशत्वाण्णिस्तोरेवेति षत्वे सिषज्जयिषति । णिस्तोरेवेति नियमात्सनि षत्वभूते न षत्वम् सिसज्जिषति । अचि सज्जः । क्ते सज्जितः । क्वचिदात्मनेपदमपि दृश्यते ॥

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ॥
सज्जमानमकार्येष्विति ॥

139. अज क्षेपणे च । चकाराद्गतौ । अजति । अघञ् क्यबिति वींभावे विवाय संविवाय । वने वा वींभावे प्राजिता प्रवेता । अत्रानुस्वारेत्त्वाभावेद् । प्राजनो दण्डः । प्रवयणो दण्डः । क्रियाव्यतीति गत्यर्थवर्जनाद्गतौ नात्मनेपदम् व्यत्यजन्ति ग्रामम् । क्षेपणे त्वात्मनेपदमेव व्यत्यजन्ते । अघञित्यशित्विषये एव वींभावे व्यञ्जनादित्वाघडपि वेवीयते । घञादिवर्जनाद्घञादौ वींभावाभावो घञि समाजश्छात्त्राणाम् । उदाजः खगानाम् । समजेति क्यपि समज्या सभा । समुदोज इत्यलि समजः पशुसङ्घः । उदजः पशुप्रेरणम् । आचि अजः अजा । ललाटवातेति खशि वातमजन्ति वातमजा मृगाः । गोचरसंचरेति निपातनाद्घे व्यजः । उणादौ ष्याधेति ने वेनः प्राज्ञः २५८ । यम्यजीत्युने वयुनश्चन्द्रः २८८ । विपिनाजिनेति निपातनादिने अजिनम् २८४ । ऋज्यजीति किति रे वीरः ३८८ । स्थविरादि-निपातनादिरे आजिरम् ४१७ । मीज्यजीति सरे वेसरः ४३१ । पादाचात्यजिभ्यामिति णिदिः आजिः । पदाजिः पत्तिः । पदः पाद स्याज्यातिगोपहते इति पादस्य पदादेश आजीति निर्देशाद्व्यादेशाभावः ६२० । अजिस्येति णौ वेणुः ७६८ । अञ्ज्यजी-स्यसि गादेशो च अगः क्षेमम् ९६६ ॥

140. कुजू 141 खुजू स्तेये । कोजति । खोजति । ऊदित्वात् क्त्वायां वेटौ कुक्त्वा । खुक्त्वा । सेटि क्त्वि वौ व्यञ्जनेति क्त्वो वा कित्त्वे कुजित्वा कोजित्वा । खुजित्वा खोजित्वा ॥

142. अर्ज 143 सर्ज अर्जने । अर्जति । अनातो नश्चान्तेति पूर्वस्यात्वे नागमे च आनर्जे । अयि र इति रस्य द्वित्वाभावे अर्जिजियति । उणादौ यम्यजी-त्युने अर्जुनः २८८ । अर्जेर्ऋज् च ऋजुः ७२२ । अर्जण् प्रतियत्ने । अर्जयति ॥

143. सर्ज । सर्जति ससर्ज । णके सर्जिका । उणादौ कृषिचमीत्यूः सर्जूः क्षारः ८२९ ॥

144. कर्ज व्यथने । कर्जति चकर्ज ॥

145. खर्ज मार्जने च। चकाराद्व्यथने। खर्जति चखर्ज। उणादौ मीमसीत्यूरे खर्जूरः ४२७। कृषिचमीत्यूः खर्जूः ८२९॥

146. खज मन्थे। मन्थो विलोडनम्। खजति चखाज चखजतुः चखजुः। आदेशादित्यादनादेशादेरिति नैत्वम्। यङि चाखज्यते। यङ्लुपि चाखजीति। क्ते खजितम्। क्ते सेट्त्वाद्घ्यणि घञि च गत्वाभावे खाज्यम् खाजः। अचि खजः। उणादौ शलिबलीत्याके खजन्त्यनेनेति खजाको मन्थः ३४। खजाका दर्वी॥

147. खजु गतिवैकल्ये। गतेर्वैकल्यं विकृतत्वम्। उदित्त्वान्नागमे खञ्जति चखञ्ज। अचि खञ्जः। नन्द्यादित्वादने खञ्जनः। उणादौ खञ्जेररीटः खञ्जरीटः १९२॥

148. एजृ कम्पने। एजति। गुरुनाम्यादेरिति परोक्षाया आमादेशे एजां चकार। ऋदित्वादुपान्त्यस्यासमानेति ह्रस्वाभावे मा भवानेजिजत्। एजेः खश् अङ्गमेजयः। एजृङ् दीप्तौ। एजते॥

149. ट्वोस्फूर्जा वज्रनिर्घोषे। स्फूर्जति पुस्फूर्ज। यङि पोस्फूर्ज्यते। यङ्लुपि पोस्फूर्जीति। दिवि रात्स इति नियमात्संयोगान्तलुगभावे अपोस्फूर्क्। ट्वित्वात् ट्वितोथुः स्फूर्जथुः। औदित्त्वात् क्तयोरस्य नत्वे आदित्त्वाच्चेडभावे स्फूर्णः स्फूर्णवान्। न वा भावारम्भे इति वेडभावे स्फूर्णम् स्फूर्जितमनेन प्रस्फूर्णः प्रस्फूर्जितः। भ्वादेर्नामिन इति दीर्घे सिद्धे दीर्घोच्चारणम्। भ्वादेरिति दीर्घत्वस्यानित्यत्वज्ञापनार्थम्। तेन कुर्दते कुर्दन इत्यपि सिद्धम्।

150. क्षीज 151 कूज 152 गुज 153 गुजु अव्यक्ते शब्दे। क्षीजति चिक्षीज॥

151. कूज। कूजति चुकूज। क्ते कूजितम्। क्ते सेट्त्वाद घञि गत्वम् कूजः॥

152. गुज। गोजति जुगोज॥

153. गुजु। उदित्त्वान्नागमे गुञ्जति जुगुञ्ज गुञ्जितम् गुञ्जा॥

154. लज 155 लजु 156 तर्ज भर्त्सने। लजति ललाज॥

155. लजु। उदित्त्वान्नागमे लञ्जति ललञ्ज। लजुण् भासार्थः। लञ्जयति॥

156. तर्ज। तर्जति ततर्ज। तर्जिण् संतर्जने। तर्जयते॥

157. लाज 158 लाजु भर्जने च। चकाराद्भर्त्सने। लाजति। क्ते सेट्त्वाद्गत्वाभावे घञि लाज्यन्ते इति लाजाः॥

158. लाञ्छु। उदित्त्वान्नागमे लाञ्छति ॥

159. जज 160 जञ्जु युद्धे। जजति ॥

160. जञ्जु। उदित्त्वान्नागमे जञ्जति। यङ्लुपि जाजक्ति जाजञ्जीति ॥

161. तुज हिंसायाम्। तोजति तुतोज। वौ व्यञ्जनेति क्त्वासनोर्वा कित्त्वे तुजित्वा तोजित्वा तुतुजिषति तुतोजिषति ॥

162. तुञ्जु बलने च। चकाराद्धिंसायाम्। पालनेपीत्यन्ये। बलनं प्राणनम्। उदित्त्वान्नागमे तुञ्जति तुतुञ्ज। क्ते तुञ्जिता भूः। क्ते सेट्त्वात् क्तेट इत्यः तुञ्जा। तुङ्ग इति तु तमेर्डित्युङ्ग [ उणादौ १०७ ]। तुजुण् हिंसार्थो भासार्थश्चान्यः। तुञ्जयति ॥

163. गर्ज 164 गञ्जु 165 गृज 166 गृञ्जु 167 मुज 168 मुञ्जु 169 मृञ्जु 170 मज शब्दे। गर्ज। गर्जति जगर्ज। क्ते गर्जितम्। बहुलमेतन्निदर्शनमिति वचनाच्चुरादित्वे गर्जयति। यल्लक्ष्यम्।

*प्रतिरवपरिपूर्णो गर्जयन्त्यद्रयोपि ॥*

164. गञ्जु। उदित्त्वान्नागमे गञ्जति जगञ्ज। अचि गञ्जा ॥

165. गृज। गर्जति जगृजु.। यङि जरीगृज्यते। यङ्लुपि जरिगर्क्ति जर्गर्क्ति। क्ते गृजितम् ॥

166. गृञ्जु। उदित्त्वान्नेन्ते गृञ्जति जगृञ्ज। यङि जरीगृञ्ज्यते। यङ्लुपि जरिगृङ्क्ति जर्गृङ्क्ति। उणादौ व्यसिरसीत्यने गृञ्जनमभक्ष्यद्रव्यम् २६९ ॥

167. मुज। मोजति मुमोज। वौ व्यञ्जनेति क्त्वासनोर्वा कित्त्वे मुजित्वा मोजित्वा मुमुजिषति मुमोजिषति ॥

168 मुञ्जु। उदित्त्वान्ने मुञ्जति मुमुञ्ज। अचि मुञ्जः ॥

169. मृञ्जु। उदित्त्वान्ने मृञ्जति ॥

170. मज। मजति ॥

171. गज मदने च। चकाराच्छब्दे। मदनं मदोत्पत्तिः। गजति जगाज। अचि गजः। गज मार्जण् शब्दे। गाजयति ॥

172. त्यजं हानौ। हानिस्त्यागः। त्यजति तत्याज। अनुस्वारेत्त्वादनिट् अत्याक्षीत् त्यक्ता। यङि तात्यज्यते। यङ्लुपि तात्यजीति तात्यक्ति। घ्यणि त्यज्येति गत्वप्रतिषेधात् त्याज्यम्। युजभुजेति घिनणि त्यागी। घञि त्यागः ॥

173. षञ्जं सङ्गे । षः स इति सत्वे दंशसञ्जः शवीति नलोपे सजति । व्यञ्जनानामनिटीति वृद्धौ असाङ्क्षीत् । संयोगान्तत्वादिन्ध्यसंयोगेति । परोक्षायाः कित्त्वाभावे ससञ्जतुः ससञ्जुः । स्यासेनीत्युपसर्गात्षत्वे व्यतिषजति अभिषजति अभिषिषङ्क्षति । णोपदेशत्वाण्णौ सनि सञ्जेर्वेति षत्वे सिषञ्जयिषति । पक्षे सिसञ्जयिषति । यङि सासज्यते । यङ्लुपि सासञ्जीति सासङ्क्ति । अनुस्वारेत्त्वान्नेट् सङ्क्ता सङ्क्तुम् । क्ते प्रसक्तम् । क्तोनिट्त्वाद् घ्यणि गत्वे प्रसङ्ग्यः । घञि उत्सङ्गोऽङ्कः । घञ्युपसर्गस्येति दीर्घे प्रासङ्गो युगम् । निषङ्गस्तूणा । जनशो नीति क्त्वो वा कित्त्वे सक्त्वा सङ्क्त्वा । यादेः क्त्वो नित्यं कित्त्वे आसज्य प्रसज्य । उणादौ वीसञ्ज्यसिभ्यस्थिक् सक्थि ६६९ ॥

अथ टान्ता अष्टाविंशतिसेटश्च ॥

174. कटे वर्षावरणयोः । वृष्टावावरणे चार्थे । कटति चकटतुः चकटुः । आदेशादित्वादनादेशादेरित्येत्वाभावः । अत्र व्यञ्जनादेर्वोपान्त्यस्येति वा प्राप्तायां वृद्धेरेदित्त्वान्न श्विजागिति प्रतिषेधे अकटीत् । अचि कटति वर्षति मदजलं स्रवति कटः करिगण्डः । कटत्यावृणोति कटो वीरणादिमयः । नास्य कटोस्ति निकटः समीप इत्यर्थः । घञि काटः । उणादौ दृकृनृत्यके कटकः २७ । कृकडीत्यम्बे कटम्बो वादित्रम् ३२१ । कृगृपृघृगिति ईरे कटीरं कटी ४१८। कृगृभिति वरटि कट्वरो व्यालाध्रः । कट्वरी दधिविकारः ४४१ । पदिपठीति इः कटिः ६०७ । भृमृत्रिस्तुः कटुः ७१६ ॥

175. शट रुजाविशरणगत्यवसादनेषु । चतुर्ष्वर्थेषु । शटति शशाट । अचि शटः । ण्यन्तादचि शाटी । णके शाटकः । घञि शाटः । तालव्यादिः ॥

176. वट वेष्टने । वटति रज्जुम् । अनादेशादेरित्येत्वस्य न शसददेति प्रतिषेधे ववटतुः ववटुः । अचि वटः । बहुलमित्यकटि वटघते वेष्टघते इति वटकम् । ण्यन्तादचि वाटः वाटी वाटं च वृत्तिः । उणादौ पदिपठीति इः वटिः ६०७ । भृमृत्रुत्सरीत्युः वटुः ७१६ । परिभाषणे घटादित्वाण्णौ वटयति । पट वटण् ग्रन्थेदन्तः । वटयति ।

177. किट 178 खिट उत्रासे । उत्रासो भयोन्नतिरुत्रासनं च । केटति चिकेट । नाम्युपान्त्येति के किटः किटी ॥

178. खिट । खेटति चिखेट खिटघते । उत्रास्यतेनेनेति व्यञ्जनाद्घञि यावादित्वात्के खेटकः आखेटकः । भावे खेटो ग्रामोधमश्च ॥

179. शिट 180 पिट अनादरे । एतौ तालव्यमूर्धन्यादी । शेटति शिशेट ॥

180. षिट । षः स इति सत्वे सेटति । षोपदेशत्वात्षत्वे सिषेट ॥

181. जट 182 झट संघाते । जटति जजाट जट्यते संहन्यते । स्यादिभ्य इति के जटा । जटा अस्य सन्तीति कालाजटेति लेलौ जटालः जटिलो जटावान् । अभ्रादित्वादः जटः । स्यादित्वात्के जटः ॥

182. झट । झटति उज्झटति । अचि झटः झटा । घञि झाटः ॥

183. पिट शब्दे च । चकारात्संघाते । पेटति । तिकृताविति के स्वार्थे के च पिटकः । घञ्युपसर्गस्येति बाहुलकाद्दीर्घे पिटाकः । लिहादित्वादचि पेटा । उणादौ छिदिभिदीति वा कित्यके पिटकः क्षुद्रस्फोटः । पेटकं चक्रम् ३० । केचित्पेडेति सिद्धचर्थे डान्तमेनं पठन्ति ॥

184. भट भृतौ । भृतिर्वेतनं भरणं च । भटति बभाट । परिभाषणे घटादित्वाण्णौ भटयति । अचि भटः । णके भाटकम् । उणादौ बन्धिवहीति इत्रे भाटित्रम् ४५१ । कल्यनीति इले भटिलः ४८१ । कमिवमीति णिदिः भाटिः सुरतमूल्यम् ६१८ ॥

185. तट उच्छ्राये । तटति तताट । अचि तटः । णके ताटकः । उणादौ शलिवलीत्याके तटाकम् ३४ ॥

186. खट काङ्क्षे । काङ्क्षास्यास्तीत्यभ्रादित्वादः काङ्क्षः । काङ्क्षाविशिष्टो धात्वर्थः । खटति चखाट । अचि खटस्तृणम् । गौरादित्वाङ्यां खटी लम्बी खटी खटिका । उणादौ लटिखटीति वे खट्वा ५०५ ॥

187. णट नृतौ । नतावित्यन्ये । हिंसायामप्येके । नटति प्रणटति । णोपदेशत्वादद्रुरुपसर्गेति णत्वम् । नाय णोपदेश इत्येके प्रनटयति प्रनाटयति । नेटतुः नेटुः । अचि नटम् । णौ नतौ घटादित्वाद्ध्रस्वे नटयति शाखाम् । नृतौ हिंसायां च घटादित्वाभावे न ह्रस्वः नटं नाटयति प्रणाटयति चौरस्योन्नाटयति । जासनाटेति कर्मणो वा व्याप्यत्वम् । नटण् अवस्यन्दने । नाटयति । नाटकम् ॥

188. हट दीप्तौ । हटति जहाट । णके हाटकम् ॥

189. षट अवयवे । षः स इति सत्वे । सटति ससाट । अचि सटा । षोपदेशत्वाण्णौ सनि णिस्तोरेवेति षत्वे सिषाटयिषति ॥

190. लुट विलोडने । विलोडने इत्यन्ये । लोटति लुलोट । लुटत् विलोटने । लुट्यति । लुटण् भासार्थः । लोटयति ॥

191. चिट प्रैष्ये । प्रैष्यं दासत्वम् । चेटति चिचेट । णके चेटको बालो दासश्च । उणादौ किलिपिलीति इः चेटिः ६०८ ॥

192. विट शब्दे । आक्रोशे इत्यन्ये । वेटति । नाम्युपान्त्येति के विटः । णके वेटकम् ॥

193. हेट विबाधायाम् । हेटति जिहेट । डान्तोयमित्येके । हेडति जिहेड ॥

194. अट 195 पट 196 इट 197 किट 198 कट 199 कटु 200 कटै गतौ । अटति । परोक्षायामस्यादेरिति पूर्वस्यात्वे आटतुः आटुः । अट्यर्तीति यङि अटाट्यते । आस्यटीति क्यपि अट्या । वाटाट्याटीति यङन्ताद्वे अटाट्या । पक्षे शंसीत्यः अटाटा । सनि स्वरादेरिति द्वितीयांशाद्वित्वे अटिटिषति । अने अटनः । उणादौ सहिवृत्यमीत्यनौ अटनिः ६८० । छविछिविस्फवीति वौ निपातनात् अटविः ७०६ ॥

195. पट । पटति पपाट । अचि पटः । उणादौ वीपतिपटिभ्यस्तनः पट्टनम् २९२ । कृशॄपॄगिटीरे पटीरः ४१८ । मृदिकन्दीत्यले पटलम् । ण्यन्तात् पाटलम् ४६९ । कपिपटीत्योले पटोलः [ ४९३ ] । कृपृकटीत्यहे पटहः ५८९ । मृमृतृत्सरीत्युः पटुः ७१६ । पटण् भासार्थः । पाटयति । पट वटण् मन्थे । अदन्तः पटयति ॥

196. इट । एटति इयेट ॥

197. किट । केटति चिकेट । उचासे पठितोप्यर्थभेदात्पुनरुपात्तः ॥

198. कट । कटति चकाट । व्यञ्जनादेरिति वा वृद्धौ अकटीत् अकाटीत् ॥

199. कटु । उदित्वान्नागमे कण्टति । उणादौ दृकृनिभ्यकः कण्टकः २७ ॥

200. कटै । कटति । ऐदित्वात् क्तयोर्नेट् कट्टः कट्टवान् ॥

201. कुटु वैकल्ये । उदित्वान्ने कुण्टति चुकुण्ट । अचि कुण्टः । डान्तोयमित्येके कुण्डति । अचि कुण्डः ॥

202. मुट प्रमर्दने । मोटति । अने आमोटनम् । णौ क्ते आमोटितः । उदित्वमिति कौशिकः मुण्टति । मुटत् आक्षेपप्रमर्दनयोः । मुटति । पुट मुटण् संचूर्णने । मोटयति ॥

203 चुट 204 चुटु अल्पीभावे । चोटति चुचोट । अनटि उच्चोटनम् । चुट छुट त्रुटत् छेदने । त्रुटति । चुट चुट चुटु छुटण् छेदने । चोटयति ॥

204. चुट्ट । उदित्त्वान्ने चुण्टति चुचुण्ट । अनटि चुण्टनम् । डान्तोयमित्यन्ये चुण्डति चुचुण्ड । अचि चुण्डः ॥

205. वट्ट विभाजने । विभाजनं विभागीकरणम् । उदित्त्वान्ने वण्टति ववण्ट । अचि वण्ट एकचरः सेवकः । घञि वण्टो भागः । वट्टुण् विभाजने । वण्टयति ॥

206. रुट्ट 207 लुट्ट स्तेये । उदित्त्वान्ने रुण्टति रुरुण्ट । अचि रुण्टः ॥

207. लुट्ट । उदित्त्वान्ने लुण्टति लुलुण्ट । अचि लुण्टः । वृङ्भिक्षीति टाके लुण्टाकः । के सेट्त्वात् केटो गुरोरित्यः लुण्टा । लुण्टण् स्तेये च । लुण्टयति । डान्तावेतावित्यन्ये ॥

208. स्फट 209 स्फुट्ट विसरणे । स्फटति वस्त्रम् पस्फाट । के स्फटितम् । अचि कर्पूरस्फटा । उणादौ श्रीकल्यलीतीके ,स्फटिक' ३८ । उदिदयमिति केचित् । तत्र ने स्फण्टति ॥

209. स्फुट्ट । स्फोटति पुस्फोट । ऌदित्त्वाद्दाङि अस्फुटत् । पक्षे अस्फोटीत् । घञि स्फोटः आस्फोटः विस्फोटः । स्फुटत् विकसने कुटादिः । स्फुटति अस्फुटीत् । नाम्युपान्त्येति के स्फुटः । चट स्फुटण् भेदे । स्फोटयति । कथं स्फुटयति स्फुटं करोतीति णिचि भविष्यति । बहुलमेतदिति वचनाच्चुरादन्तो वा स्फुटण् ज्ञेयः ॥

210. लट बाल्ये । बाल्यं बालक्रिया । लटति ललाट । घञि लाटः । अचि कुत्सितं लटति कुलटा लटः, लटकः । णके लाटकः । उणादौ लटिखटीति वे लट्वा ५०९ ॥

211. रट 212 रठ च परिभाषणे । चकारो लटानुकर्षणार्थः । तेन लटेरर्थद्वय सिद्धम् । रटति रराट । घञि विरटस्थाने इति विराटः । रटिता ॥

अथ ठान्ताः सप्तदश सेटश्च ॥

212. रठ । रठति रराठ ॥

213. पठ व्यक्तायां वाचि । पठति पपाठ । णके पाठकः । के पठितम् । तेर्ग्रहादिभ्य इतीटि निपठितिः । नेर्नदगदेति वाऽलि निपठः निपाठः ॥

214. वठ स्थौल्ये । वठति ववाठ । अनादेशादेरित्येत्वस्य न शसददेति प्रतिषेधे ववठतुः ववठुः । उणादौ ऋच्छिचटीत्यरे वठरः ३९७ ॥

215 मठ मदनिवासयोश्च । मकारात्स्थौल्ये । मठति ममाठ । मठन्ति

निवसन्त्यत्रेति व्यञ्जनादिति घञि ग्रामे बाहुलकात्पुंनाम्नि घः मठः। उणादौ ऋछिचटीत्यरे मठरोधमः ३९७ ॥

216. कठ कृच्छ्रजीवने। कठति, चकाठ। अचि कठः। उणादौ श्याकठीतीने कठिनः २८२। कठिचकीत्योरे कठोरः ४३३। चटिकठीत्याकौ कठाकुः कुटुम्बपोषी ७५२ ॥

217. हठ बलात्कारे। प्लवनकीलबन्धनयोरित्यन्ये। हठति जहाठ। आदेशादित्वादनादेशादेरिति नैत्वम् जहठतुः जहठुः। अचि हठः ॥

218. उठ 219 रुठ 220 लुठ उपघाते। ओठति उवोठ ऊठतुः ऊठुः। नाम्युपान्त्येति के उठ उपघातकः ॥

219. रुठ। रोठति ॥

220. लुठ। लोठति। लुठत् संश्लेषणे। लुठति ॥

221. पिठ हिंसासंक्लेशयोः। पेठति। उणादौ मृधुन्दीति किदरे पिठरं भाण्डम् ३९९। पिठिरमिति तु पाठः स्थविरेति निपातनादिरे रूपम् ४१७ ॥

222. शठ कैतवे च। चकाराद्धिंसासंक्लेशयोः। तालव्यादिः शठति शशाठ। अचि शठः। शठ श्वठ श्वठुण् संस्कारगत्योः। शाठयति। शठण् सम्यग्भाषणे। अदन्तः शठयति ॥

223. शुठ गतिप्रतीघाते। तालव्यादिः शोठति शुशोठ। उदिदयमित्येके तत्र च ने शुण्ठति। शुठण् आलस्ये। शोठयति ॥

224. कुठु 225 लुठु आलस्ये च। चकारात्प्रतिप्रतीघाते। उदित्त्वान्ने कुण्ठति चुकुण्ठ। कर्मणि घञि कुण्ठः। कुठार इति तु कुठेः सौत्रस्य [ उणादौ ४०८ ] ॥

225. लुठु। लुण्ठति लुलुण्ठ। अचि लुण्ठः ॥

226. शुठु शोषणे। तालव्यादिरुदित्त्वान्ने शुण्ठति शुशुण्ठ। कर्मणि घञि शुण्ठी। शुठुण् शोषणे। शुण्ठयति। उणादौ किलिपितीति इः शुण्ठिर्नागरमेव ६०८ ॥

227. अठ 228 रुठु गतौ। अठति ॥

228. रुठु। उदित्त्वान्ने रुण्ठति। लुठुमप्यन्येऽधीयते। लुण्ठति लुलुण्ठ। केचिदर्थभेदात्पुनर्लुठमपि पठन्ति ॥

॥ अथ डान्तास्त्रिंशत्सेटश्च ॥

229 पुडु प्रमर्दने । उदित्त्वान्ने पुण्डति पुपुण्ड । णके पुण्डकम् । उणादौ सृणीकेति ईके निपातनात् पुण्डरीकम् ५० । खुरक्षुरेति रे पुण्ड्र॰ ३९६ ॥

230 मुडु खण्डने च । चकारात्प्रमर्दने । उदित्त्वान्ने मुण्डति मुमुण्ड । मुडुङ् मज्जने । मुण्डते ॥

231. मडु भूषायाम् । उदित्त्वान्ने मण्डति ममण्ड । भूषाक्रोधार्थेत्यने मण्डन । उणादौ मृमन्यञ्जीत्यूके मण्डूकः ५८ । वृजीति ण्यन्तादन्ते मण्डयन्त आदर्श॰ २२१ । आमन्तेति णेरयादेशः । मडुण् भूषायाम् । मण्डयति । णिवेत्तीत्यने मण्डन॰ । वडुङ् मडुङ् वेष्टने । मण्डते ॥

232 गडु वदनैकदेशे । गण्डगतसंहननक्रियायामित्यर्थः । उदित्त्वान्ने गण्डति जगण्ड । अचि गण्डः । णके गण्डिका । उणादौ कुगुकुटीति वा णिदि॰ गण्डिः । णित्त्वबलाद्वृद्धौ गाण्डिः ६१९ । ङ्याम् गाण्डी । मण्यादित्वाद्वे गाण्डिवम् गाण्डीवम् । वृजीति ण्यन्तादन्ते गण्डयन्तो मेघ॰ २२१ ॥

233 शौडृ गर्वे । तालव्यादि॰ । शौडति शुशौड । ऋदित्त्वाण्णौ ङे उपान्त्यस्येति ह्रस्वाभावे अशुशौडत् । उणादौ कुशृपृपूगीतीरे शौडीर॰ ४१८ ॥

234. यौडृ सम्बन्धे । सम्बन्ध॰ श्लेषः । यौडति युयौड । ऋदित्त्वाण्णौ ङे उपान्त्यस्येति न ह्रस्वः अयुयौडत् ॥

235 मेडृ 236 म्रेडृ 237 म्लेडृ 238 लोडृ 239 लौडृ उन्मादे । मेडति । म्रेडति । म्लेडति । लोडति । लौडति । ऋदित्त्वाद्ध्रस्वाभावे अमिमेडत् । अमिम्रेडत् । अमिम्लेडत् । अलुलोडत् । अलुलौडत् । लौडादयो लोडृवर्जाष्टान्ता इत्यन्ये ॥

240 रोडृ 241 रौडृ 242 तौडृ अनादरे । रोडति ररोड । ऋदित्त्वात् अररोडत् ॥

241. रौडृ । रौडति ररौड । ऋदित्त्वात् अररौडत् ॥

242. तौडृ । तौडति तुतौड । ऋदित्त्वात् अतुतौडत् ॥

243. क्रीडृ विहारे । क्रीडति चिक्रीड । क्रीडोऽकूजने इत्यात्मनेपदम् सक्रीडते । कूजने तु संक्रीडन्ति शकटानि । अन्वाङ्परेः अनुक्रीडते आक्रीडते परिक्रीडते । ऋदित्त्वान्ङे न ह्रस्व॰ अचिक्रीडत् । आङः क्रीडेति घिनणि आक्रीडनशील आक्रीडी । क्ते क्रीडितम् । क्ते सेट्त्वात् क्तेऽट इत्य॰ क्रीडा ॥

244. तुड्ड् 245 तृड्ड् 246 तोड्ड् तोडने। तोडनं दारणम्। तोडति तुतोड। ऋदित्त्वात् अतुतोडत्। दारणस्य हिंसाविशेषत्वाद्धन्त्यर्थाश्चेति चुरादित्वे तोडयति। संयुक्तडान्तोयामित्येके तुड्डति। उभयोर्लक्ष्यम्।

तुड्डत्यंहः सकलमचिरात्तोडयत्यश्रियं च ॥

245. तृड्ड्। तृडति तुतृड। ऋदित्त्वात् अतुतृडत्। क्ते सेट्त्वात् क्तेट इत्यः तृटा ॥

247. हुड्ड् 248 हूड्ड् 249 हृड्ड् 250 हौड्ड् गतौ। होडति। हूडति। हृडति। हौडति। ऋदित्त्वात् अजुहोडत्। अजुहूडत्। अजुहृडत्। अजुहौडत् ॥

251. खोड्ड् प्रतीघाते। गतावित्यनुवृत्तेर्गतिविषये प्रतीघाते। खोडति। ऋदित्त्वात् अचुखोडत्। अचि खोडः पङ्गुः। लत्वे खोला शिरस्त्रम् ॥

252. विड आक्रोशे। वेडति विवेड। कुलिपिलीति किल्याले विडालः [उणादौ ४७६] ॥

253. अड उद्यमे। अडति व्यडति। अचि व्यडः। व्याङ्पूर्वस्य व्याडः। लत्वे व्यालः ॥

254. लड विलासे। लडति। लत्वे ललति। जिह्वोन्मन्थने घटादित्वाण्णौ ह्रस्वे लडयति। अन्यत्र लाडयति। लत्वे लालयति। मन्थादित्वादने लडना ललना। अचि लडः। लडण् उपसेवायाम्। उपलाडयति। ललिण् ईप्सायाम्। लालयते। घुषेरविशब्दे इति विशब्दप्रतिषेधाण्णिन्नोनित्यत्वे उल्ललते ॥

255 कडु मदे। उदित्त्वान्ने कण्डति चकण्ड। कडुङ् मदे। उदित्त्वान्ने कण्डते। कटमप्येकेत्र पठन्ति। स तु तुदादिपाठेनैव गतार्थ इति मेहाधीतः ॥

256. कद्ड कार्कश्ये। डोपान्त्योयम्। तवर्गस्येति दस्य डत्वे। कड्डति च-कड्ड। अचि कड्डः कर्कशः। क्ते सेट्त्वात् क्तेट इत्यः कड्डा। क्विपि पदस्येति संयोगान्तलोपे कद् कत्। अन्ये तु डोपान्त्यमेनं मन्यन्ते। तदा संयोगान्तलोपे कड् कट् ॥

257. अद्ड अभियोगे। डोपान्त्यः। तवर्गस्येति दस्य डत्वे अड्डति। अनात इत्यात्वे ने च आनड्ड। सनि न बदनमिति दस्य द्वित्वाभावे अड्डिडिषति। क्विपि पदस्येति संयोगान्तलोपे अद् अत्। अन्ये तु डोपान्त्यमेनं मन्यन्ते। तदा संयोगान्तलोपे अड् अट्। सनि न बदनमिति प्रतिषेधाभावात् ड्डि इत्येतस्य द्वित्वे अड्डिड्डिषति ॥

258. चुद्ड हावकरणे । हावो भावसूचनम् । डोपान्त्योयम् । तवर्गस्येति दस्य डत्वे चुड्डति चुचुड्ड । अचि चुड्ड भगम् । क्विपि सौ पदस्येति संयोगान्तलोपे चुद् चुत् साधुचुत् । डोपान्त्योयमित्यन्ये तत्र संयोगान्तलोपे चुड् चुट् ॥

अथ णान्ता एकोनविंशतिः सेटश्च ॥

259. अण 260 रण 261 वण 262 व्रण 263 बण 264 भण 265 भ्रण 266 मण 267 धण 268 ध्वण 269 भ्रण 270 कण 271 क्वण 272 चण शब्दे । शब्दः शब्दक्रिया । अणति आण आणतुः । निकृतौ नाम्नीत्यकटि अणकः । अचि अणः । कुत्साथां कपि अणकः । उणादौ कण्यणेर्णिदित्युके आणुकमक्षिमलम् ५६ । शल्यणेरिति णिद्धकः आणूकं तदेव ९९ । कण्यणीति वा णिडुः अण्डः आण्डः १६९ । कुशृकुटीति वा णिदिः अणिः आणिर्धुरकीलिका ६१९ । भृमृतृत्सरीत्युः अणुः ७१६ । अणेर्डोन्तश्चेति णिद्दूः आण्डूर्जलभृङ्गारः ८३६ ॥

260. रण । रणति रराण रेणतुः रेणुः । गतौ घटादित्वाण्णौ ह्रस्वः रणयति । अन्यत्र राणयति । भ्राजभासेति णौ ङे वा ह्रस्वत्वे अरराणत् अरीरणत् । अचि रणः । युवर्णेत्यलि रण्यते रणः । रणन्त्यस्मिन्निति व्यञ्जनाद्धञित्यस्यापवादे बाहुलकात्पुंनाम्नीति घे रणः । चालशब्दार्थादित्यने रणनशीलो रणनः ॥

261. वण । वणति । अनादेशादेरित्येत्वस्य न शसददेति वादित्वात्प्रतिषेधे ववणतुः ववणुः । यङि वंवण्यते । यङ्लुपि वंवणीति वंवणित । वनि वन्यादित्यात्वे वनावा । विचि वण् । क्विपि अहन्पञ्चमस्येति दीर्घत्वे वाण् । उत्पूर्वादचि पृषोदरादित्वात्तो लत्वे उल्वणम् । क्तावहन्पञ्चमस्येति दीर्घत्वे तस्य टत्वे वाण्टिः । उणादौ कमिवमीति णिदिः वाणिर्वाक् । इयाम् वाणी ६१८ ॥

262. व्रण । व्रणति । अचि व्रणः । व्रणण् गात्रविचूर्णने । अदन्तः व्रणयति ॥

263. बण । बणति । अनादेशादेरित्येत्वे बेणतुः बेणुः । परर्गतृतीयादित्वेन न शसददेति प्रतिषेधाभावः । णावचि बाणः । व्यञ्जनाद्धञि बणन्त्यस्मिन्पुङ्ख इति बाणः ॥

264. भण । भणति । णावचि भाणः प्रबन्धविशेषः ॥

265. भ्रण । भ्रणति बभ्राण ॥

266. मण । मणति ममाण मेणतुः मेणुः । उणादौ मणिवसेर्णिदित्यवे माणवः शिष्यः ५१६ । पदिपठिपचीति इः मणिः ६०७ । कुशिकेतीके मणिको महाकुम्भः [४५] ॥

267. धण । धणति दधाण ॥

268. ध्वण । ध्वणति दध्वाण ॥

269. ध्रण । ध्रणति दध्राण ॥

270. कण । कणति चकाण । गतौ घटादित्वाण्णौ ह्रस्वत्वे कणयति । अन्यत्र काणयति । अचि कणः कणिका । घञि काणः । उणादौ स्यमिकषीतीके कणीकः पटवासः । कणीका भिन्नतण्डुलावयवः ४६ । कण्यणोर्णिदित्युके काणुकः काकः । काणुकमक्षिमलम् ९६ । कणिभल्लेर्दीर्घश्च वेत्युके कणूको धान्यस्तोकः । काणूकः पक्षी । काणूकमक्षिमलं तमश्च ९० । वनिकणीति डे कण्डः १६२ । कण्यणीति वा णिति डे काण्डः शरः । कण्डं भूषणम् १६९ । लटिखटीति वे कण्वं पापम् । कण्वो मेधावी ५०५ । मृधीर्णीचो कणीचि शब्दः शकटं च ६२७ ॥

271. क्वण । क्वणति चक्वाण । न वा क्वणेति वाले क्वणः क्वाणः । नेर्नदेति वाले निक्वणः निक्वाणः । वैणे क्वण इति सोपसर्गाद्वाले प्रक्वणः प्रक्वाणो वीणायाः । उणादौ सृणीकेति निपातनाद्यडन्तादीके कङ्कणीको घण्टाजालम् । तथा किमः पूरादीके किङ्कणीका घण्टिका ५० ॥

272. चण चणति चचाण । हिंसादानगतिषु घटादित्वाण्णौ ह्रस्वत्वे चणयति । अन्यत्र चाणयति । उणादौ दृकॄञित्यके चणकः २७ । मान्याणीति णित्युरे चाणूरो विष्णुहतो मल्लः ४२८ । इह च शब्दार्थत्वाविशेषेऽपि रणितं नूपुरादौ । भणितं सुरतकूजिते । कणितमार्ते । क्वणितं वीणादौ स्वनम् । ध्वनमन्यत्रापि । कूजितं विहगादौ । बृंहितं गजे । हेषितं हये । वाशितं पशुषु । गर्जितं मेघादौ । गुञ्जितं सिंहादावित्यादिकं लक्ष्यादभ्यूह्यम् ॥

273. ओणृ अपनयने । ओणति । गुरुनाम्यादेरिति परोक्षाया आमादेशे ओणां चकार । ऋदित्वाण्णौ ङे उपान्त्यस्येति ह्रस्वाभावे मा भवानोणिणत् । ननु नित्यत्वादन्तरङ्गत्वाच्च द्वित्वे कृते उपान्त्याभावादेव ह्रस्वो न प्राप्नोति । किमृदित्करणेन । सत्यम् । इदमेव ऋदित्करणं ज्ञापकं नित्यमन्तरङ्गं च द्वित्वमुपान्त्यह्रस्वो बाधते । तेनान्यत्रापि पूर्वं ह्रस्वः पश्चाद्द्वित्वम् मा भवानटिटत् मा भवानशिशत् । यनि धन्याद् पञ्चमस्येत्यात्वे अवावा । स्त्रियां णम्येति यां नस्य ण्ये ण अयायरी ॥

274. शोणृ वर्णगत्योः । गत्यादिः । शोणति शुशोण शुशोणतुः शुशोणुः । ऋदित्वाद्ध्रस्वाभावे अशुशोणत् । शोणितः शोणितवान् । अचि शोणो

चर्म। स्त्रियां न वा शोणादेरिति वा ङी शोणी शोणा। गतौ व्यञ्जनाद्दाञि शोणो रद। उणादौ हृदयेतीते शोणितम् २१०॥

275 श्रोणृ 276 स्रोणृ सघाते। तालव्यादी। श्रोणति। ऋदित्त्वात् अशुश्रोणत्। अत्रि गौरादित्वाड ङ्या च श्रोणी। श्रोणिरिति तु शृणोतेरौणादिके णो [उणादौ ६३८]॥

276 श्लोणृ। श्लोणति अशुश्लोणत॥

277 पैणृ गतिप्रेरणश्लेषणेषु। पैणति पिपैण। यङि पेपैण्यते। ऋदित्त्वात् अपिपैणत्॥

अथ तान्ता दश सेटश्च॥

278 चितै सज्ञाने। सज्ञान सवित्ति। चेतति चिचेत। ऐदित्त्वात् क्तयोर्नेट् चित्त चित्तवान् चित्तम्। त्र्यादिभ्य इति क्तौ चित्ति। क्तौ व्यञ्जनादेरिति क्त्वासनोरिति वा किद्वे चित्तित्वा चेतित्वा चिचितिषति चिचेतिषति। णौ सत्रिसातीति णौ चेतय। क्विपि चेतन चित्। उणादौ असित्यसि चेत ९०७। चितिण् सचेतने। चेतयते चेतन चेतना॥

279 अत सातत्यगमने। सातत्येन गमन नित्यगति। अतति आत आततु आतु अतिता। सनि अतितिषति। क्रियाव्यतिहारे इति गत्यर्थप्रतिषेधादात्मनेपदम्। व्यत्यतते। णिगि आतयति मैत्रम्। अत फलवत्कर्तर्यण्यणिगि प्राणीति परस्मैपदम्। आतयति ग्राम चैत्रमिति सकर्मकत्वविवक्षाया तु गत्यर्थत्वाल्लानारार्थेति परस्मैपदम्। उभयत्रापि गतिबोधेत्यणिक्कर्तुः कर्मत्वे। णौ ङे ओणेर्ऋदित्करणज्ञापकादुपुर्वे ह्रस्वे पश्चाद्द्वित्वे मा भवानतितत्। गत्यर्थेति वा कर्तरि क्ते अतितो ग्राम चैत्र। पक्षे यथाप्राप्त कर्मणि अतितो ग्रामश्चैत्रेण। कर्माविवक्षाया भावे अतितमनेन। अधर्याधारे इदमेषामतितम्। अत क्तयोरसदाधारे इत्याधारवर्जनात्कर्तरि षष्ठीप्रतिषेधो न भवति। शतरि अतन्। क्तौ अत्ति। उणादौ भीण्शलीति के अत्क आत्मा ?? । व्याधापेति ने अतो वायु २०८। नम्यतीत्यसे अतसी ६६९। पादाचात्यजिभ्यामिति णिदि आति पत्तानि। पत पात्स्थेति पत्तेश ६७०। अतेरिथि अतिथि ६७३। मात्मनात्मनिति मनि निपातनात् आत्मा ९१६॥

280 च्युतृ आसेचने। आसेचनमीषत्सेक। च्योतति च्योतिता। ऋदित्त्वात् ऋदिच्छ्वीति वाङि अच्युतत् अच्योतीत्। क्तौ व्यञ्जनादेरिति क्त्वासनोरिति वा

क्त्वे च्योतित्वा च्युतित्वा चुच्योतिषति चुच्युतिषति । उणादौ नाम्युपान्त्येति किदिः च्युति ॥[ ६०९ ] ॥

281 चुतृ 282 स्चुतृ 283 स्च्युतृ क्षरणे । क्षरण स्रवणम् । चोतति । ऋदित्त्वादङि अचुतत् अचोतीत् ॥

282 स्चुतृ । सो दन्त्योऽत्र सस्य शषाविति शत्वे श्चोतति । ऋदित्त्वादङि अश्चुतत् अश्चोतीत् ॥

283 स्च्युतृ । सो दन्त्य स्च्युश्च योपान्त्योऽत्र सस्य शषाविति शत्वे श्च्योतति । ऋदित्त्वादङि अश्च्युतत् अश्च्योतीत् । घट् श्च्योतन्तीति डुन स इति श्चो वर्जनाच्छ स्तो न भवति । श्चो वर्जनादेव च सकारोपदिष्ट कार्यं तदादेशस्य तालव्यस्यापि विज्ञायते । तेन घृत श्च्योततीति क्विप् घृतश्चुत् ।

घृतश्चुतमाचक्षाण इति ॥

णिच्यन्त्यस्वरादिलुक् पुन क्विप् ण्योरिति यलुक् घृतश्च् । तत सौ संयोगस्यादाविति शलुकि सिद्धम् घृतक । न च त्र न सधीत्यत्रास्लुकीति वर्जनाण्णिलुक स्थानिवत्प्रतिषेधाभावे णिलुक् स्थानीति पदान्तत्वाभावे सलुग् प्राप्नोत्येव । यथा सुकुस्मयते क्विपि सौ सुकुरिति । सत्यम् । अस्लुकीति वर्जनस्य प्रायिकत्वादसद्विधौ सलुक्यपि स्थानिवत्प्रतिषेधाद्भवत्येव । भुतावपि समानमेतत् । आद्यो द्रमिलानामेव द्वितीय कौशिकस्यैव संमत । एवमन्यत्राप्याचार्यभेदेन धातुपाठो द्रष्टव्य ॥

284 जुतृ भासने । जोतति । ऋदित्त्वादङि अजुतत् अजोतीत् । धौ व्यञ्जनादेरिति वा क्त्वे जोतित्वा जुतित्वा जुजोतिषति जुजुतिषति ॥

285 अतु बन्धने । उदित्त्वान्ने अन्तति । अनात इत्यादौ ने न आनन्त । णके अन्तक । अन्ये अतु इतु बन्धने इति पेठु । इन्ता नकार ॥

286 कित निवासे । केतति । अनटि अकेतनम् निकेतनम् । घञि केत । णके केतकी । धातूनामनेकार्थत्वात् किन सद्यप्रतीकार इति । स्वार्थे सनि चिकित्सति मे मन । चिकित्सत्यातुर वैद्य । निग्रहविनाशावपि प्रतीकारस्यैव भेदौ । परक्षेत्रे चिकित्स्य पारदारिक । चिकित्स्यानि क्षेत्रे तृणानि ॥

287 ऋत घृणागतिस्पर्धेषु । ऋतेर्ङीय इति स्वार्थे ङीये ऋतीयते । अशवि ते सेति वा ङीये ऋतीयिता ऋतीया च । पक्षे अर्तिता । आनर्त । ऋतयति सेट् ऋतो वा क्त्वे ऋतित्वा अर्तित्वा ॥

अथ थान्ताः षट् सेटश्च ॥

**288.** कुथु 289 पुथु 290 लुथु 291 मथु 292 मन्थ 293 मान्थ हिंसासंक्लेशयोः। हिंसा प्राण्युपघातः। संक्लेशो बाधा। उदित्त्वान्ने कुन्थति कुन्थ्यते। क्ते कुन्थितम्। क्त्वि कुन्थित्वा। कुन्थश् संक्लेशे। कुथ्नाति कुथ्यते कुथितम् ॥

**289.** पुथु। उदित्त्वान्ने पुन्थति पुन्थ्यते पुन्थितम् ॥

**290.** लुथु। उदित्त्वान्ने लुन्थति लुन्थ्यते लुन्थितम् ॥

**291.** मथु। उदित्त्वान्ने मन्थति मन्थ्यते मन्थितम् ॥

**292.** मन्थ। नोपान्त्योयम्। विलोडनेयमित्येके। मन्थति मथ्यते मथितम्। क्त्वेति सेटः क्त्वो वा कित्त्वे मथित्वा मन्थित्वा। अचि मन्थः। मन्थश् विलोडने। मथ्नाति मथ्नीतः ॥

**293.** मान्थ। मान्थति माथ्यते ॥

अथ दान्ताः पड्विंशतिः स्कन्दृवर्जाः सेटश्च ॥

**294.** खादृ भक्षणे। खादति चखाद। ऋदित्त्वाद्ध्रस्वाभावे अचखादत्। गतिबोधाहारेति सूत्रेण खादियर्जनादणिक्कर्तुः कर्मत्वाभावे खादयत्योदनं चैत्रेण मैत्रः। अत्र फलवत्कर्तर्यपि चल्याहारार्थेङिति परस्मैपदम्। निन्दहिंसेति णके खादनशीलः खादकः ॥

**295.** बद स्थैर्ये। ओष्ठ्यादिः। वद व्यक्तायां वाचीति तु दन्त्योष्ठ्यादिः। बदति बद्यते। क्ते बदितम्। उणादौ ऋच्छिचटीत्यरे बदरी बदरम् ३९७। पकारादिरयमिति कण्वः पदति ॥

**296.** खद हिंसायां च। चकारात्स्थैर्ये। खदति। अचि भिदादित्वादङि खदा। उणादौ मदिमन्दीतीरे खादिरः ४१२ ॥

**297.** गद व्यक्तायां वाचि। गदति जगाद। नेर्ङ्गदेति नेर्णत्वे प्रणिगदति प्रण्यगदत्। प्राण्यगदत् पदेन्तरे इत्यत्राडो वर्जनादाड्व्यवायेपि णत्वम्। यमभदेत्यनुपसर्गाद्ये गद्यम्। सोपसर्गाद्यणि निगाद्यो धर्मः। अचि गदः। भिदादित्वादङि गदा। अजातेरिति णिनि अनुगादी। नेर्नदेति वालि निगदः निगादः। उणादौ कनिगदीत्यः स्वरूपं द्वित्वं च गद्गदोव्यक्तवाक्। गद्गदमव्यक्तवचनम् ८। गदण् गर्जे। अदन्तः गदयति ॥

298. रद विलेखने । विलेखनमुत्पाटनम् । रदति रराद । अनटि रदनम् । नन्द्यादित्वादने रदनः । अचि रदः ॥

299. णद 300 क्ष्विदा अव्यक्ते शब्दे । शब्दमात्रे इत्यन्ये । पाठे धात्वादेर्णो न इति नत्वे नदति । अदुरुपसर्गेति णत्वे प्रणदति । नेर्ङ्गेति नेर्णत्वे प्रणिनदति । अचि नदः । गौरादित्वाद् ङ्याम् नदी । कर्तुर्णिनिति णिनि पूर्वपदस्थेति णत्वे च खर इव नदति खरणादी । असंज्ञायां तु खरनादी । नेर्नदेति घञि निनदः निनादः । उणादौ दाभूस्वणीत्यनुङि नदनुर्मेघः ७९३ । नदण् भासार्थः । नादयति प्रनादयति ॥

300. क्ष्विदा । क्ष्वेदति चिक्ष्वेद । यङि चेक्ष्विद्यते । यङ्लुपि चेक्ष्विदीति चेक्ष्वेत्ति । इटि क्ष्वेदिता क्ष्वेदितुम् । आदित्वात् क्तयोर्नेट् क्ष्विण्णः क्ष्विण्णवान् । न वा भावारम्भे इति वेटि क्ष्विण्णम् क्ष्वेदितमनेन प्रक्ष्विण्णः प्रक्ष्वेदितः । अत्र न डीङ्शीङितीटि किश्वाभावाद्गुणः । श्रीच्छाज्ञानेच्छार्थेति सत्यर्थे क्तः क्ष्विद्यते क्ष्विण्णः । अनुस्वारेदयमित्येके । तन्मते इडभावे क्ष्वेत्ता क्ष्वेत्तुम् । डान्तोयमित्येके । क्ष्वेडा ॥

301. अर्द गतियाचनयोः । अर्दति । अनात इत्यात्वे ने च आनर्द । सनि अयि र इति रस्य द्वित्वाभावे अर्दिदिषति । ग्रहादित्वाण्णिनि समर्दी । नन्द्यादित्वादने जनार्दनः । संनिवेरर्दः इति क्तयोर्नेट् समर्ण्णः न्यर्ण्णः व्यर्ण्णः । अविदूरेभेः अभ्यर्णे सेने । अविदूरादन्यत्र अभ्यर्दितश्चौरः पीडित इत्यर्थः । अत एव याचनस्थाने यातनेत्येके पठन्ति । अर्दितः खेदित इत्यर्थः । क्रय अर्दिण् हिंसायाम् । युजादेर्न वेति वा णिचि अर्दयति अर्दति ॥

302. नर्द 303 णर्द 304 गर्द शब्दे । नर्दति । नोपदेशत्वाण्णत्वाभावे प्रनर्दति ॥

303. णर्द । पाठे इति नत्वे नर्दति । णोपदेशत्वाण्णत्वे प्रणर्दति । ग्रहादित्वाण्णिनि न नर्दतीति अनर्दी । कर्तुर्णिन् सिंह इव विनर्दति सिंहविनर्दी ॥

304. गर्द । गर्दति जगर्द । क्ते सेट्त्वात् क्तेट इत्यः नर्दा गर्दा । उणादौ कृश्भिस्यभे गर्दभः ३२९ ॥

305. तर्द हिंसायाम् । तर्दति ततर्द । णके वितर्दिका वेदिः । क्ते सेट्त्वादः तर्दा ॥

306. कर्द कुत्सिते शब्दे । कर्दति चकर्द । क्ते सेट्त्वात् कर्दा । उणादौ सूपृप्रथीत्यमे कर्दमः ३४७ ॥

307. खर्द दशने । दशनमिह दन्दशूककर्तृकं दन्तकर्म स्वभावाच्च धातुः साधनप्रधानप्रयोगसमवायी । खर्दति चखर्द । अचि घञि च खर्दः । क्ते सेट्त्वात् खर्दा । पूर्वे तु खर्द दन्दशूके इति पठन्ति व्याचक्षते च दन्दशनशीलो दन्दशूक उच्यतेनेन च तद्विषया क्रिया लक्ष्यते क्रियार्थत्वाद्धातोः । दन्दशन इति यङन्तनिर्देशेपि तद्विषया क्रिया प्रतीयते । किं तु साधननिर्देशः साधनप्रधानप्रयोगसमवायित्वज्ञापनार्थ इति ॥

308. अदु बन्धने । उदित्वान्ने अन्दति । अनात इत्यात्वे ने च आनन्द । अचि अन्दः । क्ते सेट्त्वात् अन्दा । उणादौ कृपिचर्मीत्युः अन्दुर्गजपादशृङ्खलम् ८२१ ॥

309. इदु परमैश्वर्ये । परमैश्वर्यं परमेशनक्रिया । उदित्वान्ने इन्दति । गुरुनाम्यादेरित्यामादेशे इन्दां चकार । क्ते सेट्त्वात् इन्दा । अनटि इन्दनम् । उणादौ भीवृधीति रे इन्द्रः ३८७ ॥

310. विदु अवयवे । अवयव एकदेशः । अनेन स्वगता क्रिया लक्ष्यते । उदित्वान्ने विन्दति । यद्यभिधानमस्ति । विन्दुरिति तु दृश्यते यथा गण्डति गण्ड इति । उणादौ भृमृतृत्सरीत्युः बिन्दुः ७१६ ॥

311. णिदु कुत्सायाम् । पाठे इति णस्य नत्वे उदित्वान्ने निन्दति । णोपदेशत्वाण्णत्वे प्रणिन्दति । निसनिक्षनिन्दः कृति वेति वा णत्वे प्रणिन्दनम् प्रनिन्दनम् । निन्दहिंसेति णके निन्दनशीलो निन्दकः । क्ते सेट्त्वात् निन्दा ॥

312. टुनदु समृद्धौ । उदित्वान्ने नन्दति । नोपदेशत्वान्न णत्वम् प्रनन्दति । ननन्द । णौ नन्द्यादिभ्य इत्यने नन्दनः । अचि नन्दतीति नन्दः । आपि नन्दा तिथिः गौरादित्वाद् ङ्याम् नन्दी नन्द एव । प्रज्ञायणि नान्दः । स्त्रियां नान्दी । नन्दोस्यास्तीति नन्दी । णके नन्दकः । ट्विताद् ट्वितोथुः नन्दथुः । उणादौ रुहिनन्दीत्यन्ते नन्दन्तः सखा । नन्दन्ती सखी २२० । तृजीति णावन्ते नन्दयन्तो राजा २२१ । हृषिपुषीति णाविलौ नन्दयित्नुः पुत्रः ७९७ । यतिननन्दिभ्यां दीर्घश्चेत्यृः ननान्दा ननान्दरौ ८६६ ॥

313. चदु दीप्त्याह्लादयोः । आह्लाद आह्लादनमानन्दोत्पादनमित्यर्थः । उदित्वान्ने चन्दति चचन्द । रम्यादिभ्य इत्यनटि चन्दति दीप्यते आह्लादयति वेति

चन्दनम् । उणादौ भीवृधीति रे चन्द्रः ३८७ । मदिमन्दीतीरे चन्दिरश्चन्द्रः ४१२ । छन्द इति तु छदिवहिभ्यामित्यसि छादयतेः ९६४ ॥

314. त्रदु चेष्टायाम् । उदित्त्वान्ने त्रन्दति तत्रन्द ॥

315. कदु 316 क्रदु 317 क्लदु रोदनाह्वानयोः । उदित्त्वान्ने कन्दति चकन्द । अचि कन्दो मूलम् । उणादौ ऋच्छिचटीत्यरे कन्दरा ३९७ । भृमृतृत्सरीत्सुः कन्दुः पाकस्थानम् ७१६ । कन्दुक इति तु क्रमितिमिर्दोन्तश्चेत्युके कमेः ५४ ॥

316. क्रदु । उदित्त्वान्ने क्रन्दति चक्रन्द । नन्द्यादिभ्य इत्यने संक्रन्दनः । घञि आक्रन्दः ॥

317. क्लदु । उदित्त्वान्ने क्लन्दति चक्लन्द । कदुङ् क्रदुङ् क्लदुङिति घटादावात्मनेपदिनः कन्दते क्रन्दते क्लन्दते ॥

318. क्लिदु परिदेवने । परिदेवनं शोचनम् । उदित्त्वान्ने क्लिन्दति क्लिन्द्यते । क्ते क्लिन्दितः । क्लिदुङ् परिदेवने । क्लिन्दते । क्लिदौच् आर्द्रभावे । क्लिद्यति क्लिन्नः ॥

319. स्कन्दृं गतिशोषणयोः । स्कन्दति स्कद्यते चस्कन्द चस्कन्दतुः चस्कन्दुः । वेः स्कन्दोऽक्तयोरिति वा षत्वे विष्कन्दति विस्कन्दति । परेरिति क्तयोरपि वा षत्वे परिष्कण्णः परिस्कन्नः । ऋदित्त्वाद्वाङि अस्कदत् अस्कान्त्सीत् । अनुस्वारेत्त्वान्नेट् स्कन्त्वा स्कन्त्स्यति । वञ्चस्रंसेति पूर्वस्य न्यागमे चनीस्कद्यते । यङ्लुपि चनीस्कन्दीति चनीस्कन्ति । अचि स्कन्दः प्रस्कन्दः । स्कन्दस्यन्द इति क्त्वः किरवाभावान्नलोपाभावे कन्त्वा प्रस्कन्द्य । यादेः क्त्वो नाकित्त्वमित्येके प्रस्कद्य । भुजिपत्यादिभ्य इत्यनटि प्रस्कन्दत्यस्मादिति प्रस्कन्दनः । विशपतेति णमि गेहावस्कन्दमास्ते गेहं गेहमवस्कन्दमास्ते गेहमवस्कन्दमवस्कन्दमास्ते । उणादौ स्कन्द्यमिभ्यां धः बहुलाधिकाराद्दस्य लुक् स्कन्धोऽसः २५१ । स्कन्देर्धे चेत्यसि स्कन्धः स्कन्धसी ९६० । आस्कन्द्यते चनीस्कन्द्यते इति लक्ष्ये नलोपो न दृश्यते । स चेच्छिष्टसंमतस्ततो नलोपाभावश्चिन्त्य इति वाचकवार्त्तिकम् ॥

अथ धान्तास्त्रयः ॥

320. षिधू गत्याम् । षः स इति सत्वे सेधति सिषेध । गतौ सेध इति न षत्वं णौ परिसेधयति गां गमयतीत्यर्थः । गतेरन्यत्र स्यासेनीति षत्वे प्रतिषेधति पापात् अनेकार्थत्वाद्धायं निषेधेऽपि वर्तते । षोपदेशत्वाद्गतेरन्यत्र नाम्यन्तस्थेति षत्वे सिषेध । इटि सेधिष्यति । ऊदित्त्वाद्वूदितो वेति क्त्वि वेटि सिद्ध्वा सेधित्वा

सिधित्वा। वौ व्यञ्जनादेरितीटि क्त्वो वा कित्त्वम्। सनि सिसिधिषति सिसेधिषति। क्ति वेट्त्वात् क्तयोर्नेट् सिद्धः सिद्धवान्। निरनुबन्धपाठे तु सिधितः। षिधूंच् संराद्धौ। सिध्यति निसिध्यति। स्थासेनीत्यत्र सेधनिर्देशान्नात्र षत्वम्। सेद्धा सेत्स्यति॥

**321.** षिधौ शास्त्रमाङ्गल्ययोः। शास्त्रं शास्त्रविषयं शासनम्। माङ्गल्यं मङ्गलविषया क्रिया। अनयोरेवार्थयोरयमौदित्। अर्थान्तरे पुनरूदित्पूर्वक एव। अन्यथा तत्पाठोऽनर्थकः स्यात्। अर्थान्तरेप्यनेनैवेड्विकल्पस्य सर्वत्रैव सिद्धत्वात्। षः स इति सत्वे सेधति। षोपदेशत्वात्तस्य कृतत्वे नाम्यन्तस्थेति षत्वम् सिषेध। स्थासेनीति षत्वे अभिषेधति। यङ्लुपि अभिषेषिधीति। अड्व्यवाये अभ्यषेधत्। घञि सेधः शोभनः सेधः सुषेधः। निर्दुः सोरिति षत्वम्। औदित्त्वादूदौदित इति वेट् सेद्धा सेधिता। परोक्षायां स्क्रसृभ्रिति नित्यमिट् सिषिधिव सिषिधिम। घसेकस्वरेति नियमात् कसौ नेट् सिषिध्वान्। वेट्त्वाद्वेटोपत इति क्तयोर्नेट् सिद्धः सिद्धवान्। उणादौ ऋज्यजीति किति रे सिध्रो वृक्षः ३८८। कपि सिध्रकः॥

**322.** शुन्ध शुद्धौ। शुन्धति। इटि शुधितः शुधितवान्। शुधंच् शौचे। शुध्यति शुद्धः शुद्धवान्। शुन्धिण् शुद्धौ। युजादेर्न वेति वा णिचि शुन्धयति शुन्धितः शुन्धते शुधितः॥

अथ नान्ता नव सेटश्च॥

**323.** स्तन **324** धन **325** ध्वन **326** षन **327** स्वन **328** वन शब्दे स्तनति तस्तान। इटि स्तनिता। अचि स्तनः। शब्दे घटादित्वाण्णिगि ह्रस्वे स्तनयति। अन्यत्र स्तानयति। घञि अभिनिष्टानो विसर्गः। अभिनिष्टान इति षत्वम्। असमानलोपे इति सन्वद्भावे अतिस्तनत्। स्तनण् गर्जे। अदन्तः स्तनयति। समानलोपित्वात्सन्वद्भावाभावे अतस्तनत्॥

**324.** धन। धनति। अचि धनम्। इटि धनिता धनिष्यति। मन्वनिति धनिप् धन्वा। बाहुलकादात्वाभावः। उणादौ कृपिचमीत्युः धनुर्ज्या चापश्च ८२९। रुद्यर्तीत्युसि धनुः ९९७॥

**325.** ध्वन। ध्वनति दध्वान। यङि दन्ध्वन्यते। इटि ध्वनिता ध्वनिष्यति। अचि ध्वनः। क्ते क्षुब्धविरिब्धेति निपातनात्तमसि नेट् ध्वान्तं तमः। ध्वनितमन्यत्। शब्दे घटादित्वाण्णौ ह्रस्वे ध्वनयति। अन्यत्र ध्वानयति। उणादौ पदिपठीति इः ध्वनिः ६०७। ध्वनण् शब्दे। अदन्तः ध्वनयति॥

326 चन । चनति । हिंसायां घटादित्वाण्णौ ह्रस्वे चनयति ॥

327 स्वन । दन्त्यादि स्वनति सस्वान । व्यवात्स्वनोऽशने इति षत्वे विष्वणति अवष्वणति विषष्वाण अवषष्वाण व्यष्वणत अवाष्वणत् । अशनादन्यत्र न षत्वम् विस्वनति मेघ । परोक्षायां जॄभ्रमेति वैत्वे स्वेनतु सस्वनतु । अवतंसने घटादित्वाण्णौ ह्रस्वे स्वनयति । अन्यत्र स्वानयति । सेट्त्वात् स्वनिता स्वनिष्यति । न वा क्वणेति वालि स्वन स्वान । क्षुब्धविरिब्धेति मनसि क्ते नेट् स्वान्त मन । स्वनितमन्यत् । श्वसजपेति आङ्पूर्वात् क्ते वा नेट् आस्वान्त आस्वनितो मृदङ्ग आस्वान्तम् आस्वनित मन । नेर्नदेति वालि निस्वन निस्वान ॥

328 वन । वनति ववान । यङि वन्वन्यते । यङलुपि वन्वनीति । तसि वन्वान्त । यमिरमीत्यत्र वनतीति तिन्निर्देशान्नलोपाभावेऽहन्पञ्चमेति दीर्घत्वम् । इटि वनिता वनिष्यति । अचि मृगविहगशब्दैर्वनतीति वनम् ॥

329 वन 330 षन भक्तौ । भक्तिर्भजनम् । वनिरर्थभेदार्थं पुनरिहाधीत । वनति । अनटि सवननम् । क्तौ यमिरमीति नलोपे वति । तिकि न तिकीति दीर्घनलोपाभावे वन्यात् वन्ति । क्ते वनितम् । वनिता । उणादौ जनरकर्करेति निपातनादरे वानर ४०३ । वनिवपिभ्यां णिदितीरे वानीर ४२१ । वनूयि याचने । वनुते ॥

330 षन । ष स इति सत्वे सनति ससान सेनतु सेनु । ये न वेति वात्वे सायते सन्यते । यङि सासायते संसन्यते । यङ्लुपि संसनीति । तसि आ खनीत्याત्वे ससात । इटि सनिता सनिष्यति । सनि इवृधेति वेटि सिसनिषति । णिस्तोरेवेति नियमादत्र न षत्वम् । सनीत्यात्वे सिषासति । अत्र षोपदेशत्वान्नाम्यन्तस्थेति षत्वम् । णौ ङे असीषणत् । आ खनीत्यात्वे साति । तिकि तौ सनस्तिकीति वात्वनलुकौ साति सति । पक्षेऽहन्पञ्चमस्येति दीर्घे सान्ति । तदेव सनतेस्तिकि त्रैरूप्यम् । उणादौ कृवापाजीत्युणि सानु १। षणूयी दाने । सनोति सनुते । तिकि साति सति । पक्षे तनादित्वात्तिकि दीर्घश्चेति दीर्घनलुगभावे सन्ति ॥

331 कनै दीप्तिकान्तिगतिषु । दीप्तिः प्रकाशः । कान्तिः शोभा । कनति चकान । इटि कनिष्यति । ऐदित्त्वात् क्तयोर्नेट् कान्त । शील्यादित्वात्सत्यर्थे क्त कान्तवान् । वनि मुकावा । क्विपि सुका सुकानौ । उणादौ दृकृभ्रित्यके कनकम् २७ । कनेरीनक कनीनिका ७३ । स्थाऽमेति ये कन्या ३८७ ॥

अथ पान्ताः पञ्चदश गुपौ वेट् तपं सृपृं अनिटौ शेषाः सेटः ॥

332. गुपौ रक्षणे । गुपौधूपेति स्वार्थे आयः गोपायति । अशावि ते वेति वाये गोपायां चकार जुगोप गोपायिता । पक्षे औदित्त्वादिटि गोप्ता गोपिता । कुप्य-भिद्योध्येति निपातनात् क्यपि कुप्यं सुवर्णरजताभ्यामन्यद्धनम् । अन्यत्र शकितकीति ये गोप्यम् । आये शंसिप्रत्ययादित्यः गोपाया । पक्षे क्तौ गुप्तिः । गुपि गोपन-कुत्सनयोः । जुगुप्सते । गुपच् व्याकुलत्वे । गुप्यति । गुपण् भासार्थः । गोपयति गोपना ॥

333. तपं 334 धूप संतापे । तपति । निसस्तपे इति पत्वे निष्टपति । व्युदस्तप इत्यात्मनेपदम् वितपते उत्तपते । वितपति उत्तपति पृष्ठम् । ततापे तेपतुः तेपुः । यङि तातप्यते । यङ्लुपि तातपीति तातप्ति । अनुस्वारेत्त्वान्नेट् तप्ता तप्तुम् । तपेस्तपः कर्मकादिति कर्तर्यात्मनेपदं क्यश्च तप्यते तपः साधुः अर्जयतीत्यर्थः । अ-तप्त तपः साधुः । अत्र तपः कर्त्रनुतापे चेति ञिर्न भवति । अन्ववातप्त पापः पापेन कर्मणा । अत्रानुतापे ञिच् न भवति । नन्द्यादिभ्य इत्यने तपनः । शकितकीति ये तप्यम् । ललाटवातेति खशि ललाटंतपः । द्विषंतपपरंतपाविति निपातनात्खे द्विषं-तपः परंतपः । भृवृजीति खे सर्वंतपः । उणादौ असित्यसि तपः तपसी ९६१ ॥

334. धूप । स्वार्थे आये धूपायति । अशिति धूपायां चकार दुधूप धूपा-यिता । पक्षे नित्यमिटि धूपिता । धूपण् भासार्थः । धूपयति ॥

335. रप 336 लप 337 जल्प व्यक्ते वचने । रपति रराप रेपतुः रेपुः रपिता रपितुम् । आसुयुवपीति घ्यणि राप्यः अभिराप्यः ॥

336. लप । लपति ललाप लेपतुः लेपुः लपिता लपितुम् । घ्यणि लाप्यः अभिलाप्यः । करणेनटि लपनं मुखम् । क्ते लपितम् । घञि आलापः संलापः प्रलापः । मथलप इति घिनणि प्रलपनशीलः प्रलापी ॥

337. जल्प । जल्पति जजल्प । क्रियाव्यतिहारे इत्यत्र शब्दार्थवर्जनान्नात्म-नेपदम् व्यतिजल्पति । वृङ्भिक्षीति टाके जल्पाकः जल्पाकी । घञि जल्पः ॥

338. जप मानसे च । मनो निर्वर्त्ये वचने । चकाराद्व्यक्ते वचने । जपति जजाप जेपतुः जेपुः । इटि जपिता । गृलुपेति यङि गर्हितं जपति जञ्जप्यते । अत्र जपजभेति पूर्वस्य मुरन्तः । कृवृषिमृजीति वा क्यपि जप्यम् । पक्षे घ्यणि जाप्यम् । विकल्पबलादेवात्र पवर्गलक्षणो यो न भवति । शोकापनुदेति निपातनात्के कर्णेजपः सूचकः । अमूर्धमस्तकेति सप्तम्या अलुप् । अन्यत्र तृचि कर्णेजपिता मन्त्री । श्वस-

जपेति क्तयोर्वा नेट् जप्तः जपितः। यजिजपीति यङन्ताद्वुके जञ्जपूकः। व्यधज-पेत्यनुपसर्गादलि जप्यते इति जपः। सोपसर्गाद्धञि उपजापः॥

**339.** चप सान्त्वने। चपति चचाप चेपतुः चेपुः। अचि चपो वंशः। तस्य विकारः चापं धनुः। उणादौ दिव्यवीत्यटे चपटो विपुलः १४२। चपेरेटः चपेटः १६८। मृदिकन्दीत्यले चपलः ४६९॥

**340.** षप समवाये। षः स इति षस्य सत्वे सपति ससाप सेपतुः सेपुः। इटि सपिता सपिष्यति। षोपदेशत्वाण्णिस्तोरेवेति षत्वे सिषापयिषति। येषां तु नायं षोपदेशस्तेषां षत्वाभावे सिसापयिषति। उणादौ प्रुस्नायजीति तौ सप्तिरश्वः ६४६। षप्यशौभ्यां तन् सप्त घटाः ९०३। चान्तोयमिति चन्त्रः सचति। षलि-सचेरिवः सचिवः ५२२। षचि सेचने। सचते॥

**341.** सृप्लृं गतौ। दन्त्यादिः सर्पति। क्ये सृप्यते। ससर्प ससृपतुः ससृपुः। लृदित्त्वादङि असृपत्। अनुस्वारेत्त्वान्नेट् सर्प्ता सर्प्तुम्। लिहादिभ्य इत्यचि सर्पः। कुटिलं सर्पतीति गत्यर्थात्कुटिले इति यङचचि सरीसृपः। षोपदेशाभावादत्र न षत्वम्। ऋदुपान्त्यादिति क्यपि सृप्यम्। भावे षञि संसर्पा (विपादका)। अभिधानादस्य स्त्रीत्वम्। उणादौ ऋज्यजितञ्चीति किति रे सृप्रा काचिन्नदी ३८८। रुच्यर्चिशुचीतीसि सर्पिः ९८९॥

**342.** चुप मन्दायाम्। गतावित्यनुवृत्तेर्मन्दायां गतौ। चोपति किंचिच्चल-तीत्यर्थः। चुचोप। अनटि चोपनम्। इटि चोपिता चोपिष्यति। उणादौ क्षुचुपीति कित्यः चुप्यं मन्दगमनम् ३०१। ऋज्यजीति किति रे चुप्रो वायुः ३८८॥

**343.** तुप **344** तुम्प **345** त्रुप **346** त्रुम्प **347** तुफ **348** तुम्फ **349** त्रुफ **350** त्रुम्फ हिंसायाम्। तोपति तुतोप। वौ व्यञ्जनादेरिति क्त्वास-न्नोरिटि वा किल्वे तुपित्वा तोपित्वा तुतुपिषति तुतोपिषति। उति शवर्हाञ्च इति क्तयोर्वा किच्वे तुपितम् तोपितमनेन॥

**344.** तुम्प। तुम्पति। प्रात्तुम्पतेर्गवीति सटि प्रस्तुम्पति गां वत्सः। येषां तु प्रात्तुम्पतेः कपीति सूत्रं तेषां कपि समासान्ते सटि प्रस्तुम्पकः। क्तयोः तुपितः तुपितवान्। भावे क्ते तुपितम्। अत्र कित्त्वानिमित्तत्वादुदुपान्त्यत्वस्य संनिपातलक्ष-णत्वेनोति शवर्हाञ्च इति न कित्त्वविघातकत्वं तथा च न गुणः॥

**345.** त्रुप। त्रोपति तुत्रोप त्रुपित्वा त्रोपित्वा तुत्रुपिषति तुत्रोपिषति॥

**346.** त्रुम्प। त्रुम्पति तुत्रुम्प त्रुपितः त्रुपितवान्॥

अथ फान्ताः सप्त सेटश्च ॥

347· तुफ । तोफति तुतोफ । क्त्वोः तुफितः तुफितवान् ॥

348· तुम्फ । तुम्फति तुतुम्फ तुम्फिता । ऋतृषेति इटि क्त्वो वा कित्वे । तुफित्वा तुम्फित्वा ॥

349· त्रुफ । त्रोफति तुत्रोफ त्रुफितः त्रुफितवान् ॥

350· त्रुम्फ । त्रुम्फति तुत्रुम्फ त्रुफित्वा त्रुम्फित्वा । तुप तुम्प तुफ तुम्फ तुदादावपीत्यन्ये तुपति । शे नलुगनिष्टेश्च प्रस्तुम्पति गौः । तुफति तुम्फति ॥

351· वर्फ 352 रफ 353 रफु 354 अर्ब 355 कर्ब 356 खर्ब 357 गर्ब 358 चर्ब 359 तर्ब 360 नर्ब 361 पर्ब 362 बर्ब 363 शर्ब 364 षर्ब 365 सर्ब 366 रिबु 367 रबु गतौ । समद्रशाप्येते गत्यर्थाः फान्तास्त्रयोपि हिंसायामिति कण्वः । वर्फति ॥

352· रफ । रफति ॥

353· रफु । उदित्वान्ने रम्फति ॥

अथ बान्ता अष्टादश सेटश्च ॥

354· अर्ब । अर्बति । अनात इत्यात्वे ने च आनर्ब ॥

355 कर्ब । कर्बति । उणादौ दिव्यवीत्यट्टे कर्बटं क्षुद्रपत्तनम् १४२ । यादयसीत्युरे कर्बुरः ४२३ ॥

356· खर्ब । खर्बति । अचि खर्बः ॥

357· गर्ब । गर्बति । घञि गर्बः ॥

358· चर्ब । चर्बति । घञि चर्बः । अनटि चर्बणम् ॥

359· तर्ब । तर्बति ॥

360· नर्ब । नर्बति ॥

361· पर्ब । पर्बति ॥

362· बर्ब । ओष्ठ्यादिः । बर्बति । उणादौ ऋच्छिचटीत्यरे बर्बरः बर्बरी । कुञ्चिताः केशाः २९७ ॥

363· शर्ब । तालव्यादिः । शर्बति ॥

364· षर्ब । षोपदेशः । षः स इति षस्य सत्वे सर्बति । षोपदेशत्वाण्णिस्तोरेवेति षत्वे सिषर्बयिषति ॥

365 सर्व । सर्वति । सोपदेशत्वात्षत्वाभावे सिसर्वयिषति ॥

366 रिबु । उदित्त्वान्ने रिम्बति ॥

367 रबु । उदित्त्वान्ने रम्बति । अचि रम्ब करम्ब । क्ते करम्बित॰ । घर्बेत्यपि केचित्पठन्ति स पुनरनार्षत्वादुपेक्षित । अर्वेत्यादौ रेफस्थाने नकार कौशिका मन्यन्ते ॥

368 कुबु आच्छादने । उदित्त्वान्ने कुम्बति । भीषिभूषीति णायङि कुम्बा । कुबुण् आच्छादने । कुम्बयति ॥

369 लुबु 370 तुबु अर्दने । उदित्त्वान्ने तुम्बति । उणादौ ण्यन्तास्त्वरेभ्य इति इ लुम्बि [ ६०६ ] ॥

370 तुबु । उदित्त्वान्ने तुम्बति । अचि गौरादित्वाड् ड्याम् तुम्बी । लुबु तुबुण् अर्दने । लुम्बयति । तुम्बयति ॥

371 चुबु वक्त्रसयोगे । वक्त्रेण सबन्धो

नमस्तुङ्गशिरश्चुम्बि॰ ॥ इत्युपचारात् ।

उदित्त्वान्ने चुम्बति चुचुम्ब चुम्बितुम् ॥

अथ भान्ता अष्टौ यमवर्जा सेटश्च ॥

372 सृभू 373 सृम्भू 374 लिभू 375 षिम्भू 376 भर्भ हिंसायाम् । आद्यात्रयो दन्त्याद्याश्चतुर्थ षोपदेश । सर्भति सिसर्भयिषति । ऊदित्त्वात् क्त्वि वेट् सृब्ध्वा सर्भित्वा ॥

373 सृम्भू । सृम्भति सिसृम्भयिषति । ऊदित्त्वात् सृब्ध्वा सृम्भित्वा ॥

374 लिभू । लेभति सिलेभ सिसेभतु सिलिभु सिलेभयिषति । ऊदित्त्वात् लिब्ध्वा । पक्षे वौ व्यञ्जनादेरिति इट् वा कित्त्वे लिभित्वा लेभित्वा । सनि सिलिभिषति सिलेभिषति । क्त्वि वेट्त्वात् क्तयोर्नेट् लिब्ध लिब्धवान् ॥

375 षिम्भू । ष स इति षस्य सत्वे सिम्भति । षोपदेशत्वाद्याम्यन्तस्येति षत्वे सिषिम्भ । ऊदित्त्वात् सिब्ध्वा सिम्भित्वा । वेट्त्वात क्तयोर्नेट् सिब्ध सब्धवान् ॥

376 भर्भ । भर्भति बभर्भ । इटि भर्भिता ॥

377 शुम्भ । भाषणे च । चकाराद्धिंसायाम् । भासने चेत्यन्ये । तालव्यादि । शुम्भति शुशुम्भ । क्ते सेट्त्वात् क्तेन्इत्य शुम्भा शोभेत्यर्थ । शुभ शुम्भत् शोभार्थे । शुभति । षोपदेशोयमिति शुन । सुम्भति । कुषुर्यादेचि कुसुम्भ लक्ष्य च ।

सावष्टम्भनिशुम्भसुम्भन० ॥ इति ॥

**378.** यभं **379** जभ मैथुने । मिथुनस्य कर्मणि भावे वा । आद्योन्तस्यादिरन्यथ चवर्गादिः । यभति । क्रियाव्यतिहारे इत्यात्मनेपदे व्यतियभते । क्ये यभ्यते । ययाभ येभतुः येभुः । अनुस्वारेत्त्वान्नेट् यब्धा यब्धुम् । घञि याभः । शाकितकीति ये यभ्यम् ॥

**379.** जभ । जभः स्वरे इति ने जम्भति जजम्भ । इटि जम्भिता जम्भितुम् । णके जम्भकः । घञि जम्भो वर्तते । शाकितकीति ये जभ्यम् । गृलुपेति गर्ह्यार्थाद्यङि जपजभेति पूर्वस्य म्वागमे च जञ्जभ्यते । क्तयोरिटि नागमे नलुकि च जभितः जभितवान् । जभेड् गात्रविनामे । जम्भते ॥

अथ मान्ताः सप्तदश यमूंणमंगमॄंवर्जाः सेटश्च ॥

**380.** चमू **381** छमू **382** जमू **383** झमू **384** जिमू अदने । पञ्चाप्यूदितः *ष्ठिवूक्लम्विति दीर्घत्वे आचामति । आङ्पूर्वस्यैव दीर्घत्वविधानात्* चमति उचमति विचमति । आचचाम । अमोकम्यमीति णौ ह्रस्वाभावे चामयति आचामयति । आसुयुवपीति घ्यणि आचाम्यम् । मोकमीत्यत्राचमो वर्जनाद्वृद्धिनिषेधाभावे णके आचामकः । घञि आचामः । ऊदित्वात् क्त्वि वेट् चान्त्वा चमित्वा । वेट्त्वात् क्तयोर्नेट् आचान्तः आचान्तवान् । उणादौ ऋच्छिचटीस्वरे चमरः ३९७ । प्रज्ञाद्यणि चामरः । तप्यणीत्यसे चमसः सोमपात्रम् । गौरादित्वाड् ङ्याम् चमसी मुद्गादिभिस्तकृता ९६९ । कृषिचमीत्यूः चमूः ८२९ ॥

**381.** छमू । छमति चछाम । अमोकम्यमीति णौ ह्रस्वे छमयति । ऊदित्वात् छमित्वा छान्त्वा ॥

**382.** जमू । जमति जजाम । णौ ह्रस्वे जमयति । ऊदित्वात् जमित्वा जान्त्वा ॥

**383.** झमू । झमति जझाम झमयति झमित्वा झान्त्वा । उणादौ झमेर्झः झञ्झा १३७ ॥

**384.** जिमू । जेमति । अनटि जेमनम् । घञि जेमः । ऊदित्वात् जीन्त्वा । पक्षे वौ व्यञ्जनादेरिति वा किन्त्वे जिमित्वा जेमित्वा ॥

**385.** क्रमू पादविक्षेपे पादन्यासे । क्रमो दीर्घ इति दीर्घे क्रामति चक्राम । क्रमोनुपसर्गादिति वात्मनेपदम् क्रमते क्रामति । वृत्तिसर्गतायने ऋक्ष्यस्य क्रमते बुद्धिः न प्रतिहन्यते इत्यर्थः । युद्धाय क्रमते उत्सहते इत्यर्थः । प्राज्ञे शास्त्राणि

क्रमन्ते स्फीतीभवन्तीत्यर्थः । परोपात् पराक्रमते उपक्रमते । वेः स्वार्थे साधु विक्रमते हंसः । प्रोपादारम्भे प्रक्रमते उपक्रमते भोक्तुम् । आङो ज्योतिरुद्गमे आक्रमते नभोऽर्कः । इटि क्रमिष्यति । क्रम इत्यनात्मनेपदे इड्नियमादात्मनेपदे नेट् प्रक्रंसीष्ट उपक्रंसीष्ट । तुरिति तृप्रत्यये नात्मनेपदविषयादिड्नियमादात्मनेपदाविषयान्नेट् प्रक्रन्ता उपक्रन्ता । गत्यर्थात्कुटिले इति यङि चङ्क्रम्यते । व्यञ्जनाद्घञि क्रामन्त्यनेनेति क्रमः । मोऽकमीति वृद्धेरभावः । भावे घञि क्रमः प्रक्रमः उपक्रमः । चङ्क्रमो यङ इत्यने चङ्क्रमणः । शकधृषेति तुमि प्रक्रमते भोक्तुम् उपक्रमते भोक्तुम् । ऊदित्त्वात् क्त्वि वेट् क्रान्त्वा क्रान्त्वा । अत्र क्रमः क्त्वि वेति वा दीर्घः । पक्षे क्रमित्वा । वेट्त्वात् क्तयोर्नेट् क्रान्तः क्रान्तवान् । उणादौ क्रमेः क्रुम च वेत्युके क्रमुको बन्धनः क्रमुकः पूगतरुः ५३ । क्रमितमिस्तम्भेरिच्च नमेस्तु वेति इः क्रिमिः ६१३ । क्रमिगमिक्षमेस्तुमाद्यातः क्रान्तुं गमनं तुमर्थश्च १४२ ॥

386. यमूं उपरमे । उपरमो निवृत्तिः । गमिषद्यमश्छः यच्छति । ययाम । अनुस्वारेत्त्वान्नेट् यन्ता । यमोऽपरिवेषणे इति णौ ह्रस्वे यमयति केशान् । परिवेषणे तु यामयत्यतिथीन् । यमः स्वीकारे इत्युपादात्मनेपदम् उपयच्छते कन्याम् । आङो यमहनः स्वेऽङ्गे च आयच्छते आयच्छते पाणिम् । समुदाङो यमेरग्रन्थे इति फलवत्कर्तर्यात्मनेपदम् संयच्छते उद्यच्छते आयच्छते रज्जुम् । ईगित इत्यात्मनेपदापवादस्याणिगि प्राणिकर्तृकादिति परस्मैपदस्यापवादः परिमुहायमेति फलवत्कर्तर्यात्मनेपदम् आयामयते सर्पम् । यमः सूचने इति सिचः किद्वद्भावे उदायत उदायसाताम् । वा स्वीकृतौ उपायत उपायंस्त कन्याम् । यमिरमिनम्यातः सोऽन्तश्च अयंसीत् अयंसिष्टाम् । यङि यंयम्यते । यङ्लुपि यंयमीति । यममदगदोऽनुपसर्गादिति ये यम्यम् । उपसर्गात्तु घ्यणि न आयाम्यम् प्रयाम्यम् । यानंयमो यमे इति निपातनात्त्वे यानंयमो यतः । अन्यत्रापि याम्यामः । क्तयोर्यमिरमिनमितनादिति लोपे यतः यतवान् । नाश यमयस इति घिनणि प्रयमणशीलः प्रयामी आयामी । संनिव्युपाद्यम इति वालि संयमः संयामः नियमः नियामः वियमः वियामः उपयमः उपयामः । न वा क्वणेत्यनुपसर्गाद्वालि यमः यामः । क्तौ यतिः । यपि चा म इति वान्तलोपे प्रयम्य प्रयत्य । ऊदित्त्वात् क्त्वि वेट् यत्वा यमित्वा । ऊदित्त्वं नेच्छन्त्येके । निवृत्तौ नासीत्यकटि यमकम् । उणादौ यम्यर्जात्सुने यमुना २८८ । हुयामेति त्रे यन्त्रम् ४५१ । मृदिकन्दीत्यने यमनम् ४६९ ॥

387. स्यमू शब्दे । स्यमति । नृधमेति वैत्वे स्येमतुः सस्यमतुः स्येमुः

-सस्यमुः । व्येस्यमो यडीति स्यूति सेसिम्यते । अमोकम्यमिचम इति णौ ह्रस्वे स्यमयति । इटि स्यमिता स्यमितुम् । ऊदित्वात् क्त्वि वेट् स्यान्त्वा स्यमित्वा । वेट्त्वात् क्तयोर्नेट् स्यान्तः स्यान्तवान् । उणादौ स्यमेः सीम चेतीके सीमिको वृक्षः ४४ । स्यमिकषीतीके स्यमीको वृक्षः ४६ । स्यमेः सिमादेशो च सिमीकः सूक्ष्मकृमिः ४४ ॥

388. णमं प्रह्वत्वे । प्रह्वत्वं नम्रत्वम् । पाठे इति णस्य नत्वे नमति । णोपदेशत्वादद्रुरुपसर्गेति णत्वे प्रणमति । कर्मकर्तर्येकधाताविल्यात्मनेपदे नमते दण्डः स्वयमेव अनंस्त दण्डः स्वयमेव । अत्र भूषार्थेति प्रतिषेधात् क्यो ञिच न भवति । कर्मणि क्ये नम्यते । ननाम नेमतुः नेमुः । यमिरमिनम्यातः सोन्तश्च अनंसीत् अनंसिष्टाम् । ज्वलह्वलेत्यनुपसर्गस्य णौ वा ह्रस्वे नमयति नामयति । सोपसर्गस्य तु अमोकम्यमीति नित्यं ह्रस्वे प्रणमयति उन्नमयति । यङि नन्नम्यते । यङ्लुपि नन्नमीति नन्नान्ति । अनुस्वारेत्त्वान्नेट् नन्ता नन्तुम् । क्तयोर्यमिरमीत्यन्तलोपे नतः नतवान् । आङ्युयपीत्याङ्पूर्वाद् घ्यणि आनाम्यः । स्म्यजसेति रे नमनशीलो नम्रः । उणादौ नमेर्नाक चेत्युः नाकुर्वल्मीकः ७२० । नमेः प चेति तृः नप्ता ८६२ । सात्मनात्मनिति निपातनान्मनि नाम ९१६ । अंसिवसि नमः ९६२ ॥

389. षम 390 ष्टम वैक्लव्ये । वैक्लव्यं कातरत्वम् । षः स इति सत्वे समति ससाम । इटि समिता समितुम् । अमोकम्यमीति णिगि ह्रस्वे समयति । अचि समः । निर्दुः सुवेरिति षत्वे विषमः । षोपदेशत्वाण्णिस्तोरेवेति षत्वे सिषमायिषति ॥

390. ष्टम । षः स इति षस्य सत्वे स्तमति तस्ताम । इटि स्तमिता स्तमितुम् । णौ स्तमयति । षोपदेशत्वात् तिष्टमयिषति । अचि स्तमः । स्तनध्वनस्वनस्यमूषमष्टमान् षडव्यदन्तान् सभ्या अभ्युपागमन् ॥

391. अम शब्दभक्त्योः । भक्तिर्भजनम् । अमति आम आमतुः आमुः । अमोकम्यमीत्यत्रामो वर्जनाण्णिगि ह्रस्वाभावे आमयति । मोकमीति ञ्णिति कृति वृद्धिनिषेधाण्णके अमकः । घञि अमः । आम इति स्वाङ्पूर्वस्य घञि अमण् रोगे इत्यस्य वा णिच्यलि । सेट्त्वात् अमिता अमितुम् । श्वसजपेति क्तयोर्वा नेट् अभ्यान्तः अभ्यमितः । जीणृदृक्षीतीनि अभ्यमनशीलो अभ्यमी । उणादौ दम्यमीति ते अन्तः २०० । निजिश्रिति रे दीर्घे च आम्रः ३९२ । ह्वयामेति त्रे अन्त्रम् ४५१ । वृगुनक्षीत्यत्रे अमत्रम् ४५६ । वन्धिवन्दीतीत्रे आमित्रः ४६९ । पाठान्-

मीति शे अंशः ५२७ । मावावद्यमीति से अंसः ५६४ । अमेर्भहौ चान्ताविस्यसि अम्भः अंहः ९६२ ॥

**392.** अम **393** द्रम **394** हम्म **395** मीमृ **396** गमॢं गतौ । अमिरुदाहृत एव । अर्थभेदार्थं तु पुनः पाठः ॥

**393.** द्रम । द्रमति दद्राम । व्यञ्जनादेरिति वा वृद्धेर्न श्विजामिति प्रतिषेधात् अद्रमीत् । द्रमक्रमो यङ इत्यने दन्द्रमणशीलो दन्द्रमणः । इटि द्रमिता द्रमितुम् । उणादौ कल्यनीतीले द्रमिलः ४८१ ॥

**394.** हम्म । हम्मति । ह्वरादेर्प्यिति भाप्याद्द्विर्बद्धो मकारः । हम्मति जहम्म । इटि हम्मिता हम्मितुम् । यङि जंहम्म्यते । अत्र मुरतोनुनासिकस्येत्यत्रानुनासिकजातिपरिग्रहादनोनुनासिकासत्त्वे पूर्वस्य मुरन्तः । केचित्तु म्वागमं नेच्छन्ति । तन्मते जाहम्म्यते ॥

**395.** मीमृ । मीमति मिमीम । इटि मीमिता मीमितुम् । यङि मेमीम्यते । ऋदित्वाण्णौ ङे उपान्त्यस्येति ह्रस्वाभावे अमिमीमत् । अयं शब्देपीत्येके ॥

**396.** गमॢं । गमिषद्यिति छे गच्छति । समो गमृच्छीत्यात्मनेपदे संगच्छते । जगाम । गमहनेत्युपान्त्यलुकि जग्मतुः । ऌदित्वादॢदिद्द्युतादीत्याङि अगमत् । अनुस्वारेत्त्वान्नेट् गन्ता गन्तुम् । गमोनात्मने इतीटि गमिष्यति । स्क्रसृवृभृस्तुद्रुश्रुस्रुवो व्यञ्जनादेः परोक्षायामिटि जग्मिव जग्मिम । सृजिदृशीति थवि वा नेटि जगन्थ जगमिथ । गमहनेति क्वसौ वेटि जग्मिवान् जगन्वान् । गमो वेति सिजाशिषोरात्मने वा कित्त्वम् समगत । अत्र यमिरमीत्यन्तलोपः । समगंस्त संगसीष्ट संगंसीष्ट । गत्यर्थाद्वा कर्तरि क्ते गतो ग्रामम् । पक्षे कर्मणि गतो ग्रामः । नाम्नो गमः खड्डौ च विहायसस्तु विहः प्लवंगः प्लवगः विहंगमः विहंगः विहगः उरगः । पृषोदरादित्वात्सलोपः । शृकमेस्युरुषि सस्पृकः । निपातनात् सत्वरः । दिद्युद्ददृदिति क्विपि जगत् । द्युत्रर्णेत्यलि गमः । न ख्येति प्रतिषेधात्स्वरादिति णेर्वेति च णत्वाभावे प्रगमनम् प्रगमना । गोचरेति घे निगच्छन्ति तत्र तेन वा निगमः पुटभेदनं शास्त्रं च । पुंनाम्नीति बाहुलकाद्वे आगमः । उणादौ गम्यमीति गे गङ्गा ९२ । त्रिदनेति निपातनादने गगनम् २७५ । जिभृसीति त्रटि वृद्धौ च गान्त्रं मनः ४४७ । गमेरा चेति त्रे गात्रम् ४९३ । कृसिकम्यमीति तुनि आगन्तुः ७७३ । मुगमिभ्यां डोः गौः ८६७ । गमेरिन् गमी ९१९ । आङश्च णित् आगामी ९२० । गम्यादित्वाद्भविष्यति साधु । गमेर्द्विश्चेति कर्तरि जगत् जगती ८८९ ॥

अथ यान्ता अष्टौ सेटश्च ॥

397. हय 398 हर्य क्लान्तौ च। चकाराद्गतौ। हयति जहाय। व्यञ्जनादेरिति वा वृद्धेर्न श्विजागृशसक्षणेति प्रतिषेधात् अहयीत्। इटि हयिता हयितुम्। अचि हयः। गौरादित्वाद् ङ्याम् हयी। क्विपि य्वोरिति यलुक्यप्यत इत्यलुगित्येके सुपूर्वस्य सुहट्। क्वौ ढस्तड्डे इति ढलुकि पूर्वदीर्घे च सूढिः। केवलस्य तु ढिः। उणादौ क्रपूनहीत्युषे हयुरौषधिः ६६७ ॥

398. हर्य। हर्यति जहर्य हर्यिता हर्यितुम्। मनि। सुहर्मा। वनि सुहर्वा। क्विपि विच्चि वा सुहः ॥

399. मव्य बन्धने। मव्यति ममव्य। मव्यतीति क्विपि य्वोरिति यलुक् अनुनासिके चेति वस्य ऊट् तत ऊटेत्यौत्वे मौः। लाक्षणिकत्वाच्च मव्ययीत्युपान्त्येन सह ऊडभावः मव्यितः मव्यितवान्। क्ते सेट्त्वात् क्तेट इत्यः मव्या। तिकि मौतिः ॥

400. सूक्ष्य 401 ईक्ष्य 402 ईर्ष्य ईर्ष्यार्थाः। सूर्क्ष्य दन्त्यादिः। ईर्ष्या कामजमसहनम्। सूर्क्ष्यति सुसूर्क्ष्य सूर्क्ष्यिता। मनि यलुकि सुसूर्क्ष्मा। वनि सुसूर्क्ष्वा। क्रुधद्रुहेर्ष्येति संप्रदानत्वे चतुर्थ्याम् चैत्राय सूर्क्ष्यति। क्विपि यलुकि सौ पदस्येति यलोपे रात्स इति नियमात्कलुगभावे सूर्क्। क्तयोः सूर्क्ष्यितः सूर्क्ष्यितवान् ॥

401. ईक्ष्य। ईक्ष्यति। गुरुनाम्यादेरित्यामादेशे ईक्ष्यां चकार। मनि य्वोरिति यलुकि ईक्ष्मा। वनि ईक्ष्वा। ईक्ष्यिता। मैत्रायेक्ष्यति ॥

402. ईर्ष्य। ईर्ष्यति ईर्ष्यां चकार। आचार्येर्ष्यते। अत्र ऽऽचार्यस्य संप्रदानत्वेकर्मकलक्षणं तस्याप्याख्यातमिति भावे आत्मनेपदम्। ईर्ष्यिता। क्ते सेट्त्वात् ईर्ष्या। यिः सन्वेर्ष्य इति येः सनो वा द्वित्वे ईर्ष्यियिषति ईर्ष्यिषिषति। णौ डे योर्द्वित्वे ऐर्ष्यियत्। उणादौ लज्जीर्ष्यिशलेरालुः ईर्ष्यालुः ८२२ ॥

403. शुच्ये 404 चुच्ये अभिषवे। शुच्यै तालव्यादिः। द्रवेण द्रव्याणां परिवासनमभिषवः। स्नानमिति चान्द्राः। शुच्यति शुशुच्य। मनि यलुक्युपान्त्यस्य गुणे सुशोच्मा। वनि सुशोच्वा। शुच्यिता। विच्चि सुशोक्। ऐदित्वात् क्तयोर्नेट् शुक्तः शुक्तवान्। तिकि शुक्तिः। केनिट्त्वादप्रत्ययाप्राप्तौ स्त्रियां क्तिः शुक्तिः ॥

404. चुच्यै। चुच्यति चुचुच्य चुच्यिता। ऐदित्वात् क्तयोर्नेट् चुक्तः चुक्तवान् ॥

अथ रान्ता अष्टौ सेटश्च ॥

**405.** त्सर छद्मगतौ छद्मप्रकारे । तादिरयम् । त्सरति तत्सार । वदव्रजेति वृद्धौ अत्सारीत् । उणादौ भृमृतृत्सरीत्युः त्सर्यते हस्तेन प्रच्छाद्यते इति त्सरुर्मुष्टिः ७१६। त्सद्मेत्यपि कौशिकः । त्सद्मति ॥

**406.** क्मर हूर्छने कौटिल्ये । क्मरति चक्मार । वदव्रजेति वृद्धौ अक्मारीत् । अचि क्मरः ॥

**407.** अभ्र **408** वभ्र **409** मभ्र गतौ । अभ्रति । अनातो नश्चेत्यात्वे नैव आनभ्र । क्ये अभ्र्यते । अत्र सरूपान्तस्थाया अभावे व्यञ्जनात्पञ्चमेति रो वा लुग् भवति । अभ्रिता । अचि अभ्रम् ॥

**408.** वभ्र । वभ्रति वभ्रिता ॥

**409.** मभ्र । मभ्रति मभ्रिता ॥

**410** चर भक्षणे च । चकाराद्गतौ । चरति । क्रियाव्यतिहारे गत्यर्थप्रतिषेधाद्गतौ नात्मनेपदम् व्यतिचरन्ति ग्रामम् । भक्षणे तु क्रियाव्यतिहारेऽगतीत्यात्मनेपदम् व्यतिचरन्ते भक्ष्यम् । उदश्चर इत्यात्मनेपदे गेहमुच्चरते उल्लङ्घयतीत्यर्थः । साप्यादित्येव ध्वनिरुच्चरति । समस्तृतीयया अश्वेन संचरते । वदव्रजेति वृद्धौ अचारीत् । गृलुपेति यङि गर्हितं चरति चञ्चूर्यते । अत्र ति चोपान्त्येत्यत उत्वं चरफलामिति पूर्वस्य मुरन्तः । यङ्युचि चञ्चुरः । चरेराङस्त्वगुराविति ये चर्यम् आचर्यं तपः आश्चर्यमद्भुतम् । वर्चस्कादित्वात्साधुर्गुरौ त्वाचार्यः । णके परिचारकः । अचि चरः । गौरादित्वाद् ङ्याम् चरी । प्रज्ञाद्यणि चर एव चारः । पटच्चरन्तीति पटच्चराश्चौराः । जीर्णवस्त्रं तु भूतपूर्वे ष्टचरटि भूतपूर्वः पट इत्याचरट् पटच्चरम् । निकृतौ नाम्नीत्यरटि चरकः । चरेष्टः कुरुचरः कुरुचरी । भिक्षासेनादायात् भिक्षां चरति भिक्षाचरः । सेनां चरति परीक्षते सेनाचरः । आदीयते इत्यादायो वागुरा तेन आदाय वा चरति आदायचरः । ग्रहादिभ्य इति णिनि व्यभिचारी । व्यभिचरी गगनिपातनात्पक्षे ह्रस्वः । सब्रह्मचारीति निपातनात्समानं ब्रह्मव्रतं समाने वा ब्रह्मणि गुरुकुले व्रतं चरतीत्येवंशीलः सब्रह्मचारी । अत्र समानस्य सभावो व्रतशब्दलोपश्च । भ्राज्यलंकृगितीष्णौ चरणशीलश्चरिष्णुः । समत्यपेति घिनणि संचारी अतिचारी अपचारी अभिचारी व्यभिचारी । लूधूसूखनेतीत्रे चरित्रम् । घञि उच्चारः । चरिमा चरितुम् । क्तौ तिकि वा चूर्तिः ब्रह्मचूर्तिः । गमजेति क्यपि चर्या । परेः सृचर्येः परिचर्या । गोचरसंचरेति निपातनाद्घञपवादे घे गोचरः संचरः । चराचरेति

निपातनादचि चराचर । उणादौ तृकृभित्यणे चरण पाद १८७ । सृपृभ्यर्चात्यमे चर-म ३४७ । भूचिति णितीत्रे चारित्रम् । भावे करणे कर्मण्यधिकरणे च साधु ४६० । कृशृकुटीति वा णिदि चरि पशु प्राकाराम च । चारि पशुभक्ष्यम् ६११ । मिवहीति वा णिदु चरु स्थाली । चारु ७२६ । मनि चर्म ९११ ॥

**411** धोरृ गतेश्चातुर्ये । धोरति दुधोर । क्ये धोर्यते । ऋदित्त्वान्न ह्रस्व अदुधोरत् । धोरिता । क्ते धोरितम् । नन्द्यादिभ्य इत्यने आधोरणो हस्तिपक । व्यञ्जननिर्देश उत्तरार्थ ॥

**412** खोरृ प्रतीघाते । गतेरित्यनुवृत्तेर्गतिप्रतीघाते । खोरति चुखोर । क्ये खोर्यते । खोरिता । ऋदित्त्वान्न ह्रस्व अचुखोरत् । अचि खोराधमर्ती । णके खोरिका पात्री ॥

अथ लान्ताश्चत्वारिंशत्सेटश्च ॥

**413** दल **414** त्रिफला विशरणे । दलति ददाल देलतु देलु । वदव्रजेति वृद्धौ अदालीत् । केचिदेनं घटादिं मन्यन्ते णौ दलयति । दलिता दलितुम् । अचि दलम् । उणादौ दलिवलीत्यपे दलप प्रहरणम् ३०४ । दलेरीपो दिल् च दिलीप ३१० । गुदृरमीति भे दल्भ ऋषि ३२७ । दलण् विदारणे । दालयति ॥

**414** त्रिफला । फलति प्रतिफलति उत्फलति पफाल । तृत्रपेत्येत्वे फेलतु फेलु । वदव्रजेति वृद्धौ अफालीत । यङि चरफलामिति म्वागमे ति चोपान्त्येत्युत्वे च पम्फुल्यते । यङ्लुपि पम्फुलीति पम्फुलीषि । श्रुक्तोपान्त्यस्येति गुणप्रतिषेध । पम्फुल्ति पम्फुल्षि । अन ति चोपान्त्येत्यश्नोरिति वचनाद्गुणाभाव । तास पम्फुल्त । अचि फलम् सफल । यङ्याचि पम्फुल । तिकृतौ नाम्नीत्यकटि फलकम् । अनुपसर्गा क्षीबोल्लाघेति क्ते निपातनात् फुल्ल फुल्लमनेन उत्फुल्ल सफुल्ल । सोपसर्गस्य प्रफुल्ता लता । अत्र ञीत्त्वात् ज्ञानेच्छार्चेति वर्तमाने क्त । क्तवती निपातनाभावात् फुल्लवान् । ये तु क्तवतावपीच्छन्ति तन्मते फुल्लवान् । आदित्त्वान्न वा भावारम्भे इति क्तयोर्वा नेट् प्रफुलितमनेन प्रफुल्तमनेन प्रफुलित प्रफुल्त । उणादौ दृकृनित्यके फलक २७ । कीचकपेचकेति निपातनात् फलहक ३३ । फलेर्गोन्तश्चेत्युने फल्गुन फल्गुनी २९१ । कमिवमीति णिदि फालिर्हलम् ६१८ । फलिवल्यमेर्गु फल्गु ७६८ । फल निष्पत्तौ । फलित" ॥

**415** मील **416** श्मील **417** स्मील **418** क्ष्मील निमेषणे । निमेषणं सकोच । मीलति मिमील । णौ टेभ्राजभासेति वा ह्रस्वे अमीमिलत् अमिमीलत् ।

मीलिता। क्ते मीलितः। क्ते सेट्त्वात् प्रमीला तन्द्रीः। अनटि मीलनम्। मिलत् श्लेषणे। मिलति। अनटि मेलनम्॥

416. श्मील। तालव्यादिः। श्मीलति श्मीलिता॥

417. स्मील। दन्त्यादिः। स्मीलति स्मीलिता॥

418. क्ष्मील। क्ष्मीलति क्ष्मीलिता॥

419. पील प्रतिष्टम्भे। प्रतिष्टम्भो रोपणम्। पीलति पिपील। णौ ङे अपीपिलत्। पीलिता। नाम्युपान्त्येति के पीला। अपिपूर्वाण्णके पिपीलकः पिपीलिका। पृषोदरादित्वादपेः पिः॥

420. णील वर्णे। वर्णोपलक्षितायां क्रियायां यथा श्वेतं नीलति मरकतकान्त्या। पाठे इति णस्य नत्वे नीलति। णोपदेशत्वाद्दुरुपसर्गेति णत्वे प्रणीलति। निनील नीलिता। अचि नीलम् प्रणीलम्। नीलात्प्राण्योषध्योरिति ङ्याम् नीली गौरोषधिश्च। अन्यत्र नीला शाटी। क्वाचेति वा ङ्याम् नीली नीला। उणादौ भीकैपैनीलेरण्डुक् नीलङ्गुः कृमिः ७६१॥

421. शील समाधौ। समाधिरैकाग्र्यम्। तालव्यादिः। शीलति परिशीलति शिशील। णिगि शीलयति। शानेच्छार्वेति सत्यर्थे क्ते अनुशीलितः। शीलिकामीति णे धर्मशीला। घञि शीलम्। उणादौ कोरदूपाटरूपेति निपातनाद्रूपे शैलूषः शिलूषः शिलूषापत्यं वा ५६१। शीलण् उपधारणे। शीलयति॥

422. कील बन्धे। कीलति चिकील कीलिता। णिगि कीलयति। नाम्युपान्त्येति के कीलः। घञि कील्यतेऽनेनास्माद्वा कीलः। कपि कीलकः। क्ते सेट्त्वात् स्फोट ह्रस्वः कीला। क्ते उत्कीलितः। उणादौ ऋकृञ्भ्रस्याले कीलालम् ४७५। नाम्युपान्त्येति किदिः कीलिः [ ६०९ ]॥

423. कूल आवरणे। कूलति अनुकूलति चुकूल कूलिता। के कर्मणि घञि च कूलम्॥

424. शूल रुजायाम्। तालव्यादिः। शूलति शुशूल शूलिता। के शूलम्॥

425. तूल निष्कर्षे। निष्कर्षोऽन्तःस्थस्य बहिर्निःसारणम्। तूलति तुतूल तूलिता। के तूलम्। उणादौ नाम्युपान्त्येति किदिः तूलिः शय्या ६०९। स्वार्थे के तूलिका चित्रकरशलाका॥

426. पूल संघाते। पूलति पुपूल पूलिता। के घञि वा पूलः। जातेरयान्तेति ङ्याम् पूली तृणोच्चयः॥

427. मूल प्रतिष्ठायाम् । मूलति मुमूल मूलिता । णिगि उन्मूलयति केशान् । क्ते उन्मूलितः । के घञि वा मूलम् । मूलण् रोहणे । मूलयति ॥

428. फल निष्पत्तौ । निष्पत्तिः सिद्धिः । फलति पफाल । तॄत्रपेत्येत्वे फेलतुः फेलुः । फलिता । क्ते फलितः फलितवान् । त्रिफलेत्यस्य तु फुल्लः । अचि फलम् । पलितमिति तु पलेः ॥

429. फुल्ल विकसने । फुल्लति पुफुल्ल पुफुल्लतुः पुफुल्लुः फुल्लिता । क्तयोः फुल्लितः फुल्लितवान् । अचि फुल्लम् ॥

430. चुल्ल हावकरणे । मैथुनेच्छाप्रेरितशरीरविकारो हावकरणम् । चुल्लति चुचुल्ल चुल्लिता । अचि चुल्लः । उणादौ किलिपिलीति इः चुल्लिः ६०८ ॥

431. चिल्ल शैथिल्ये च । चकाराद्धावकरणे । चिल्लति चिचिल्ल चिल्लिष्यति । अचि चिल्लः पटः शिथिल इत्यर्थः । क्ते चिल्लितः ॥

432. पेलृ 433. फेलृ 434 शेलृ 435 षेलृ 436 सेलृ 437 वेहृ 438 सल 439 तिल 440 तिल्ल 441 पल्ल 442 वेल्ल गतौ । पेलति पिपेल पेलिता । ऋदित्त्वाण्णौ ङे अपिपेलत् । अचि पेलं वृषणः । पेला पक्षा दिभाजनविशेषः । णके पेलकः । क्ते पेलितम् । उणादौ यविपटीत्यवे पेलवम् ५१९ ॥

433. फेलृ । फेलति पिफेल फेलिता । ऋदित्त्वात् अपिफेलत् । क्ते फेलितम् । क्ते सेट्त्वात् केट इत्यः फेला भोजनोज्झितम् ॥

434. शेलृ । शेलति शिशेल । ऋदित्त्वात् अशिशेलत् ॥

435. षेलृ । षः स इति सत्वे सेलति । षोपदेशत्वात्पत्वे सिषेल । ऋदित्त्वात् असिषेलत् ॥

436. सेलृ । सेलति । सोपदेशत्वान्न पत्वम् सिसेल । ऋदित्त्वात् असिसेलत् ॥

437. वेहृ । वेह्लति अविवेह्लत् ॥

438. सल । सलतिससाल । सोपदेशत्वान्न पत्वम् सिसालयिषति सिसलिषति । घञि भ्रमरैः सल्यते इति सालः ॥

439. तिल । तेलति तितेल तेलिता । नाम्युपान्त्येति के तिलः । तिलत् स्नेहने । तिलति । तिलण् स्नेहने । तेलयति ॥

440. तिल्ल । तिल्लति तितिल्ल तिल्लिता ॥

441. पल्ल | पल्लति पपल्ल पल्लिष्यति | उणादौ पदिपठीति इः पल्लिः ६०७ ||

442. वेल्ल | वेल्लति विवेल्ल वेल्लिता | क्ते वेल्लितम् | णौ ङे अविवेल्लत् ||

443. वेलृ 444 चेलृ 445 केलृ 446 क्वेलृ 447 खेलृ 448 स्खल चलने | वेलति विवेल वेलिता | ऋदित्वात् अविवेलत् | अचि वेला वेलका | वेलण् उपदेशे | वेलयति ||

444. चेलृ | चेलति चिचेल चेलिता | ऋदित्वात् अचिचेलत् | अचि चेलम् | चिलत् वसने | चिलति | घञि चेलम् ||

445. केलृ | केलति चिकेल केलिता | ऋदित्वात् अचिकेलत् | क्ते केलितम् | किलत् श्वैत्यक्रीडनयोः | किलति | उणादौ किलिपिलीति इः केलिः ६०८ | कील बन्धे इत्यस्य तु कीलति कीलितम् कीलनम् कीलिः ||

446. क्वेलृ | क्वेलति चिक्वेल क्वेलिता | ऋदित्वात् अचिक्वेलत् ||

447. खेलृ | खेलति चिखेल खेलिता | ऋदित्वात् अचिखेलत् | अचि खेलम् खेला खुरलिः | पृषोदरादित्वाद्ध्रस्वे खिलम् ||

448. स्खल | स्खलति चस्खाल स्खलिता | अचि स्खलः | नालशब्दार्थादित्वने स्खलनशीलः स्खलनः | क्ते स्खलितम् ||

449. खल संचये च | चकाराच्चलने | खलति चखाल खलिता | गोचरेति निपातनाद्धे खल्यन्ते संचीयन्ते यशांसि धान्यानि वा यत्रेति खलः खलं रणाजिरं धान्यपवनस्थानं च | खलो दुर्जनः | अचि खलति संचिनोति पापं चलति वा गुणेभ्य इति खलो नीचः | उणादौ खलिहिंसिभ्यामीनः खलीनम् २८६ | लटिखटीति त्रे खलत्रं निम्नम् | खल्या वृतिः ५०५ | कपाटविराटेति निपातनात् खल्वाटः १४८ | दृपृभ्रित्यते खलतः खल्वाटः २०७ | पदिपठीति इः खलिः पिण्याकः ६०७ | खल्यमीत्यतौ खलतिः ६६३ ||

450. श्वल 451 श्वल्ल आशुगतौ | तालव्यादी | श्वलति | वदव्रजेति वृद्धौ अश्वालीत् ||

451. श्वल्ल | श्वल्लति अश्वल्लीत् | शलिमप्यत्रैके पठन्ति | स ज्वलादिपाठेनैव गतार्थ इति नेमाधीतः ||

452. गल 453 सर्व अदने | गलति जगाल गलिष्यति | अचि गलः कण्ठः | स्रवणेऽप्ययमनेकार्थत्वात् गलत्युदकं कुण्डिकायाः | उणादौ कलिगलेरस्योत्चेति के गुल्फः ३१९ | बहुलमेतन्निदर्शनमिति गलिण् स्रावणे | गालयते उद्गालयते ||

अथ वान्ताः सप्तत्रिंशत्सेटश्च ॥

453. [ चर्वं । ] चर्वति चचर्व चर्विता । क्ते चर्वितः । उणादौ मवाकेति निपातनादाके चार्वाकः ३७ । बहुलमेतन्निदर्शनमिति चुरादित्वे चर्वयति ॥

454. पूर्वं 455 पर्वं 456 मर्वं पूरणे । पूर्वति पुपूर्व पूर्विता । अचि पूर्वः ॥

455. पर्वं । पर्वति पपर्व पर्विता । क्विपि सुपः सुपरौ सुपरः । य्वोः प्वय्व्यञ्जने इति वलोपः । उणादौ दृपृभ्रिस्यते पर्वतः २०७ ॥

456. मर्वं । मर्वति ममर्व मर्विता ॥

457. मर्वं 458 धवु 459 शव गतौ । मर्वति ममर्व मर्विता ॥

458. धवु । उदित्त्वान्ने धन्वति धन्विष्यति । उणादौ उक्षितक्षीत्यनि धन्वा ९०० ॥

459. शवतिर्गतिकर्मा काम्बोजेषु भाष्यते । विकार एनमार्या आहुः । शवति । अचि शवः शवम् । सुष्ठु शवतीति सुशवः । स्त्रियां गौरादित्वाद् ङ्याम् सुशवी । क्विप्यनुनासिके चेति वस्योट् तत ऊटेत्यस्यौत्वे शौः । शविष्यति ॥

460 कर्वं 461 खर्वं 462 गर्वं दर्पे । कर्वति । खर्वति । गर्वति । चकर्व । चखर्व । जगर्व । अचि घञि वा कर्वः । खर्वः । गर्वः ॥

463. ष्ठिवू 464 क्षिवू निरसने । षः स इत्यत्र ष्ठिवो वर्जनात्सस्य सत्याभावे ष्ठिवुक्लम्विति दीर्घे च ष्ठीवति । तिर्वा ष्ठिव इति पूर्वस्य वा तित्वे तिष्ठेव टिष्ठेव । यङि तेष्ठीव्यते टेष्ठीव्यते । ष्ठेविता । ऊदित्त्वात् क्त्वि वेट् ष्ठ्यूत्वा ष्ठेवित्वा । ऋद्धेति सनि वेट् तुष्ठ्यूषति टुष्ठ्यूषति । पक्षे तिष्ठेविषति टिष्ठेविषति । वेट्त्वात् क्तयोर्नेट् ष्ठ्यूतः ष्ठ्यूतवान् । मव्यनुनासिके चेत्यूट्त्वे सुष्ठ्योमा । वनि सुष्ठ्योवा । क्विपि सुष्ठ्यूः । णिचि सुष्ठे. । ष्ठिवसिवोऽनटि वेति वा दीर्घे ष्ठीवनम् ष्ठेवनम् ॥

464. क्षिवु । क्षेवति चिक्षेव क्षेविता । ऊदित्त्वात् क्ष्यूत्वा क्षेवित्वा । क्तयोः क्ष्यूतः क्ष्यूतवान् । क्षीवुमप्येके पठन्ति क्षीवति । णौ ङे अचिक्षीवत् । क्ते क्षीवितः । ष्ठिवू क्षिवूच् निरसने । ष्ठीव्यति । क्षीव्यति ॥

465 जीव प्राणधारणे । जीवति जिजीव जीविता । णौ ङे भ्राजभासेति वा ह्रस्वे अजीजिवत् अजिजीवत् । नाम्युपान्त्येति के जीवः । णके जीवकः पक्षी । जीव जीवकोऽपि । यावतो विन्दजीव इति णमि यावज्जीवमधीते । नाम्नि पुंसि चेति णके जीविका । उणादौ जीवेरातृको जैव चेति जैवातृकः ६७ । रञ्जिनन्दी-

ल्यन्ते जीयतात् जीवन्तः जीवन्ती २२० । भृशीशपीत्यर्थे जीवथो वायुः २३२ । जीवेरातुः जीवातुर्जीवनम् ७८२ । जीवे रदानुक् जीरदानुः ७९९ ॥

466. पीव 467 मीव 468 तीव 469 नीव स्थौल्ये । पीवति पिपीव पीविता । के पीवः । उणादौ तीवरेति निपातनादरे पीवरः ४४४ । पीव्रेति तु ष्वेडः ॥

467. मीव । मीवति मिमीव मीविता ॥

468. तीव । तीवति तितीव तीविता । उणादौ सुरक्षुरेति निपातनात् तीवः ३९६ । तीवरेति निपातनादरे तीवर जलं व्यञ्जनं च ४४४ ॥

469. नीव । नीवति निनीव नीविता । उणादौ नाम्युपान्त्येति किदिः नीविः ६०९ । नयतेर्वा डिदिः ७०९ । सुरक्षुरेति निपातनात् नीवम् नयतेर्वा ३९६ । मनादिषु सर्वेषां डिविना तुल्यमुदाहरणम् ॥

470. उर्वै 471 तुर्वै 472 थुर्वै 473 दुर्वै 474 धुर्वै 475 जुर्वै 476 अर्व 477 भर्व 478 शर्व हिंसायाम् । भ्वादेरिति दीर्घे ऊर्वति ऊर्विता । ऐदित्वात् क्तयोर्नेट् ऊर्णः ऊर्णवान् । क्विपि राल्लुगिति च लुकि ऊः उरौ उरः । उणादौ उर्वरादेरूदेतौ नेत्यादौ उर्वारुः कर्कटीभिर्भिटी । पर्यायधारनिर्भिटी ८१८ ॥

471. तुर्वै । तूर्वति तूर्विता । मनि तुतोर्मा । वनि तुतोर्वा । विचि तुतोः । क्विपि तूः तुरौ तुरः । ऐदित्वात् तूर्णः तूर्णवान् ॥

472. थुर्वै । थूर्वति थूर्विता । ऐदित्वात् थूर्णः थूर्णवान् ॥

473. दुर्वै । दूर्वति दूर्विता । अनि दूर्वा । क्विपि दूः दुरौ दुरः । ऐदित्वात् दूर्णः दूर्णवान् ॥

474. धुर्वै । धूर्वति धूर्विता । छ्वोःशूडिति क्विपि धूः धुरौ धुरः । ऐदित्वात् धूर्णः धूर्णवान् । उणादौ शीरीति किति ते धूर्तः किरत्वाच्च गुणः २०१ । गॄपृदृ-भिधुर्भ्यः क्विपि धूः ९८३ ॥

475. जुर्वै । जूर्वति जूर्विष्यति । क्विपि जूः जुरौ जुरः । ऐदित्वात् जूर्णः जूर्णवान् ॥

476. अर्व । अर्वति । अनात इत्यादौ ने च आनर्व । अर्विष्यति । अनि अर्वः ॥

477. भर्व । भर्वति बभर्व भर्विष्यति ॥

478. शर्व । शर्वति शशर्व शर्विष्यति । अनि शर्वः ॥

479 मुर्वै 480 मव बन्धने । भ्वादेरिति दीर्घे मूर्वति मूर्विता । अचि मूर्वा तृणम् । यद्विकारो मौर्वी । क्विपि मूः मुरौ मुरः । ऐदित्त्वात् मूर्णः मूर्णवान् ॥

480 मव । मवति ममाव मेवतुः मेवुः । क्विपि मव्यवीत्युपान्त्येन सहोटि मूः मुवौ मुवः सुमूः सुम्वौ सुम्वः । मविष्यति । एवं मनादिष्वपि ॥

481 गुर्वै उद्यमे । भ्वादेरिति दीर्घे गूर्वति जुगूर्व गूर्विता । ऐदित्त्वात् क्तयोर्नैट् गूर्णः गूर्णवान् । क्विपि गूः गुरौ गुरः ॥

482 पिवु 483 मिवु 484 निवु सेचने । सेवने इत्येके । प्रयोप्युदित उदित्त्वान्ने पिन्वति पिपिन्व । मिन्वति मिमिन्व । निन्वति निनिन्व । पिन्विता । मिन्विता । निन्विता । मनादिषु पूर्ववत् ॥

485 हिवु 486 दिवु 487 जिवु प्रीणने । प्रयोप्युदित उदित्त्वान्ने हिन्वति जिहिन्व । दिन्वति दिदिन्व । जिन्वति जिजिन्व । हिन्विता । दिन्विता । जिन्विता । मनादिषु पूर्ववत् ॥

488 इवु व्याप्तौ च । चकारात्प्रीणने । उदित्त्वान्ने इन्वति इन्वां चकार । अनन्ति पोत्तरपदान्तनेति वा णत्वे प्रेण्वनम् प्रेन्वनम् । णके इन्विका मृगशीर्षशिरस्तारकाः । सुपूर्वान्मन्यनुनासिके चेत्युपि स्विनोमा ? वनि व्योरिति वलोपे वन्याडिति नस्याले यटे च सुयावा । विचि व्योरिति वलुकि गुणे च स्वे स्वेनी स्वेन । क्विपि वस्योपि स्विन् । इन्विता इन्वितुम् । शान्तोऽयमिति धुड्वर्गाभावान्नामिति नकारस्य मो न भवति ॥

489 अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमनप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादहनभाववृद्धिषु एकोनविंशतावर्थेषु । कैश्चित्कान्तिवर्जनादष्टादशसु । अन्यैस्तु रक्षणगतिकान्तिप्रीतितृप्तिवृद्धिषु षट्सु । अवति आव आवतुः आवुः अविता । क्विपि मव्यवीत्युपि ऊः उवौ उवः । क्तौ ऊतिः । उणादौ दिव्यवीत्यने अवनः १६७ । जीणृशीदीति किति ने ऊनः २६१ । श्याकर्तीतीने अविनः जलम् २८७ । अर्तेर्हस्तश्च वेति किति मे उमः उमम् ३४२ । मव्यविभ्यां टिदितीपे अविपः समुद्रः । अविषी द्यौः ५८७ । पादिपटीति इः आविः ६०७ । सर्तिवृत्यर्मीत्यनौ अवनिः ६८० । वृसृतन्द्रीति ईः अवी रजस्वला ७११ । कृमिकमीति तुनि ओतुः ७७३ । अवेर्मः ओम् ९३३ ॥

अथ शान्ताः सप्त आद्याः पञ्च सेटश्च ॥

490 कश शब्दे । सौत्रोऽयमित्येके कौशिकस्त्वयैवेत्यधीत । कशति चकाश कशिता । अचि वर्चस्कादिष्विति पाठे प्रतिष्कशोऽपयायी दूतश्च ॥

धाममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः ॥

कशा चर्मयष्टिः । घञि काशस्तृणजातिः । उणादौ कशेर्मोन्तश्चेतीरे कश्मीराः ४२० । काशिरिति तु काशृङ् दीप्तावित्यस्य ६०७ । वान्तोयमित्यन्ये । कषति ॥

491. मिश 492 मश रोषे च । चकाराच्छब्दे । शब्दने रोषक्रियायां चेत्यर्थः । मेशति मिमेश मेशिता । नाम्युपान्त्येति के मिशो व्याजः ॥

492. मश । मशति ममाश मशिता । तिकृतौ नाम्नीत्यकटि दृक्कृन्त्रित्युणादावके वा मशकः २७ ॥

493. शश प्लुतिगतौ । तालव्यादिः । प्लुतिभिर्गमने उत्प्लुत्य गमने इत्यर्थः । शशति शशाश शेशतुः शेशुः । अत्रानादेशादेरित्येत्त्वम् । अचि शशः शशकः । शशिता शशितुम् ॥

494. णिश समाधौ । पाठे इति णस्य नत्वे नेशति निनेश निनिशतुः निनिशुः । अदुरुपसर्गान्तरेति णत्वे प्रणेशति । नाम्युपान्त्येति के निशः । स्थादिभ्य इति के नेशन्ति समाहितमनस्का भवन्त्यस्यामिति निशा । नेशितुम् ॥

495. दृशृं प्रेक्षणे । श्रौतीति पश्यादेशे पश्यति । समो गमृच्छीत्यात्मनेपदे संपश्यते । ददर्श ददृशतुः ददृशुः । अनुस्वारेत्त्वादनिट् द्रष्टा द्रष्टुम् । अत्र अः सृजिदृश इत्यकारागमः । परोक्षायां स्क्रसृवृभृस्तुद्रुश्रुस्रुवो व्यञ्जनादेरिति इटि ददर्शिथ ददृशिम । सृजिदृशिस्क्रिति थवि वा नेटि दद्रष्ठ ददर्शिथ । स्वरहनेति वा ञिटि दर्शिष्यते द्रक्ष्यते । ऋदिच्छ्वाद्यङि अदर्शत् । अत्र ऋवर्णेति गुणः । पक्षे अशिट इत्यत्र दृशो वर्जनात्सिचि अद्राक्षीत् । णौ ङे ऋदृवर्णस्येति गुणापवादे वा ऋकारादेशे अदीदृशत् अददर्शत् । सनि स्मृदृश इत्यात्मनेपदे दिदृक्षते । अणिकर्मेति णावात्मनेपदे पश्यन्ति भृत्या राजानम् दर्शयते राजा भृत्यान् भृत्यैर्वा । अत्र दृशभिवदोरिति वा णिक्कर्तुर्णिगि कर्मत्वम् । ऋदुपान्त्येति क्यपि दृश्यम् । घ्राध्मेति शे पश्यः उत्पश्यः । लिहादिभ्य इत्यचि दर्शः । कर्मणोणि देवदर्शः । असूर्योग्रादिति खशि असूर्यंपश्या राजदाराः । उग्रंपश्यो राजा । त्यदाद्यन्येति टक्सक्क्विप्सु अन्यत्यदादेरित्यात्वे च तादृशः तादृशी तादृक्षः तादृक् । दृग्दृशदृक्षे इति समानस्य सत्वे सदृक् सदृशः सदृक्षः । दृशः क्वनिप् मेरुदृश्वा । स्त्रियां णस्वराघोषेति ङ्याम् नस्य रत्वे च मेरुदृश्वरी । शास्सुधीत्यने सुदर्शनः । विदृभ्यः कात्स्न्यें णम् कन्यादर्शं वरयति । पशुर्भिनि तु स्पर्शः स्पृशिभ्रस्जेः स्लुक् चेति उप्रत्यये रूपम् [ उणा॰ ७३१ ] ॥

496 दश दशने । दशनं दन्तकर्म । दशनञ्ज इति नलुकि दशति । यङे

दश्यते । ददंश । संयोगान्तत्वादिन्ध्यसंयोगेति परोक्षायाः कित्त्वाभावे ददंशतुः ददंशुः । अनुस्वारेत्त्वान्नेट् दंष्टा दंष्टुम् । व्यञ्जनानामिति वृद्धौ अदाङ्क्षीत् । गृलुपेति यङि गर्हितं दशति दन्दश्यते । यङ्लुपि दन्दशीति । सूत्रे कृतनलोपस्य निर्देशादत्र नो लुक् । यजिजपीत्यूके दन्दशूकः । कर्मणोऽणि वृषं मूषिकं दशति वृषदंशो बिडालः । दंशेस्त्रः दंष्ट्रा । अचि दंशः दंशी । घञि उपदंशः । दशनावोदैधोद्मेति निपातनादनटि दशनम् दशनो दन्तः । दंशेस्तृतीययेति णमि मूलकेनोपदंशं मूलकोपदंशं भुङ्क्ते । अत्र तृतीयोक्तं वेति वा तत्पुरुषः । उणादौ लूपूयिति कित्यनि दशघटाः ९०१ ॥

अथ पान्ता एकचत्वारिंशत् कृपंवर्जाः सेटश्च ॥

497. घुषृ शब्दे । घोषति जुघोष । ऋदित्त्वाद्दाङि अघुषत् । पक्षे अघोषीत् । घुषेरविशब्दे इति क्तयोर्नेट् घुष्टा रज्जुः । विशब्दने त्विटि अवघुषितं वाक्यमाह । संपूर्वात् क्षुब्धेति वा नेटि संघुष्टा संघुषिता रज्जुः । संघुष्टं संघुषितं वाक्यम् । घुषृण् विशब्दने । घोषयति । आङः क्रन्दे । आघोषयति । उणादौ हृषिपुषीतिल्नौ घोषयित्नुः शब्दः ७९७ ॥

498. चूप पाने । चूपति चुचूप चूपिता । क्ते निश्चूपितम् । चूपित्वा ॥

499. तूप तुष्टौ । तूपति तुतूप तूपिता तूपितम् । क्ते सेट्त्वात् तूपा । तुपं हृ-पच् तुष्टौ । तुप्यति ॥

500. पूप वृद्धौ । पूपति पुपूप पूपिता । क्ते पूपितः । उणादौ उक्षितक्षी-त्यनि पूपा ९०० ॥

501. लुप 502 मूप स्तेये । लोपति लुलोप लोपिता । नाम्युपान्त्येति के लुपः ॥

502. मूप । मूपति मुमूप मूपिता । नाम्युपान्त्येति के मूपः मूपा तैजसावर्तनी । गौरादित्वाड् ड्याम् मूपी । णके मूपकः ॥

503. षूप प्रसवे । षः स इति षस्य सत्वे सूपति । षोपदेशत्वात्पत्वे सुषूप । येषां तु सोपदेशास्तन्मते षत्वाभावे सुसूप । सूपिता । नाम्युपान्त्येति के सूपः । गौरादित्वाड् ड्याम् सूपी । तालव्यादिरयमिति चारकाः । शूपा शाकम् ।

504. ऊप रुजायाम् । ऊपति । गुरुनाम्यादेरित्यामादेशे ऊपां चकार । नाम्युपान्त्येति के ऊपः । ऊपितुम् । अनटि ऊपणं मरिचम् । त्र्यूपणं त्रिकटुकम् । मनि ऊप्मा । ऊपरं क्षेत्रमिति तु ऊपाद्रोश्मादेरिति चातुरर्थिके रे । ऊपरं जलमिति तु मध्वादिभ्य इति मत्वर्थीये रे सिद्धम् ॥

505. ईष उञ्छे । उञ्छमुच्चयनम् । ईषति । गुरुनाम्यादेरित्यामादेशे ईषां चकार । ईषिता । क्ते सेट्त्वात् क्तेट इत्यः ईषा प्रणगवेषणी मञ्चकाद्यवयवश्च । उणादौ ऋच्यृजीनीके ईषीका तृणशलाका । इषीकेति तु इषत् इच्छायामित्यस्य ४८ ॥

506. कृषं विलेखने । विलेखनं हलोत्कर्षणम् । कर्षति चकर्ष । अनुस्वारेत्त्वान्नेट् क्रष्टा । स्पृशमृशेति वा सिचि अकार्क्षीत् । स्पृशादीति वा अकारागमे अक्राक्षीत् । पक्षेऽनिट्त्वात् शशिट इति सकि अकृक्षत् । णौ ङे ऋदृवर्णस्येति वा ऋदादेशे अचीकृषत् अचकर्षत् । नन्द्यादिभ्य इत्यने संकर्षणो हली । अन्यत्र नाम्युपान्त्येति के संकृषः । व्यञ्जनाद्घञि आकर्षो द्यूतफलकम् । उपपीडेति णमि पट्टोपकर्षं धावति भ्राष्ट्रोपकर्षं धानाः खादति । तृतीयोक्तं वेति वा तत्पुरुषः । पक्षे पट्टे पट्टेन वोपकर्षं धावति भ्राष्ट्रे भ्राष्ट्रेण वोपकर्षं धानाः खादति । उणादौ कृषेर्गुणवृद्धी च वेत्यके कर्षकः कार्षकः कृषकाश्च कुटुम्बी ३१ । कपुलीति किलीके कृषिकः पामरः ६१ । घृणीकेति किति णे कृष्णः १८३ । नाम्युपान्त्येति किदिः कृषिः ६०९ । कृषेश्च आदेरित्यणौ चर्षणिः चर्षणी कुलटा ६८१ । कृषिचमीत्यूः कर्षूः कुल्या ८२९ । कृषींत् विलेखने । कृषति कृषते ॥

507. कष 508 शिष 509 जष 510 झष 511 वष 512 मष 513 मुष 514 रुष 515 रिष 516 यूष 517 जूष 518 शष 519 चष हिंसायाम् । कषति । कूलाभ्रेति खे कूलकषा नदी । सर्वात्सहश्च सर्वंकषः खलः । कषः कृच्छ्रगहने इति कषेर्नेट् कष्टं कृच्छ्रं गहनं च । कषोऽनिट इति भविष्यति साधुः । अजातेः शीले इति णिनि पादाभ्यां कषणशीलः परतापी । अत्र हिम- हतीति पञ्चायः । वौ विषेति घिनणि विकषणशीलो विकाषी । गोचरेति निपातनाद्- अपवादे घे कषः आकषः निकषः । निमूलात्कष इति णमि निमूलकाषं कषति । हनश्च समूलात् समूलकाषं कषति । उणादौ स्यमिकषीतीके कषीका कृकालिका ४६ । प्राङः पणीनीके प्राकषिको वायुः ४२ । मावावद्यमीति मे कक्षस्तृणं गहनारण्यं च । कक्षः कक्षा बाहुमूलं गृहोपान्तश्च ७६४ । कृशृकुटीति वा णिदिः काषिः निकषोपलः खनित्रं च । काषिः कर्षकः ६१९ । कषेश्छटौ च च इत्युः कण्टूः कच्छूः ८३१ । समिणनिकषिभ्यामाः निकषा पर्वतं नदी ७९८ ।

508. शिष । तालव्यादिः । शेषति शिशेष शेषिता शेषितुम् । केचिदिटं नेच्छन्ति । तन्मते शेष्टा शेष्टुम् । नाम्युपान्त्येति के शिषः । कर्मणि घञि शेषम् । शिष्लृप् विशेषणे । विशिनष्टि । शिषण् असर्वोपयोगे । शेषयति । अचि शेषः । अत्र युजादित्वाद्वा णिच् । पक्षे शेषति ॥

509. जष । जषति जषिता ॥

510. झष । झषति झषिता । अचि झषः ॥

511. वष । वषति वषिता ॥

512. मष । मषति मषिता । कर्मणि घञि माषः ।

513. मुष । मोषति मोषिता । मुषश् स्तेये । मुष्णाति । मुषेर्दीर्घश्चेत्युणादा-विके मूषिक आखुः ४३ । मूषिका तल्ली ॥

514. रुष । रोषति । तादौ सहलुभेच्छेति वेट्त्वात् रोष्टा रोषिता रोष्टुम् रोषितुम् । वेटोऽपत इति निषेधापवादे श्वसजपेति क्तयोर्वा नेटि रुष्टः रुषितः । शी-ल्यादित्वादत्र सत्यर्थे क्तः । रुषच् रोषे । रुष्यति ॥

515. रिष । रेषति । सहलुभेच्छेति वेटि रेष्टा रेषिता रेष्टुम् रेषितुम् । वेट्त्वात् क्तयोर्नेट् रिष्टः रिष्टवान् रिष्टम् अरिष्टम् । उणादौ निघृषीति किति षे रिष्वः ५११ ॥

516. युष । युषति युयूष यूषिता । नाम्युपान्त्येति के युषः यूषम् । गौरा-दित्वाङ् ङ्याम् यूषी ॥

517. जुष । जुषति जुषिता । नाम्युपान्त्येति के जुषः । क्ते जुषितः । क्तेट इत्यः जुषा ॥

518. शष । तालव्यादिः । शषति शषिता । उणादौ षष्पाशिल्पेति पे श-ष्यते शष्पो बालतृणम् २९९. ३०० ॥

519. चष । चषति चषिता । निकृतौ नाम्नीत्यकटि चषकः । रुषेरप्यपि कण्वः । खषति ॥

520. वृषू संघाते च । चकाराद्धिंसायाम् । वर्षति ववर्ष ववृषतुः वर्षिता । ऊदित्त्वात् क्त्वि वेट् वृष्ट्वा वर्षित्वा । क्त्वि वेट्त्वात् क्तयोर्नेट् वृष्टः वृष्टवान् ॥

521. भष भर्त्सने । भर्त्सनं कुत्सितशब्दकरणम् । अतो भर्त्सने शब्दकर्म-कोऽयम् । भषति श्वा बुक्कतीत्यर्थः । भषति भषकः पैशुन्येन वक्तीत्यर्थः । बभाष भषिता । अचि भषः । गौरादित्वाद् ङ्याम् भषी । क्ते भषितम् । निकृतौ नाम्नी-त्यकटि भषकः ॥

522. जिषू 523 विषू 524 मिषू 525 निषू 526 पृषू 527 वृषू सेचने । षडप्यूदितः । जेषति जेषिता । ऊदित्त्वात् क्त्वि वेट् जिष्ट्वा । धी-व्यञ्जनादेरिति वा किरवे जेषित्वा जिषित्वा ॥

523. विपू । वेपति परिवेपति वेपिता विट्वा वेपित्वा विपित्वा । विपूंकी व्याप्तौ । वेवेष्टि वेविष्टे ॥

524. मिपू । मेपति मेपिता मिट्वा मेपित्वा मिपित्वा । लिहादिभ्य इत्यचि मेपः । मिपत् स्पर्धायाम् । मिपति ॥

525. निपू । नेपति नेपिता निट्वा नेपित्वा निपित्वा । बहुभिरयं न पठ्यते ॥

526. पृषू । पर्षति पर्षिता पृष्ट्वा पर्षित्वा । वेट्त्वात् क्तयोर्नेट् पृष्टः पृष्टवान् । नाम्युपान्त्येति के पृषः । ऋदुपान्त्यादिति क्यपि पृष्यम् । उणादौ पीविशीति किति डे पृष्ठम् १६३ । पृषिरञ्जीति किल्यते पृषतो मृगो विन्दुश्च २०८ । क्रुशिपिशीति कितीते पृषितं वारिबिन्दुः २१२ । हिरण्येति निपातनादन्ये परिपर्षतीति पर्जन्यः ३८० । ऋद्घिति किति णौ पृष्णि: किरणः ६३५ । पृषिहृषिभ्यां वृद्धिश्चेति णौ पार्ष्णिः ६३६ । द्रुहिवृहीति कतरि पृषन्ति जलविन्दवः । पृषती मृगी । स्थूलपृषतीमालभेत ८८४ ॥

527. वृषू । वर्षति वर्षिता वृष्ट्वा वर्षित्वा वृष्टः वृष्टवान् । शाभेच्छार्थेति ॥ सत्यर्थे क्ते वृष्टो मेघः । कृवृषीति वा क्यपि वृष्यम् वर्ष्यम् । नाम्युपान्त्येति के वृषः । शृकमेत्युकाणि वर्षणशीलो वर्षुकः । वर्षादयः क्लीबे इत्यलि वर्षम् । भिदादय इति निपातनादङि वर्षाः । क्विबिति क्रुस्मपदादिभ्य इति वा क्विपि प्रवर्षति प्रवर्षन्त्यत्र मेघा इति वा प्रावृट् । अत्र गतिकारकस्येति प्रस्य दीर्घः । उणादौ कपिवृषीति किल्यभे वृषभः ३३१ । वृषिरपीति किल्यले वृषलः ४६८ । ऋद्घिति किति णौ वृष्णिः ६३५ । ऋवृष्यिति किल्यनि वृषेन्द्रः ९०१ । दिविपुरीति किदाः वृषा प्रबलम् ५९९ ॥

528. मृषू सहने च । षकारान्तमेनमन्ये मर्षति मर्षिता । ऊदित्त्वात् क्त्वि वेट् मृष्ट्वा । इति ऋत्तृषेति क्त्वो वा किस्त्वे मृषित्वा मर्षित्वा । वेट्त्वात् क्तयोर्नेट् मृष्टः मृष्टवान् । अत्रानिट्त्वात् क्तयोः क्षान्तावपि मृषः क्षान्ताविति न किद्वत्प्रतिषेधः । शासूयुधीत्यने दुर्मर्षणः सुमर्षणः । मृषीच् तितिक्षायाम् । मृष्यति मृष्यते । अपमृषितं वाक्यमाह ॥

529. उषू 530 श्रिषु 531 श्लिषू 532 प्रुषू 533 प्लुषू दाहे । पञ्चाप्युदितः । ओषति । जागुषेति धामादेशे ओषा चकार इत्येव । ओषिता । ऊदित्त्वात् क्त्वि वेट् उष्ट्वा उषित्वा । ये तूदितं न मन्यन्ते तन्मते उषित्वेत्येव भवति । उणादौ उषेः किद्गुक् चेति खे उखा ८८ । धनिकर्णीति टे ओष्टः १६२ । पृषी-

ह्वेति किति ये उष्णम् १८३ । सूमूखनीति किति त्रटि उष्ट्रः ४४९ । उषेर्ज चेत्यसि ओजो बलम् ९९९ । मिथिरञ्जुषीति कित्यसि उषः प्रातः ९७१ ॥

530· श्रिषू । श्रेषति शिश्रेष श्रेषिता श्रिष्ट्वा श्रेषित्वा श्रिषित्वा श्रिष्टः श्रिष्टवान् । नाम्युपान्त्येति के श्रिषः ॥

531· श्लिषू । श्लेषति श्लेषिता श्लिष्ट्वा श्लेषित्वा श्लिषित्वा श्लिष्टः श्लिष्टवान् अश्लेषीत् । श्लिषंच् आलिङ्गने । श्लिष्यति श्लेष्टा श्लेष्मा । श्लिषण् श्लेषणे । श्लेषयति ॥

532· प्रुषू । प्रोषति पुप्रोष प्रोषिता प्रुष्ट्वा प्रोषित्वा प्रुषित्वा । उणादौ निघृषीति किति ये प्रुष्वा निवृत्तिः ५११ ॥

533· प्लुषू । प्लोषति पुप्लोष प्लोषिता प्लुष्ट्वा प्लोषित्वा प्लुषित्वा प्लुष्टः प्लुष्टवान् । प्लुषूच् दाहे । प्लुष्यति । प्रुष, प्लुषश् स्नेहसेचनपूरणेषु । प्रुष्णाति प्लुष्णाति ॥

534· घृषू संहर्षे । घर्षति जघर्ष घर्षिता । ऊदित्त्वात् घृष्ट्वा घर्षित्वा । वेट्त्वात् क्तयोर्नेट् घृष्टः घृष्टवान् । नन्द्यादिभ्य इत्यने संघर्षणः । उणादौ निघृषीति किति ये निघृष्वोऽनुकूलः ५११ ॥

535· हृषू अलीके । हर्षति जहर्ष हर्षिता । ऊदित्त्वात् हृष्ट्वा हर्षित्वा । वेट्त्वात् क्तयोर्नेट् हृष्टः हृष्टवान् । शील्यादित्वादत्र सत्यर्थे क्तः । हृषेः केशलोमविस्मयप्रतिघाते इति वा नेटि हृष्टाः हृषिताः केशाः हृष्टम् हृषितं केशैः । एवं हृष्टानि हृषितानि लोमानि । हृष्टः हृषितश्चैत्रः विस्मित इत्यर्थः । हृष्टाः हृषिता दन्ताः प्रतिहता इत्यर्थः । उणादौ हृषिवृतीत्युले हर्षुलः कामी ४८९ । हृषिपुषीति णायिल्नौ हर्षयित्नुः स्वजनः ७९७ । तुषं हृषच् तुष्टौ । हृष्यति ॥

536· पुष पुष्टौ । पोषति पुपोष अपोषीत् पोषिता । स्वस्नेहनार्थादिति णमि स्वपोषम् गोपोषम् रैपोषम् । पुषितः । उणादौ सूपुषिभ्यां किदिति करे पुष्करम् ४३६ । वलिपुषेः कलक् पुष्कलः ४९६ । हृषिपुषीति णायिल्नौ पोषयित्नुर्मेघः ७९७ । पुषंच् पुष्टौ । पुष्यति अपुषत् । अत्र लृदिद्द्युतेत्यङ् । पुषश् पुष्टौ । पुष्णाति । पुषण् धारणे । पोषयति ॥

537· भूष 538 तसु अलंकारे । भूषति बुभूष भूषिता । क्ते भूषितः । क्ते सेट्त्वात् क्तेट इत्यः भूषा । अनटि भूषणम् ॥

अथ सान्तास्त्रयोदश षसंवर्जाः सेटश्च ॥

538· तसु । उदित्त्वान्ने तंसति ततंस तंसिता । व्यञ्जनाद्घञि उत्तंसः अवतंसः । भूष तसुण् अलंकारे । भूषयति । तंसयति ॥

**539.** तुस **540** ह्रस **541** ह्लस **542** रस शब्दे। तोसति तुतोस तोसिता। उणादौ तोसलो राजा। तोसला देशः ४६५ ॥

**540.** ह्रस। ह्रसति जह्रास ह्रसिता। क्ते ह्रसितः। उणादौ लटिखटीति वे ह्रस्वः ५०५ ॥

**541.** ह्लस। ह्लसति जह्लास जह्लसतुः जह्लसुः ह्लसिता। क्ते ह्लसितः ॥

**542.** रस। रसति ररास रेसतुः रेसुः रसिता। क्ते रसितम्। उणादौ रसेर्वेति णिति ने रास्नौषधिः। रस्ना जिव्हा २६०। रसण् आस्वादनस्नेहनयोः। अदन्तः रसयति। कर्मण्यलि रसः। स्यासिरसीत्युणादावने रसना रसनं जिह्वा २६१ ॥

**543.** लस श्लेषणक्रीडनयोः। लसति ललास' लेसतुः लेसुः लसिता। क्ते लसितम्। अचि लसः कर्मसु श्लिष्टः समाहित इति यावत्। न लसोलसः। वेर्विचेति घिनणि विलसनशीलो विलासी। घ्यणि लास्यम्। घञि विलासः। हृदयस्य हृदिति हृदादेशे हृल्लासः। तिकृतौ नाम्नीत्यके लसिका रोगः ॥

**544.** घसॢं अदने। घसति। क्ये घस्यते। जघास जक्षतुः जक्षुः। अत्र गमहनेत्युपान्त्यलोपे। अघोषे इति प्रथमत्वे घस्वस इति षत्वम्। अनुस्वारेत्त्वान्नेट् घस्ता घस्तुम्। सृघस्यदो मरक् घस्मरः। घञि घासः। उणादौ भीवृधीति रे घस्रो दिनम् ३८७। मरग्विषय एव घसिरित्येके ॥

**545.** हसे हसने। हसति जहास जहसतुः जहसुः हसिता। व्यञ्जनादेरिति वा वृद्धेरेदित्त्वाच्च श्विजागिति प्रतिषेधे अहसीत्। क्रियाव्यतिहारे इत्यत्र हसो वर्जनान्नात्मनेपदम् व्यतिहसन्ति। न वा क्वणेति वालि हसः हासः। उणादौ दम्यमीति ते हस्तः २००। भीवृधीति रे हस्रो दिनम्। महस्रं दश शतानि ३८७ ॥

**546.** पिसृ **547** पेसृ **548** वेसृ गतौ। पेसति पिपेस पेसिता। ऋदित्त्वाण्णौ ङे अपिपेसत्। *नाम्युपान्त्येति के पिसः। स्येशभासेति वरे पेसनशीलः* पेस्वरः। पिसण् हिंसायाम्। पेसयति ॥

**547.** पेसृ। पेसति। क्ये पेस्यते। पिपेस पेसिता। ऋदित्त्वाण्णौ ङे अपिपेसत्। क्ते पेसितम् ॥

**548.** वेसृ। वेसति। क्ये वेस्यते। विवेस। ऋदित्त्वाण्णौ ङे अविवेसत्। वेसिता। क्ते वेसितम्। उणादौ जठरक्रकरेति निपातनादरे वेसरः ४०३.४३९॥

**549.** शसू हिंसायाम्। तालव्यादिः। शसति शशास। अनादेशादेरित्येत्वस्य न शसददेति प्रतिषेधात् शशसतुः शशसुः। शसिता। ऊदित्त्वात् शस्त्वा

शसित्वा । धृष्टशास इति प्रगल्भे एव नेट् विशस्तः प्रगल्भः । अन्यत्रेटि विश-सितः । व्यञ्जनादेरिति वा वृद्धेर्न श्विजागिति प्रतिषेधे अशसीत् । मीदाविति त्रटि शस्त्रम् । उणादौ शासिशंसीति तृः विशस्ता घातकः ८६७ ॥

550. शंसू स्तुतौ च । तालव्यादिः । चकाराद्धिंसायाम् । शंसति शशंस शशंसतुः शशंसुः । क्ये शस्यते । शंसिता । ऊदित्त्वात् शस्त्वा शंसित्वा । क्त्वि वेट्त्वात् क्तयोर्नेट् शस्तः शस्तवान् । कृवृषीति वा क्यपि प्रशस्यम् । पक्षे घ्यणि प्रशंस्यम् । अणि नृशंसः । यो नृणान् शंसति निर्गतशंसो वा नृशंसः निरनुकम्प इत्यर्थः । पृषोदरादित्वान्निरो नृभावः । अनेकार्थत्वाद्वा द्रोहार्थत्वे नॄन् शंसतीति नृशंसः । ब्राह्मणादाहत्य शंसतीत्यजातेरिति णिनि ब्राह्मणाच्छंसी । ब्राह्मणाच्छं-सीति निपातनाड् ङसेरलुप् । शंसिप्रत्ययादित्यः प्रशंसा । उणादौ चिमिदीति क्तिति त्रे शस्त्रं स्तोत्रमायुधं च ४५४ । शासिशंसीति तृः शंस्ता पशुविशसिता ८६७ ॥ जर्त्स परिभाषणहिंसातर्जनेष्वित्येके । जर्त्सति जर्त्सन्ती स्त्री ॥

अथ हान्ताः पञ्चदश मिहंदहंवर्जाः सेटश्च ॥

551. मिहं सेचने । मेहति मिमेह । अनुस्वारेत्त्वान्नेट् मेढा मेढुम् । हशिट इति सकि अमिक्षत् । नाम्युपान्त्येति के मिहः । लिहादिभ्य इति व्यञ्जनादिति घञि वा न्यङ्कुद्वेति घत्वम् मेघः । क्तयेति घ्यणि मेहः । नीदाविति त्रटि मेढ्रः । अनटि मेहनम् । दाश्वत्साह्वेति निपातनात् क्वसौ मीढ्वान् मीढ्वांसौ । उणादौ शुषी-षीति किरे मिहिरः ४१६ ॥

552. दहं भस्मीकरणे । दहति ददाह । अनुस्वारेत्त्वान्नेट् दग्धा धक्ष्यति । गृलुपेति यङि जपजभेति पूर्वस्य मौ दन्दह्यते । यङ्लुपि दन्दहीति दन्दग्धि । घ्यणि दाह्यम् । व्यञ्जनाद्घञि निदाघोऽव्यभिचारि निदाघः । भावे घञि दाघः । कर्मणि अवदाघः । भक्ष्ये न्यङ्कुद्वेति घत्वम् । अन्यत्र अवदाहः । वेर्दह इति घिनणि विदहनशीलो विदाही । परेरिति परिदाही । उणादौ स्यमिदम्बीत्यने दहनः २६९ ॥

553. चह कल्कने । कल्कनं शाठ्यम् । चहति चचाह चेहतुः चेहुः । व्यञ्जनादेरिति वा वृद्धेर्न श्विजागिति प्रतिषेधात् अचहीत् । यङि चाचह्यते । यङ्-लुपि चाचहीति चाचाढि । अचि चहः शठ इत्यर्थः । चहण् कल्कने । अदन्तः चहयति । चहणः शाठ्ये इति ञिणम्परे णौ वा दीर्घे अचाहि अचहि चाहं चाहम् चहं चहम् ॥

554. रह त्यागे । रहति रराह रेहतुः रेहुः । न श्विजागिति वृद्धिप्रतिषेधात् अरहीत् । उणादौ कृवापाजीत्युणि राहुः १ । असिल्यसि रहः ९५२ । रहण् त्यागे । रहयति । अलि विरहः ॥

555. रहु गतौ । उदित्त्वान्ने रहति ररंह रंहिता । उणादौ असिल्यसि रंहः ९५२ । रहुण् गतौ । रंहयति ॥

556. दृह 557 दृहु 558 वृह वृद्धौ । दर्हति ददर्ह दद्हतुः दद्हुः दर्हिता ॥

557. दृहु । उदित्त्वान्ने दृंहति । क्ये दृह्यते । बलिस्थूले इति निपातनात् क्ते दृहेर्दृंहेश्च दृढः । दृंहितुम् ॥

558. वृह । वर्हति वर्हिता । क्षुब्धविरिब्धेति निपातनात् क्ते नेट् परिवृढः प्रभुः । उणादौ द्रुहिवृहीति कतृः बृहन् बृहन्तौ बृहती ८८४ ॥

559. वृह्‌ 560 वृहु शब्दे च । चकाराद्वृद्धौ । वर्हति ववर्ह वर्हिता । ऋदित्त्वाद्वृदित्श्वेति ङाडि अवृहत् । पक्षे अवर्हीत् । शतरि वर्हन् वर्हन्तौ वर्हन्तः । णके वर्हकः ॥

560. वृहु । उदित्त्वान्ने वृंहति वृंहिता । क्ये वृह्यते । णके वृंहकः । वृंहन् वृंहन्तौ वृंहन्तः । क्ते वृंहितम् । क्षुब्धविरिब्धेति निपातनात् क्ते परिवृढः । उणादौ वृंहेर्नोच्चेति मनि ब्रह्म ९१३ । वर्हिर्वृहेर्नलुक् चेतौसि वर्हिः ९९० ॥

561. उहृ 562 तुहृ 563 दुहृ अर्दने । ऋदित्त्वयोपि । ओहति । उपसर्गस्येत्यवर्णलोपे अपोहति । ऋदित्त्वाङ्डि औहत् । पक्षे औहीत् ॥

562 तुहृ । तोहति । ऋदित्त्वाड्डाडि अतुहत् अतोहीत् । उणादौ यृमितुहीतीने तुहिनम् २८३ ॥

563 दुहृ । दोहति । ऋदित्त्वाड्डाडि अदुहत् अदोहीत् ॥

564. अर्ह 565 मह पूजायाम् । अर्हति । अनात इत्यादौ ने च आनर्ह आनर्हतुः आनर्हुः । अर्हिता । अर्हीत् पूजार्हः पूजार्हा । सुगद्विषेत्यतृशि त्रिलोक्यभ्यर्चनप्रकर्षमर्हति अर्हन् । व्यञ्जनाद्घञि न्यङ्कुद्वेति घे च अर्हन्ति तेनेत्यर्घो मूल्यं पूजाद्रव्यं च । अर्घधात्वन्तरं च सौत्रम् अर्घ ।

कलां नार्घन्ति षोडशीम् ॥

शकधृषेति तुमि अर्हति मोक्तुम् । अर्हण् पूजायाम् । अर्हयति । अयमर्थविशेषे पूजायामेव चुरादिरिति पूजाया अन्यत्र योग्यत्वादौ न णिच् अर्हति । इह च पूजायां पाठात्पूजायामपि णिजभावः ॥

**565.** मह । महति महिता । अचि महः । गौरादित्वाद् ङ्याम् मही । उणादौ द्रुहियुहीति कर्तरि महान् महान्तौ महान्तः ८८४ । असित्यसि महः महसी ९५२ । महेरुच्चास्य वेति खेन्तलुकि च मुखम् मखः ८१ । महेर्णिद्वेतीने माहिनं महिनं च राज्यम् । महिनो माहात्म्यवान् २८९ । महविभ्यां टिदितीषे महिषः महिषी ५४७ । महण् पूजायाम् । महयति ॥

अथ क्षान्ता विंशतिः सेटश्च । क्षान्तानां षान्तेषु पाठो युक्तो वैचित्र्यार्थं त्विह कृतः ॥

**566.** उक्ष सेचने । उक्षति । गुरुनाम्यादेरित्यामादेशे उक्षां चकार । उक्षिता । क्ते उक्षितः । व्यतिहारे इति ञे नित्यं ञेति स्वार्थेणि व्यौक्षी । उणादौ उक्षितक्षीत्यनि उक्षा ९०० ॥

**567.** रक्ष पालने । चौराद्रक्षति ररक्ष रक्षिता । महादीति णिनि निरक्षी । क्ते रक्षितः । क्ते सेट्त्वात् क्तेट इत्यः रक्षा । उणादौ असित्यसि रक्षः ९५२ । भीमादित्वादपादाने साधुः । प्रज्ञादित्वात्स्वार्थेणि राक्षसः ॥

**568.** मक्ष **569** मुक्ष संघाते । मक्षति मक्षिता । णके मक्षिका । रोषेऽयमित्येके । घञि मक्षो मन्युः ॥

**569.** मुक्ष । मुक्षति मुक्षिता ॥

**570.** अक्षौ व्याप्तौ च । चकारात्संघाते । वाक्ष इति श्नुः अक्ष्णोति अक्षति । अनात इत्यात्वे ने च आनक्ष आनक्षतुः आनक्षुः । औदित्वाद्धूगौदित इति वेटि अष्टा अक्षिता । वेट्त्वात् क्तयोर्नेट् अष्टः अष्टवान् । उणादौ जठरक्रकरेत्यरे अक्षरम् ४०३-४३९ । पदिपठीति इः अक्षि ६०७-७०७ । उक्षितक्षीत्यनि अक्षा दृष्टिनिपातः ९०० ॥

**571.** तक्षौ **572** त्वक्षौ तनूकरणे । तनूकरणं कार्श्यम् । तक्षः स्वार्थे वेति श्नुः तक्ष्णोति तक्षति । स्वार्थः पाठापेक्षया तनूकरणम् । इदमेव ज्ञापकं धातवोऽनेकार्था इति । स्वार्थादन्यत्र संतक्षति वाग्भिः शिष्यम् निर्भर्त्सयते इत्यर्थः । ततक्ष । औदित्वाद्वेट् तष्टा तक्षिता । वेट्त्वात् क्तयोर्नेट् तष्टः तष्टवान् । णके तक्षकः । उणादौ उक्षितक्षीत्यनि तक्षा ९०० । स्त्रियां नृत इति ङ्याम् तक्ष्णी ॥

**572.** त्वक्षौ । त्वक्षति तत्वक्ष । औदित्वाद्वेट् त्वष्टा त्वक्षिता । वेट्त्वात् क्तयोर्नेट् त्वष्टः त्वष्टवान् ॥

**573.** णिक्ष चुम्बने । चुम्बनं वक्त्रसंयोगः । पाठे इति णस्य नत्वे निक्षति ।

अदुरुपसर्गेति णत्वे प्रणिक्षति परिणिक्षति । निक्षिता । निंसनिक्षेति कृति वा णत्वे प्रनिक्षणम् प्रणिक्षणम् प्रनिक्षिता प्रणिक्षिता । कृदभावेपि वा णत्वमित्येके प्रनिक्षति प्रणिक्षति । एवं निंसनिन्दोरपि ॥

574. तृक्ष 575 स्तृक्ष 576 णक्ष गतौ । तृक्षति ततृक्ष तृक्षिता । अचि तृक्षः । तृक्षस्यापत्यं वृद्धम् तार्क्ष्यः ॥

575. स्तृक्ष । स्तृक्षति तस्तृक्ष स्तृक्षिता । षोपदेशोयामिति चन्द्रः ॥

576. णक्ष । पाठे इति णस्य नत्वे नक्षति । अदुरुपसर्गेति णत्वे प्रणक्षति । अचि नक्षः । उणादौ वृगृनक्षीत्यत्रे नक्षत्रम् ४९६ । नखादिः । तत्रैत्वस्य निपातनं नाम्नां व्युत्पत्तिरव्यवस्थितेति ज्ञापनार्थम् ॥

577. वक्ष रोषे । संघाते इत्येके । वक्षति ववक्ष । उणादौ असित्यसि सपत्नीरोपथियत्वाद्वक्षतीति वक्ष उरः ९९२.९८३ ॥

578. त्वक्ष त्वचने । त्वचनं त्वग्ग्रहणं संवरणं वा । त्वक्षति तत्वक्ष त्वक्षिष्यति त्वक्षिता । उणादौ शासिशंसीत्यादिग्रहणात्तृः त्वष्टा त्वष्टारौ ८९७.८६५ ॥

579. सूर्क्ष अनादरे । सूर्क्षति सुसूर्क्ष सूर्क्षिता । मनि सुसूर्क्ष्मा । यान्तोयमित्यन्ये सूर्क्ष्यति सुसूर्क्ष्य । मनि य्वोरिति यलोपे सूर्क्ष्मा ॥

580. काक्षु 581 वाक्षु 582 माक्ष काङ्क्षायाम् । उदित्वान्ने काङ्क्षति चकाङ्क्ष ॥

581. [ वाक्षु । ] वाङ्क्षति ववाङ्क्ष ॥

582. [ माक्षु । ] माङ्क्षति ममाङ्क्ष ॥

583. द्राक्षु 584 धाक्षु 585 ध्वाक्षु घोरवाशिते च । चकारात्काङ्क्षायाम् । घ्रयोप्युदितः । उदित्वान्ने द्राङ्क्षति दद्राङ्क्ष ॥

584. [ धाक्षु । ] धाङ्क्षति दधाङ्क्ष ॥

585. [ ध्वाक्षु । ] ध्वाङ्क्षति दध्वाङ्क्ष । अचि ध्वाङ्क्षः ॥

एते निरनुबन्धत्वाच्छेषात्कर्तरीति परस्मैपदिनः ॥

अथ ङित आत्मनेपदिन आईक्षेर्वर्णसमाम्नायक्रमेण वक्ष्यन्ते ॥

586. गांङ् गतौ । ङित्त्वादात्मनेपदम् । एकद्विबहुत्वेषु गाते जगे जगाते जगिरे । क्ये ईर्व्यञ्जनेयपीति ईत्वे गीयते । ये तु गायतेरेयेत्यमिच्छन्ति तन्मते गायते । अनुस्वारेत्त्वान्नेट् गाता गातुम् गातव्यम् । इणिकोर्गा अगात् । कैं गैं रैं शब्दे । गायति ॥

587. ष्मिङ् ईषद्धसने । षः स इति षस्य सत्वे स्मयते । षोपदेशत्वाच्चा-न्यन्तस्थेति षत्वे सिष्मिये सिष्मियाते सिष्मियिरे । अनुस्वारेत्त्वान्नेट् स्मेता स्मेतुम् । सनि ऋस्मिपूङितीटि सिस्मयिषते । अत्र णिस्तोरेवेति नियमान्न षत्वम् । यङि से-ष्मीयते । यङ्लुपि सेष्मेति सेष्मयीति । णौ स्मिङः प्रयोक्तुरित्यात्वे आत्मनेपदे च मुण्डो विस्मापयते । करणात्स्वार्थे तु रूपेणैनं विस्मापयति । स्म्यजसेति रे स्मेरः ॥

588. डीङ् विहायसां गतौ । डयते डिड्ये डिड्याते ।

वयांसि च निडिड्यिरे ॥

इटि डयिष्यते । क्तयोरिटि न डीङ्शीङिति किस्त्वप्रतिषेधात् डयितः डयि-तवान् । डीङच् गतौ । डीयते । क्तयोर्डीयश्व्यैदित इति नेट् सूयत्यादीति तस्य नत्व च डीनः डीनवान् ॥

अथ उकारान्ता एकादश अनिटश्च ॥

589. उंङ् 590 कुंङ् 591 गुंङ् 592 घुंङ् 593 ङुंङ् शब्दे । पञ्चाप्य-नुस्वारेतः । अवते । वार्णात्प्राकृतं बलीय इति न्यायादन्तरङ्गादीर्घात्प्रागुवादेशे ऊवे ऊवाते ऊविरे । क्ये दीर्घश्च्वीति दीर्घे ऊयते । अनुस्वारेत्त्वान्नेट् ओता ओतुम् । सनौ नामिनोनिडिति किस्त्वाद्गुणाभावे स्वरहनेति धातोर्दीर्घे सनो द्वित्वे ऊयिषते । क्तयोः उतः उतवान् । णिगि आवयति । युवर्णेत्यलि अवः । उणादौ स्वरेभ्य इः अविः ६०६-६०७ ॥

590. कुङ् । कवते चुकुवे कोता कोतुम् । न कवतेर्यङ इति कस्य चत्व-प्रतिषेधात् कोकूयते खरः । तिनिर्देशाद्यङ्लुपि चत्वप्रतिषेधाभावात् चोकोति । उणादौ कुपूसमिण्भ्यश्चट् दीर्घश्च कूचो हस्ती । कूची चित्रोपकरणम् ११२ । युसुक्तिति पे ऊत्वे च कूपः २९७ । ऋच्छिचटीत्यरे कबरो वर्णः । कबरी वेणिः ३९७ । नीमीति वरटि दीर्घे च कूवरः ४४३ । स्वरेभ्य इति इः कविः ६०६ । कुंक् शब्दे । कौति चोकूयते । कुंङ् कुङत् शब्दे । कुवते चोकूयते ॥

591. गुंङ् । अयमव्यक्ते शब्दे इत्येके । गवते जुगुवे । अनुस्वारेत्त्वान्नेट् गोता गोतुम् । उणादौ शुभिगृहीति किस्याके गुवाकम् ३९ । मवाकेति निपात-नादाके गूवाकम् ३७ । हुयामेति मे गोत्रम् ४५१ । मृदिकन्दीत्यले गवलम् ४६९ । दीर्घान्तमेनं परस्मैपदिनं पुरीषोत्सर्गे केचिदधीयते । गवति । गुंत् पुरीषो-त्सर्गे । गुवति गुता गुतुम् ॥

592. घुंङ् । घवते जुघुवे । अनुस्वारेत्त्वान्नेट् घोता घोतुम् । उणादौ घुघुहीति के दीर्घे च घूकः २४ ॥

593. डुंङ् । डवते डुडुवे । याङि ओडूयते । अनुस्वारेत्त्वान्नेट् डोता डो-तुम् । खुंङ् चेत्येके ॥

594. च्युंङ् 595 ज्युंङ् 596 जुंङ् 597 प्रुंङ् 598 प्लुंङ् गतौ । पञ्चाप्यनिटः । च्यवते चुच्युवे । णिगि च्यावयति । णौ सनि श्रुस्रिवति वा ओरित्त्वे चिच्यावयिषति चुच्यावयिषति । णौ ङे सन्वद्भावात् अचिच्यवत् अचुच्यवत् । अनु-स्वारेत्त्वान्नेट् च्योष्यते च्युतः च्युतवान् । नन्द्यादिभ्य इत्यने च्यवनः ॥

595. ज्युंङ् । ज्यवते जुज्युवे । अनुस्वारेत्त्वान्नेट् ज्योता । उणादौ मवाकश्यामाकेत्याके निपातनात् ज्योत्नाकं स्वेदगृहम् ३७ ॥

596. जुंङ् । जवते जुजुवे । अनुस्वारेत्त्वान्नेट् जोता । भूषाक्रोधार्थेत्यने जवनशीलो जवनः । प्रात्सूजोरिन् प्रजवनशीलः प्रजवी । दिद्युदिति निपातनात् क्विपि जूः पिशाचः । जुवौ जुवः । युवर्णेत्यलि जवः । सातिहेतीति निपातनात् क्तौ जूतिः । सौत्रोप्ययं जवति ॥

597. प्रुंङ् । प्रवते पुप्रुवे । अनुस्वारेत्त्वान्नेट् प्रोता । णौ फलवत्कर्तर्यात्मनेपदापवादे चल्याहारेति परस्मैपदे प्रावयति । णौ सनि श्रुस्रिवति वा ओरित्त्वे पिप्रावयिषति पुप्रावयिषति । णौ ङे सन्वद्भावात् अपिप्रवत् अपुप्रवत् । प्रुसृल्व इत्यके साधु प्रवते प्रवकः । युवर्णेत्यलि प्रवः । दिद्युदिति निपातनात् क्विपि कटप्रूर्नदीतीरः । उणादौ कमिभुगेति ये प्रोथोश्वघोणाग्रम् २२९ ॥

598. प्लुंङ् । प्लवते पुप्लुवे । अनुस्वारेत्त्वान्नेट् प्लोता । णौ सनि श्रुस्रिवति वा ओरित्त्वे पिप्लावयिषति पुप्लावयिषति । णौ ङे सन्वद्भावात् अपिप्लवत् अपुप्लवत् । भव्यगेयेति निपातनाद्वा कर्तरि घ्यणि आप्लाव्यश्चैत्रो नद्याम् । पक्षे भावे उवर्णादिति घ्यणि आप्लाव्यमनेन । अचि प्लवः । गौरादित्वात् ङ्याम् प्लवी । आङो रुप्लोरिति वालि आप्लवः आप्लावः ॥

599. रुंङ् रेषणे च । चकाराद्गतौ । रेषणं हिंसाशब्दः । रवते रुरुवे । अनुस्वारेत्त्वान्नेट् रोता रोतुम् । आङो रुप्लोरिति वालि आरवः आरावः । रोरु-पसर्गादिति घञि विरावः संरावः । उणादौ वृकृभिल्यणे रवणः १८७ । सर्वेभ्य इति इः रविः ६०६ । रुपुभ्यां किदिति रौ रुरुः ८०७ । रुक् शब्दे । ङिति ॥

अथ ऊदन्तौ द्वौ सेटौ च ॥

600. पूङ् पवने । पवनं नीरजीकरणम् । पवते पुपुवे पविता पवितुम् । मस्गुहभेति निषेधापवादे स्मिपूङिति सनीटि ओर्जान्तस्थेति पुरस्याने इत्वे म

पिपविपते । यङि पोपूयते । यङ्लुपि पोपोति पोपवीति । पूङ्क्लिशिभ्यो न वेति क्तक्तवत्क्त्वामादौ वेटि पवितः पवितवान् । अत्र न डीङितीति किच्चाभावाद्गुणः । पक्षे पूतः पूतवान् । पवित्वा । अत्र क्त्वेति किच्चाभावाद्गुणः । पक्षे पूत्वा । पूदिव्यञ्चेरिति क्तयोर्नत्वे पूना यवाः विनष्टा इत्यर्थः । जिविपून्यो हलीति क्यपि विपूयो मुञ्जः । पूङ्यजः शानः पवमानः । हलक्रोडास्ये इति त्रटि हलस्य पोत्रम् सूकरस्य पोत्रम् । पुव इत्रो दैवते पवित्रोऽर्हन् । ऋषिनाम्नोः करणे पवित्र ऋषिः । पवित्रं दर्भादि । निरभेः पूल्व इति घञि निष्पावः । नन्द्यादित्वादने पवनः । न ख्यापूगित्यत्र गितो वर्जनात्स्वरादिति णत्वे प्रपवणम् प्रपवणीयम् । उणादौ दम्यमीति ते पोतः २०० । पुमुदिभ्यां किदिति गे पूगः ९२ । ग्वसिरसीत्यने पवनः २६९ । शिक्यास्याढ्येति निपातनात् पुण्यम् ३६४, ३६१ । पुत्रादय इति त्रे ह्रस्वे च पुत्रः ४५५ । स्वरेभ्य इः पविः ६०६ । हुपूञ्भ्योऽनीति तृः पोता पोतारौ ८६३ । पूग्श् पवने । पुनीते पुनाति ॥

601. मूङ् बन्धने । मवते मुमुवे मविता मवितुम् । यङ्गुरुश्चेति सनि नेट् मुमूषते । णौ सन्योर्जान्तस्येति पूर्वस्योत इत्वे मिमावयिषति । उणादौ चिञ्पुर्वीति किति के मुकः २२ । डीरीति किति ते मृतः पुत्रबन्धः २०१ । जीवनस्य मूतो जीमूतः पृषोदरादिः [२१६] । शुकशीति किति ले मूलम् ४६३ । जुपूस्विति किति पे मूपा ५४२ ॥

602. धृङ् अविध्वंसने । धरते दध्रे । णिगि मैत्राय शतं धारयति । अत्र शक्तिकृत्यर्थेत्युत्तमर्णाच्चतुर्थी । यङि देध्रीयते । यङ्लुपि दरीधर्ति दरिधर्ति दर्धर्ति । साह्निसातीत्यजपवादे शे धारयः । धारेर्धर्चेति खे वसुंधरा जलंधरः युगंधरः । धारीड इत्यतृशि धारयन्नाचारम् । अत्र तृनुदन्तेति कर्मणि न षष्ठी । क्विपि क्षेमधृत् । न्यायावायेति निपातनात्करणाधारे धापदादेशे घञि आधारः । भिदादिनिपातनादङि धारा प्रपातः । धृतिरन्या । उणादौ अर्तीरीति मे धर्मः ३३८ । ऋहलिस्यणी धरणिः ६३८ । धृग् धारणे । धरति धरते । धृङ्त् स्थाने । ध्रियते । चुरादेराकृतिगणत्वात् धारयति । उभयपदिषु पठिष्यमाणस्याप्यस्याविध्वंसने धरतीति प्रयोगनिवृत्त्यर्थं इह पाठः ॥

अतः परावेदन्तौ द्वावनिटौ च ॥

603. मेङ् प्रतिदाने । प्रतिदानं प्रत्यर्पणम् । मयते प्रणिमयते । अत्र नेर्ङ्गादेति नेर्णत्वम् । ईर्व्यञ्जने इतीत्वे मीयते । ममे । अनुस्वारेत्त्वान्नेट् माता मातुम् ।

मिमीमादेति स्वरस्येत्त्वाभावे द्वित्वाभावे च सनि मित्सते । आतो डोऽह्वेत्यत्र माबर्जनादणि द्रोणमाय । यङि मेमीयते । यङ्लुपि मामाति मामेति । दोसोमास्थ इ मित मितवान् । निमील्यादीति परकालार्थादपि वा क्त्वि अपमित्य याचते । अपमाय याचते । अत्र मेङो वा मिदिति वा मित् । पक्षे यान्त्यलोपमयते । उणादौ ञिमुमेर्कीति निपातनाद्रो मेरु नमेरु ८०६ ८११ । स्याछमेति ये माया ३५७। माङ्क माने । माति । माङक मानशब्दयोः । मिमीते ॥

604 देङ् 605 त्रैङ् पालने । दयते । ईर्व्यञ्जने इतीत्वे दीयते । ङेर्दिगिरिति दिग्यादेशे दिग्ये । मेङ्गेदिति नेर्णत्वेनुस्वारेत्त्वादिड्भावे च प्रणिदाता प्रणिदातुम् । उणादौ मनिनिति मनि दाम ९११ । दाम दाने । यच्छति । देव् शोधने । दायति । दाप्क लवने । दाति । डुदाग्क दाने । ददाति । दोंच छेदने । द्यति ॥

अथ ऐदन्तास्त्रयोविंशत्य ॥

605 [त्रैङ्।] त्रायते तत्रे त्रातो । अनुस्वारेत्त्वान्नेट् । त्राता । क्तेटीत्रेति क्तयोस्तस्य वा नत्वे त्रात देवत्रात त्राण त्रानवान त्राणवान् ॥

606 श्यैङ् गतौ । तालव्यादिः । श्यायते शश्ये शश्याते । अनुस्वारेत्त्वान्नेट् श्याता श्यातुम् । श्य शीर्द्रवमार्तस्पर्शो श्चास्पर्शे शीनं घृतम् । स्पर्शे तु क्तयोस्तस्य नत्वाभावे शीत वर्तते शीतो वायुः । अन्यत्र सश्याः शीनो मधुरित इत्यर्थः । अत्र व्यञ्जनान्तस्थात इति नत्वम् । प्रतेरिति शीभावे क्तयोर्नत्वे । प्रतिशीनः प्रतिशीनवान् । प्रतिपर्यायं रोगार्थे । वाभ्यवाभ्यामिति वा शीभावे क्तयोर्नत्वे च अभिशीन अभिश्यान अवशीन अवश्यान । उपसर्गात्परत्वात् श्यायतेर्नानुस्वाभावे तन्व्यधीति णे प्रतिश्याय अवश्यायश्च पीनस । उणादौ मनाकश्यामाकेत्याके निपातनात् श्यामाक ६७ । श्यास्त्यीतीते श्येन २१० । श्याकर्णीतीते श्येन २८१ । तिलिभिलीति मकि श्याम ३४० ॥

609 मकुङ् मण्डने । उदित्त्वान्ने मङ्कते ममङ्के मिमङ्किषते । शडित इत्यने मङ्कन मङ्कना वस्त्रविशेष । उणादौ तृकृभिल्यणे मङ्कण ऋषि १८७ । मङ्केर्नलुक् चोवास्येत्युरे मुकुर आदर्शो मुकुल च । मकुर आदर्शः कल्को बालपुष्प च ४२४ ॥

610 अकुङ लक्षणे । गतावप्येके । लक्षण चिह्नम् । उदित्त्वान्ने अङ्कते अङ्क्यते । अनातो नश्चेति पूर्वस्यात्वे ने च आनङ्के । स्रा धुडित्यत्रान्वित्यधिकाराद्वित्वे कर्तव्ये नकार एवास्ते । ततो न वदन संयोगादिरिति नो न द्विरुच्यते अञ्चिकिषते । व्यञ्जनाद्घञिति घञि अङ्क्यतेऽस्मिन्निधाय कान्तावक्त्र शलाकयेत्यङ्क उत्सङ्ग । उणादौ वाश्यसीत्युरे अङ्कुर । घञ्युपसर्गस्य बहुलमिति दीर्घत्वे अङ्कूर ४२३ । अङ्कण् लक्षणे । अङ्कयति । णिवेत्त्यासेत्यने अङ्कना ॥

611 शीकृङ् सेचने । गतावप्यन्ये । नात्ल्यादि । शीकते शिशीके शीकिता शीकितुम् । ऋदित्स्याण्णौ ङे उपान्त्यस्यासमानेति ह्रस्वाभावे अशिशीकत् । अनि क्तेन इत्यप्रत्यये वा शीका । अनटि शीकनम । उणादौ ऋच्छिचटीत्यरे शीकर ३९७ । शीकण् आमर्षणे । युजादेर्न वेति वा णिचि शीकयति शीकति ॥

612 लोकृङ् दर्शने । लोकते लुलोके । ऋदित्स्याण्णौ ङे ह्रस्वाभावे अलुलोकत । लोकितुम लोक्यते । लोक भावाकर्त्रोरिति घञि लोकतेऽस्मिन्नवस्थितोऽनन्तज्ञान सर्वभावानिति वा लोक । आलोक्यतेऽनेनार्थ इत्यालोक । व्यञ्जनाद्घञिति घञ् । लोकृण भासार्थे । लोकयति । उणादौ शम्बूकशाम्बूकेत्यूके निपातनादूर्ध्वं लोकमाहुलूक ६१ ॥

613 श्लोकृङ् संघाते । संघात सहनन सहन्यमानश्च । श्लोकते श्लोकिता शुश्लोके । ऋदित्त्वाङ्के न ह्रस्व अशुश्लोकत् । घञि श्लोक्यते मथ्यते श्लोक ॥

614 द्रेकृङ् 615 ध्रेकृङ् शब्दोत्साहे । शब्दस्योत्साह औद्धत्य वृद्धिश्च । द्रेकते दिद्रेके द्रेकिता । ध्रेकते दिध्रेके ध्रेकिता । ऋदित्त्वाङ्के न ह्रस्व अदिद्रेकत् । अदिध्रेकत । घञि उद्रेक ॥

616 रेकृङ् 617 शकुङ् शङ्कायाम् । शङ्का संदेह । पूर्वस्यार्थ । यदाह ।
आरेक नशयेत्याहु ॥

द्वितीयस्य त्रासश्च । रेकते आरिरेके आरेकिता । ऋदित्त्वाङ्के न ह्रस्व आरिरेकत् । क्तेन इत्य आरेका । घञि आरेक ॥

617 शकुङ् । उदित्त्वान्ने शङ्कते शङ्क्यते शङ्किता । क्तेन इत्य शङ्का । उणादौ हनिमनीयुले शङ्कुलायुधम् १८८ ॥

618 ककि लौल्ये । लौल्य गर्वश्चापल च । ककते । इदित्त्वादिदित इत्यात्मनेपदम् । चकके । अत्रादेशादित्वादनादेशादेरित्येत्वाभाव । ककिता । अचि काक पृषोदरादित्वाद्दीर्घत्वम् ॥

619 कुकि 620 वृकि आदाने । कोकते चुकुके कोकिता । नाम्युपान्त्येति के कुक । घञि कोकश्चक्रवाक । वौ व्यञ्जनादेरिति क्तासनोर्वा क्त्वि कोकित्वा कुकित्वा चुकोकिषते चुकुकिषते । उति शवर्हाद्वेत्य क्तौ भावारम्भे इति वा किरवे कुकितमस्य कोकितमस्य प्रकुकित प्रकोकित । उणादौ कल्यनीतीले कोकिल ४८१ ॥

620 वृकि । वर्कते ववृके वर्किता । नाम्युपान्त्येति के वृक । ऋदुपान्त्यादिति क्यपि वृक्यम् । ऋद्वर्णस्येति णौ डे गुणापवादे ऋतौ वा ऋत्वे अवीवृकत् अववर्कत ॥

621 चकि तृप्तिप्रतीघातयो । चकते चेके । क्ते चकित । उत्कार्थयोर्घटादित्वाद्घटादेरिति णौ ह्रस्वे चकयति । ञिणम्परे तु वा दीर्घे अचाकि अचकि चाकं चाकम् चकं चकम् । अर्थान्तरे तु ह्रस्वाभावे चाकयति । उणादौ चकिरमिविकसेरुश्चात्मेति रे चुक्रोम्लो रसो बीजपूरकाभिज्ञिकासुरो निमन्त्रण च ३९३ । कठिचकिभ्योरे चकोर ४३३ ॥

622 ककुड् 623 श्वकुड् 624 त्रकुड् 625 श्रकुड् 626 श्लकुड् 627 ढौकृङ् 628 त्रौकृङ् 629 ष्वष्कि 630 वस्कि 631 मस्कि 632 तिकि 633 टिकि 634 टीकृङ् 635 सेकृङ् 636 स्रेकृङ् 637 रघुङ् 638 लघुङ् गतौ । ककुङ् । उदित्त्वान्ने कङ्कते चकङ्के कङ्किता । अचि कङ्क । उणादौ कृकृभिस्यणे कङ्कण १८७ ॥

623 श्वकुङ् । तालव्यादि । उदित्त्वान्ने श्वङ्कते शश्वङ्के श्वङ्किता । अचि श्वङ्क ॥

624 त्रकुङ् । उदित्त्वान्ने त्रङ्कते तत्रङ्के त्रङ्किता ॥

625 श्रकुङ् । उदित्त्वान्ने श्रङ्कते श्रङ्किता ॥

626 श्लकुङ् । उदित्त्वान्ने श्लङ्कते श्लङ्किता । एतौ द्वौ तालव्यादी ॥

627 ढौकृङ् । ढौकते ढौकिता । ऋदित्त्वाड्डे न ह्रस्व अडुढौकत् । उणादौ शिक्याम्येति ये निपातनात् आढ्य ३६४ ॥

628 त्रौकृङ् । त्रौकते त्रौकिता । ऋदित्त्वाड्डे न ह्रस्व अतुत्रौकत् ॥

629. ष्वष्कि । षः स इत्यत्र वर्जनात्सत्वाभावे ष्वष्कते पिष्वष्किषते ॥

630. वस्कि । वस्कते वस्किता ॥

631. मस्कि । मस्कते मस्किता । दन्त्योपान्त्यावेतौ । तेन यङ्लुपि दिवौ लुकि च संयोगस्यादावित्ति सस्य लुक् अवावक् अमामक् ॥

632. तिकि । तेकते तेकिता । णौ ङे अतीतिकत् ॥

633. टिकि । टेकते टेकिता अटीटिकत् । ऋदितावेतावित्यन्ये । तेन ङे ह्र-स्वाभावे अतितेकत् अटिटेकत् ॥

634. टीकृङ् । टीकते टीकिता । ऋदित्त्वाङे ह्रस्वाभावे अटिटीकत् । केट इत्यः टीकतेस्याः स्फुटमर्थमिति टीका । ण्यन्ताद्वाति टीकयति गमयत्यर्थमिति टीका ॥

635. सेकृङ् । सेकते सेकिता । ऋदित्त्वाङे ह्रस्वाभावे षोपदेशाभावाच्च षत्वाभावे असिसेकत् । येषां तु षोपदेशोयं तन्मते कृतत्वात्सस्य षत्वे असिषेकत् ॥

636. स्रेकृङ् । दन्त्यादिः । स्रेकते स्रेकिता । ऋदित्त्वाङे ह्रस्वाभावे असि-स्रेकत् ॥

अथ घान्ता नव सेटश्च ॥

637. रघुङ् । उदित्त्वान्ने रङ्घते रङ्घिता ॥

638. लघुङ् । उदित्त्वान्ने लङ्घते लङ्घिता । उणादौ रङ्घिलङ्घिलिङ्गेर्नलुक् नेति किद्गुः रघुः लघुः ७४० । एतौ चुरादौ भासार्थौ रङ्घयति लङ्घयति । लङ्घिर्भोज-ननिवृत्त्यर्थोपि ।

न च ज्वरो लङ्घनीयः ॥

639. अघुङ् 640 वघुङ् गत्याक्षेपे । गतेराक्षेपो वेग आरम्भ उपलम्भो वा । उदित्त्वान्ने अङ्घते । अनात इति पूर्वस्यात्वे ने च आनङ्घे । न बदनमिति नस्य द्वित्वाभावे अञ्जिघिषते । उणादौ लङ्घिवङ्घीति रौ अङ्घिरित्येके ६९२ ॥

640. वघुङ् । उदित्त्वान्ने वङ्घते वङ्घिता । केट इत्यः वङ्घा ॥

641. मघुङ् कैतवे च । कैतवं वञ्चना । चकाराद्गत्याक्षेपे । मङ्घते मिमङ्घिषते । उणादौ अश्मादिर्भृतिनिरुति निपातनात् मघवा १०२ ॥

642. राघृङ् 643 लाघृङ् सामर्थ्ये । राघते राघिता । ऋदित्त्वाङे न ह्रस्वः अरराघत् ॥

643 लाघृङ् । लाघते लाघिता । ऋदित्त्वाङे न ह्रस्वः अललाघत् । अनु-पसर्गाः क्षीबेति निपातनात् क्तेः उल्लाघः उल्लाघवान् नीरुक् ॥

644 द्राघृङ् आयासे च । चकारात्सामर्थ्ये । आयास कदर्थनम् । कौशिकस्त्वायामे इत्याह दैर्घ्यविशिष्टायां क्रियायामिति च व्याख्यत् । काल्पनिके हि प्रकृतिप्रत्ययविभागे द्राघिमादयः कस्मिंश्चिद्व्याकरणे धातोरेव साधिताः । एव नेदयादेर्नेदिष्ठादयोऽपि । द्राघते द्राघिता । ऋदित्त्वाङ्के न ह्रस्वः अदद्राघत क्विपि गडदबादेरित्यादि चतुर्थत्वे धाक ॥

645 श्लाघृङ् कत्थने । कत्थनमुत्कर्षाख्यानम् । श्लाघह्नुस्थेति चतुर्थ्याम् मैत्राय श्लाघते । शश्लाघे श्लाघिता । ऋदित्त्वाङ्के न ह्रस्वः अशश्लाघत् । क्तेन इत्य श्लाघा ॥

अथ चान्तास्त्रयोदश सेटश्च ॥

646 लोचृङ् दर्शने । लोचते । ऋदित्त्वाङ्के न ह्रस्वः अलुलोचत् । क्ते आलोचितम् । अनटि आलोचनम् । निकृतौ नाम्नीति णके लोचकः स्त्रीशिरोवस्त्रम् । लोचृण भासार्थः । आलोचयति । णिवेत्त्यासेत्यने आलोचना ॥

647 षचि सेचने । सेचन सेवन भजनमिति यावत् । षः स इति सचते सेचे । षोपदेशत्वात असीषचत । णिस्तोरेवेति नियमात्षत्वाभावे सनि षत्वाभावे सिसचिषति । उणादौ पचिमच्योरिव सचिवः ८२२ । कृसिकमीति तुनि सच्यते स्नेहेनेति सक्तुः ७७३ । चन्द्रस्तु षच समवाये इति धातुमधीते । नम्यते सचति ॥

648 शचि व्यक्तायां वाचि । तालव्यादिः । शचते शेचे शचिता । उणादौ पडिपडीति इः शचीः ६०७ ॥

649 कचि बन्धने । कचते चकचे । सनि चिकचिषते । अनि पुनाधिघे वा कचाः शिरःपश्चाद्भागकेशाः । कर्मणि घञि कचः ॥

650 कचुङ् दीप्तौ च । चकाराद्बन्धने । उदित्त्वान्ने कञ्चते कञ्च्यते चकञ्चे चिकञ्चिषते । ङे अचिकञ्चत् । क्ते सेट्त्वात् क्त्वाणि क्त्वाभावे कञ्च्यम् । उणादौ कञ्चुकाशुकेत्युके कञ्चुकः ७७ । कुशिकहृदिकेतीके निपातनात् कञ्चिकम् [४८] । विदनगगनेत्यने निपातनात् काञ्चनमिष्टम् २७८ । कमितमीति णिति काञ्चिः ६१८ ॥

651 श्वचि 652 श्वचुङ् गतौ । श्वचते शश्वचे शिश्वचिषते । ङे अशिश्वचत् ॥

652 श्वचुङ् । उदित्त्वान्ने श्वञ्चते श्वञ्च्यते शश्वञ्चे शिश्वञ्चिषते । ङे अशश्वञ्चत ॥

653 वर्चि दीप्तौ । वर्चते ववर्च वर्चिता । ङे मे व्याद्वधि वच्चाभावे वर्चः । गत्यर्थेषु ज्ञानेषु च क्ते वर्चसु मनसु आख्यम् । वर्चम् पुंसि चेति घे वर्च

ञ्चिका टङ्कगम् । उणादौ मुरलोरलेत्यले सुवर्चला शाकम् ४७४ । असित्यसि वर्चोशुचितेजसी ९५२ ॥

654. मचि 655 मुचुङ् कल्कने । कल्कनं दम्भः शाठ्यं कथनं च । मचते मेचे मचिता । मुचेत्यपि चन्द्रः । मोचते ॥

655. मुचुङ् । उदित्त्वान्ने मुञ्चते मुमुञ्चे मुञ्च्यते मुञ्चिता । मुच्लृंती मोक्षणे । मुञ्चति मुच्यते ॥

656. मचुङ् धारणोच्छ्रायपूजनेषु च । चकारात्कल्कने । दीप्तावप्येके । उदित्त्वान्ने मञ्चते ममञ्चे मञ्चिता । णौ मञ्चयति । ङे अममञ्चत् । घञि क्तेः सेट्त्वात्कत्वाभावे मञ्चः । णके मञ्चिका । उणादौ कञ्चुकांशुकेत्युके मञ्चुका राङ्किका [९७] ॥

657. पचुङ् व्यक्तीकरणे । उदित्त्वान्ने पञ्चते पपञ्चे पिपञ्चिषते अपपञ्चत् प्रपञ्चयते । नाम्नि पुंसि चेति णके पञ्चिका न्यासः । घञि न्यङ्क्वादित्वात्कत्वे पङ्कः । उणादौ ऋफाग्रित्याले पञ्चाल कापिः ४७५ । उक्षितक्षीत्यनि पञ्च घटाः ९०० । अनुदिदनुस्वारेत्ययमित्येके । पचते पक्ता । पचुण् विस्तारे । प्रपञ्चयति । णिच्यादि प्रपञ्चः ॥

658. ष्टुचि प्रसादे । षः स इति सम्बे स्तोचते तुष्टुचे । णौ स्तोचयति । ङे अतुष्टुचत । यङि तोष्टुच्यते । घञि न्यङ्क्वादित्वात्कत्वे स्तोकः ॥

अथ जान्ता नव सेटश्च ॥

659. एजृङ् 660 भ्रेजृङ् 661 भ्राजि दीप्तौ । एजते । गुरुनाम्यादेरिति परोक्षाया आमादेशे एजां चक्रे । एजिता । ऋदित्त्वाङ्के न ह्रस्वः मा भवानेजिजत् । अत्र ओणेर्ऋदित्करणज्ञापकादित्यादपि द्विस्वाभ्राणेव ह्रस्वः प्राप्त ऋदित्त्वेन निषिध्यते । खाशिमाशीति शे उदेजयः । एजेरिति खशि अङ्गमेजयः । एजृ कम्पने इत्यस्य एजति ॥

660. भ्रेजृङ् । भ्रेजते बिभ्रेजे भ्रेजिता । ऋदित्त्वाङ्के न ह्रस्वः अबिभ्रेजत् ॥

661. भ्राजि । भ्राजते बभ्राजे भ्राजिता । णौ ङे भ्राजभासेति वा ह्रस्वे अबिभ्रजत् अबभ्राजत् । यजसृजेत्यत्र राजिसहचरितस्यैव भ्राजेर्ग्रहणादस्य षत्वाभावे वदन्तरपि बभ्राक्ति । क्तौ भ्राक्तिः । क्विपि विभ्राक् । नस्य तु षत्वाद्वि भ्राट् विभ्राडिति भवति । अत एव च एत्वाद्वित्वाभावविकल्पोऽपि तस्यैव भ्रेजे बभ्राजे । इदमेव च भ्राजेरात्मनेपदिनोऽनुभयपदित्वे टुभ्राजि दीप्ताविति पाठे प्रयोजनम् । भ्राजभासेति इष्णौ भ्राजिष्णुः । दिद्युद्दृशीति क्विपि नभ्राट् । राजृग् टुभ्राजि दीप्तावित्यस्य तु त्रिन्यामौ भ्राजकः ॥

662. इञुङ् गतौ । उदित्त्वाच्चे इञ्जते इञ्जां चक्रे इञ्जिता ॥

663. ईजि कुत्सने च । चकाराद्गतौ । ईजते वीजते ईजां चक्रे । लौकिकस्य तु वीजेरवीजयत् । राजहंसैरवीज्यन्त । अस्य तु विपूर्वस्य णौ द्वित्वे व्यैजयत् व्यैज्यन्त ॥

664. ऋजि गतिस्थानार्जनोर्जनेषु । ऊर्जनं प्रागनम् । अर्जते । ऋल्युपसर्गस्येत्यादि उपार्जते । अनात इति पूर्वस्याल्वे ने च आनृजे । सनीटः कार्यित्वेन द्वित्वं प्रतिनिमित्तत्वाभावेन द्वित्वात्प्रागेव स्वरस्य विधौ गुणे सत्यपि र इति रेफस्य द्वित्वाभावे स्वरादेर्द्वितीय इति जेरेव द्वित्वम् अर्जिजिषते । णौ अर्जयति । ऋदुपान्त्यादिति क्यपि ऋज्यम् । घञ्युद्रादित्वाद्गत्वे अर्गः स्थानम् । शोभनोर्गः स्वर्गः । उणादौ ऋच्यृजीति कितीके ऋजीकं वज्रं बलं च ४८ । ऋजिभिति कितीषे ऋजीषोवस्करः । ऋजीषं धनमुपहतं च ५०४ । उक्थिकादिसिद्धयर्थं व्यञ्जनादिमेनमन्ये मन्यन्ते ॥

665. ऋञुङ् 666 भृजैङ् भर्जने । भर्जनं पाकप्रकारः । उदित्त्वान्न ऋञ्जते । अनात इत्याल्वे ने च आनृञ्जे । ऋल्युपसर्गस्येत्यादि उपार्ञ्जते । ऋञ्जिता ॥

666. भृजैङ् । भर्जते बभृजे । ऋदुवर्णस्येत्यृतो वा ऋत्वे णौ ङे अबीभृजत् अबभर्जत् । सनि बिभर्जिषते । ऐदित्त्वात् क्तयोर्नेट् भृक्तः भृक्तवान् । क्वेनिदत्वाद्धनि गत्वे भर्गो रुद्रः । ऋदुपान्त्यादिति क्यपि भृज्यम् । उणादौ कृपिवृमीत्युः भर्जुर्भ्योपः ८२९ ॥

667. तिजि क्षमानिशानयोः । निशानं तीक्ष्णीकरणम् । गुप्तिज इति सनि तितिक्षते कोपम् । क्षान्तौ सन्निधानात्तेजने प्रत्ययान्तरम् । णौ तेजयति । करणाधारेनङि तेजनम् तेजनी । उणादौ भृगतृणेति निपातनात् तीक्ष्णः १८६ । तिजियुगेर्ग नेति किति मे तिग्मम् ३४५ । असिरत्यसि तेजः १५२ । तिजण् निशाने । उत्तेजयति ॥

अथ टान्ताः सप्त सेटश्च ॥

668. घट्टि चलने । घट्टते जघट्टे घट्टिता । अनि अरघट्टः । घनि घट्टः । णके उद्घट्टकः । णिवेत्त्यासेत्यने घट्टना । घट्टण् चलने । घट्टयति ॥

669. स्फुटि विकसने । स्फोटते । अनोपे नित इति पूर्वस्य नस्य लोपे पुस्फुटे । स्फोटिता । क्त्वौ व्यञ्जनादेरिति नाम्युपान्त्यात् किवत्त्वे स्फुटित्वा स्फोटित्वा पुस्फुटिषते पुस्फोटिषते । नाम्युपान्त्येति के स्फुटः । घञि स्फोटः । टान्तोयमिति-

चेत्येके स्फुण्डते स्फुण्डिता। स्फट स्फुट्ट विसरणे। स्फोटति। ऋदित्वादङि अस्फुटत्। स्फुटत् विकसने। स्फुटति॥

670. चेष्टि चेष्टायाम्। चेष्टेहा। चेष्टते चिचेष्टे। णौ ङे वा वेष्टचेष्ट इति पूर्वस्य वात्वे अचचेष्टत् अचिचेष्टत्। क्ते चेष्टितम्। क्तेट इत्यः चेष्टा॥

671. गोष्टि 672 लोष्टि संघाते। गोष्टते जुगोष्टे गोष्टिता॥

672. लोष्टि। लोष्टते लोष्टिता। कर्मणि घञि लोष्टः। उणादौ भृमृतॄत्सरीत्युः लोष्टुर्मृत्पिण्डः ७१६॥

673. वेष्टि वेष्टने। वेष्टनं मन्थनं लोटनं परिहाणिश्च। वेष्टते विवेष्टे वेष्टिता। णौ ङे वा वेष्टेति पूर्वस्य वात्वे अववेष्टत् अविवेष्टत्। यङि वेवेष्टयते। यङ्लुपि वेवेष्टीति। धुटो धुटि स्वे वेति टलुकि वेवेष्टि। हौ हुधुट इति हेर्धित्वे तवर्गस्येति धस्य ढत्वे धुटो धुटीति टस्य लुकि तृतीयस्तृतीयेति षस्य डत्वे वेवेड्ढि। अचि प्रवेष्टो बाहुः। नाम्नि पुंसि चेति णके वेष्टकः कर्णवेष्टकः॥

674. अट्टि हिंसातिक्रमयोः। अतिक्रम उल्लङ्घनम्। दोपान्त्योयम्। तवर्गस्येति डत्वं न कृतमसंदेहार्थम्। तवर्गस्येति दस्य डत्वे अघोषे प्रथम इति टत्वे च अट्टते। अनात इति पूर्वस्यात्वे ने च आनट्टे। दोपान्त्यत्वात्तनीडि न बदनमिति दस्य निषेधात्स्वरादेरिति द्वितीयांशस्य टेरेव द्विरुक्तौ तवर्गस्येति डत्वे अघोषे इति टत्वे च अट्टिटिषते। अचि घञि वा अट्टः। क्विपि अद् अत्। तोपान्त्योयमित्येके। तेषां सनीटि अतिट्टिषते। येषां तु तान्तटोपान्त्यधात्वयं तेषां ड्डीति द्वित्वे अटिड्डिषते॥

अथ डान्ताः सप्त सेटश्च॥

675. एठि 676 हेठि विबाधायाम्। एठते। गुरुनाम्यादेरिति परोक्षाया आमि एठां चक्रे। एठिता। स्वरादेरिति द्वित्वे एठिठिषते॥

676. हेठि। हेठते जिहेठे हेठिता। णौ णिचेर्न्त्यत्वे जिहेठना शाठ्यम्॥

677. मठुङ् 678 कठुङ् शोके। शोकश्चाध्यानम्। उदित्वात्रे मण्ठते ममण्ठे मण्ठिता॥

678. कठुङ्। उदित्वान्ने कण्ठते उत्कण्ठते उत्कण्ठयते उच्चकण्ठे। घञि उत्कण्ठः। क्ते उत्कण्ठितः। क्तेसेट्त्वात् क्तेट इत्यः उत्कण्ठा। उणादौ हरियृनीत्युन्ने उत्कण्ठुलः ४८९। कठुण् शोके। युजादेर्न वेति वा णिचि उत्कण्ठयति उत्कण्ठति॥

679. मुठुङ् पलायने। उदित्वान्ने मुण्ठते मुमुण्ठे मुण्ठिता॥

680. वठुङ् एकचर्यायाम्। एकस्यासहायस्य चर्या गतिस्तस्याम्। उदित्त्वान्ने वण्ठते ववण्ठे वण्ठिता। अचि वण्ठः॥

681. अठुङ् 682 पठुङ् गतौ। उदित्त्वान्ने अण्ठते। अनात इति पूर्वस्यात्वे ने च आनण्ठे। अण्ठिता॥

अथ डान्तास्त्रयोविंशतिः सेटश्च॥

682. पडुङ्। उदित्त्वान्ने पण्डते पपण्डे। गत्यर्थत्वात्कर्तरि क्ते पण्डितः। अचि पण्डः। क्ते सेट्त्वात् क्लट इत्यः पण्डा। उणादौ जठरक्रकरेत्यरे निपातनात् पाण्डरः ४०३। पाण्डुरिति तु पमेर्डश्चेति डौ पनतेः ७६६। मध्यादित्वान्ने तु पाण्डुरः॥

683. हुडुङ् 684 पिडुङ् संघाते। उदित्त्वान्ने हुण्डते जुहुण्डे हुण्डिता। अचि हुण्डं समन्ततो विषमं देहसंस्थानं नाम कर्मभेदानां षण्णां संस्थानानामन्त्यस्य विपाको नरकभयनियतः। क्लट इत्यः हुण्डा। नाम्नि पुंसि चेति णके हुण्डिका। उणादौ किलिपिलीति इः हुण्डिः पिण्डित ओदनः ६०८॥

684. पिडुङ्। उदित्त्वान्ने पिण्डते पिण्ड्यते पिपिण्डे पिण्डिता। घञि पिण्डः। स्त्रियां गौरादित्वाङ्ङीः पिण्डी। उणादौ किलिपिलीति इः पिण्डिर्निष्पीलितस्नेहः पिण्डः ६०८। पिडुण् संघाते। पिण्डयति॥

685. शडुङ् रुजायां च। चकारात्संघाते। तालव्यादिः। उदित्त्वान्ने शण्डते शशण्डे शण्डिता। अचि शण्ड उरसटपशुर्क्लीबश्च। षण्ड इति तु सनतेरौणादिके डे बाहुलकात्त्वम् १६८॥

686. तडुङ् ताडने। उदित्त्वान्ने तण्डते ततण्डे तण्डिता। क्लट इत्यः वितण्डा। उणादौ हृषिपृनीत्युले तण्डुलः ४८५। तण्डुरिति तु मनोलेर्डौ ७६५। तण्डुना मौक्तमिरयणि ताण्डवम्॥

687. कडुङ् मदे। उदित्त्वान्ने कण्डते चकण्डे कण्डिता। अचि कण्डम्। उणादौ जठरक्रकरेत्यरे कण्डरा स्नायुसंघातः [४०३]। कटिपटीत्योले कण्डोलो विदलभाजनविशेषः ४९३। कण्डुरिति तु कणेर्डौ ७६५। कडुण् खण्डने च। कण्डयति॥

688. खडुङ् मन्थे। उदित्त्वान्ने खण्डते चखण्डे खण्डिता। घञि खण्डः। खडुण् भेदे। खण्डयति॥

689. गुडुङ् गतिवैकल्ये। उदित्त्वान्ने गुण्डते जुगुण्डे गुण्डिता। चुरादेराकृतिगणत्वात् गुडुण् वेष्टने। गुण्डयति॥

690. कुडुङ् दाहे। उदित्त्वान्ने कुण्डते चुकुण्डे कुण्डिता। आधारे व्यञ्जनादिति घञि कुण्डम्। स्त्रियां भाजगोणेति ङ्याम् कुण्ड्यमत्रम्। क्वेट इत्यः कुण्डा। उणादौ मृदिकन्दीत्यले कुण्डलम् ४६९। कुडुण् रक्षणे। कुण्डयति॥

691. वडुङ् 692 मडुङ् वेष्टने। विभाजनेऽप्यन्ये। विभाजनं विभागीकरणं चर्मभावश्च। उदित्त्वान्ने वण्डते ववण्डे वण्डिता। अचि घञि वा वण्डः॥

692. मडुङ्। उदित्त्वान्ने मण्डते ममण्डे मण्डिता। अचि घञि वा मण्डो रसाग्रम्। णके मण्डकः। उणादौ मृमन्यञ्जील्यूके मण्डूकः ९८। मृदिकन्दीत्यले मण्डलम् ४६९। स्त्रियां गौरादित्वाङ्याम् मण्डली। मीमसीत्यूरे मण्डूरं लोहमलम् ४२७। हपिपुषीति ण्यन्तादिन्नौ मण्डयित्नुः ७९७। मडु भूषायाम्। मण्डति। मडुण् भूषायाम्। मण्डयति॥

693. भडुङ् परिभाषणे। उदित्त्वान्ने भण्डते बभण्डे भण्डिता। अचि भण्डः। भाण्डमिति तु भामेर्डः [ उणादौ १६८ ]। भडुण् कल्याणे। भण्डयति। णिवेत्तीत्यने भण्डना॥

694. मुडुङ् मज्जने। मज्जनं शोधनं न्यग्भावश्च। उदित्त्वान्ने मुण्डते मुमुण्डे मुण्डिता। घञि मुण्डः। मुडु खण्डने च। मुण्डति॥

695. तुडुङ् तोडने। तोडनं हिंसा। उदित्त्वान्ने तुण्डते तुतुण्डे तुण्डिता तुण्ड्यते। अचि घञि वा तुण्डम्। उणादौ किलिपिलीति इः तुण्डिः प्रवृद्धा नाभिः ६०८॥

696. भुडुङ् वरणे। वरणं स्वीकरणम्। उदित्त्वान्ने भुण्डते बुभुण्डे भुण्डिता। अचि भुण्डो धृष्टः॥

697. चडुङ् कोपे। उदित्त्वान्ने चण्डते चचण्डे चण्डिता। अचि चण्डः। स्त्रियां शोणादित्वाद्वा ङ्याम् चण्डी चण्डा। उणादौ ऋकृशृत्याले चण्डालः ४७९। चडुण् कोपे। चण्डयति॥

698. द्राडृङ् 699 धाडृङ् विशरणे। द्राडते दद्राडे द्राडिता॥

699. धाडृङ्। धाडते दधाडे धाडिता। ऋदित्त्वाड्डे न ह्रस्वः अदद्राडत्। अदधाडत्॥

700 शाडृङ् श्लाघायाम्। नाठ्यर्थाडिः। शाडते शशाडे। ऋफिडादित्वादृस्य लत्वे शालते। ऋदित्त्वाड्डे न ह्रस्वः अशशाडत्। अचि शाला। अजातेरिति णिनि शुणशाली। शालिरिति तु शलेर्गौणादिके णौ स्याम् ६१८। शालूकमित्यपि शलेर्णूके ९९॥

701· वाडृङ् आप्लाव्ये । आप्लाव्यमाप्लावनम् । वाडते ववाडे वाडिता । ऋदित्त्वाङ्के न ह्रस्वः अववाडत् । अच्यूर्फिडादित्वाड्डस्य लत्वे वालः । वडयेति तु वडेः सौत्रस्यावे रूपम् [ उणादौ ५१९ ] ॥

702· हेडृङ् 703 होडृङ् अनादरे । हेडते जिहेडे हेडिता । ऋदित्त्वाङ्के न ह्रस्वः अजिहेडत् । घञि हेडः । हेडप्रसादौ प्रभोः । क्ते सेट्त्वात् क्तेट इत्यः ऋफिडादित्वाच्च लः हेला । घटादौ हेड वेष्टने । हेडति । णौ ह्रस्वे हिडयति ॥

703· होडृङ् । होडते जुहोडे होडिता । ऋदित्त्वाङ्के न ह्रस्वः अजुहोडत् । क्तेट इत्यः होडा । अनि होडः ॥

704· हिडुङ् गतौ च । चकारादनादरे । उदित्त्वान्ने हिण्डते जिहिण्डे हिण्डिता । यङि जेहिण्ड्यते । यङ्लुपि जेहिण्डीति । तवर्गस्येति तस्य टत्वे धुटो धुटीति धुटो लुकि जेहिण्टि । इडित इत्यने हिण्डनः । गत्यर्थत्वात्कर्तरि क्ते हिण्डितः । उणादौ किलिपिलीति इः हिण्डिः रात्रौ रक्षाचारः ६०८ ॥

अथ णान्ताः षट् सेटश्च ॥

705· घिणुङ् 706 घुणुङ् 707 घृणुङ् ग्रहणे । उदित्त्वान्ने घिण्णते जिघिण्णे घिण्णिता ॥

706· घुणुङ् । घुण्णते जुघुण्णे घुण्णिता ॥

707· घृणुङ् । घृण्णते जघृण्णे घृण्णिता । यङि जरीघृण्ण्यते । वनि वन्याङ् पञ्चमस्येत्यत्र पञ्चमस्येति जातिपरिग्रहाण्णद्वयस्याप्याऽऽदेशे आङो ङित्त्वाद्गुणाभावाद्वत्वे सुघ्रावा । व्यक्तिपरिग्रहे त्वन्त्यस्यैवात्वे सुघृणावा । एवं शेषयोरपि । क्विपि पदस्येति संयोगान्तलोपे सुघिणित्यादि ॥

708· घुणि 709· घूर्णि भ्रमणे । घोणते जुघुणे घोणिता । भिदादित्वादङि घोणा । नाम्युपान्त्येति के घुणः । वनि वन्याङ् पञ्चमस्येत्याऽऽदेशे ङित्त्वाद्गुणाभावे घ्वावा ॥

709· [घूर्णि ।] घूर्णते जुघूर्णे घूर्णिता । वन्यादि घूरावा । घुण घूर्ण भ्रमणे । घुणति । घूर्णति ॥

710· पणि व्यवहारस्तुत्योः । गुपौधूपेत्याये पणायति । आयान्तस्यैङित्त्वाभावाच्छेषात्परस्मायिति परस्मैपदम् । विनिमेयद्यूतपणमिति कर्मणो वा कर्मत्वे शेषे इति षष्ठ्याम् शतस्य पणायति । स्वार्थिकप्रत्ययान्तस्य प्रकृतिवद्ग्रहणात्पणिरेवायम् । ये तु स्तुत्यर्थादेव पणेरायमिच्छन्ति तन्मते व्यवहारार्थाच्चायप्रत्ययाभावे शतस्य पणते । अद्यापि ते पेणि वा आये पणायां चकार पेणे पणायिता पणिता ।

न चोपलेभे वणिजां पणायाः ॥

अत्र शंसिप्रत्ययादित्यः । वर्योपसर्येति निपातनाद्ये पण्यं विक्रेयम् । अन्यत्र घ्यणि पाण्यः साधुः । पणेर्माने इति घञपवादेऽलि शाकपणः । गोचरसंचरेत्याधारे च घञपवादे घे एत्य तत्र पणायन्तीत्यापणः । उणादौ आङः पणीतिके आपणिकः पत्तनवासी ३९ । प्राङः पणीतिके प्रापणिको वणिक् ४२ । कमिवमीति णिदिः पाणिः ६१८ । भूपणिभ्यामिज् भुरवणौ च वणिक् ८७९ । प्रज्ञाद्यणि वाणिजः ॥

अथ तान्तास्त्रयः सेटश्च ॥

711. यतैङ् प्रयत्ने । यतते येते यतिता । ऐदित्त्वात् क्तयोर्नेट् यत्तः आयत्तः यत्तवान् । यजिस्वपीति ने यत्नः । उणादौ पादिपठीति इः यतिः ६०७ । यति-ननन्दिभ्यां दीर्घश्चेत्यृः याता देवरभार्या ८५६ । तृस्वस्त्रित्यत्र तुः सार्थकस्य ग्रहणादारभावे यातरौ । यतण् निकारोपस्कारयोः । यातयति ॥

712. युतृङ् 713 जुतृङ् भासने । योतते युयुते योतिता । ऌदित्त्वाद्ङे न ह्रस्वः अयुयोतत् ॥

713. [जुतृङ् ।] जोतते जुजुते जोतिता । ऌदित्त्वाद्ङे न ह्रस्वः अजुजोतत् । जुतृ भासने । जोतति । ऌदित्त्वाद्द्याङि अजुतत् अजोतीत् । कौशिकस्तु ज्योतिः सिद्धये जुतिस्थाने ज्युतिमधीते । तदसद् द्युतेरादेश्च ज इति सिद्धत्वात् ॥

अथ थान्ताः षट् सेटश्च ॥

714. विथृङ् 715 वेथृङ् याचने । वेथते विविथे विथितः । ऌदित्त्वाद्ङे न ह्रस्वः अविवेथत् ॥

715. वेथृङ् । वेथते विवेथे वेथितः । ऌदित्त्वाद्ङे न ह्रस्वः अविवेथत् । कौशिकस्तु विथुरसिद्धये यातने इत्याह । तन्न व्यथेरेव श्वशुरेत्युरे निपातनात्सिद्धेः [उणादौ ४२६] ॥

716. नाथृङ् उपतापैश्वर्याशीःषु च । चकाराद्याचने । उपताप उपघातः । अत्र याञ्चोपतापौ क्रियात्वादर्थावैश्वर्याशिषौ तु धर्ममात्रत्वाद् बोध्ये । यद्वा गण्डति श्वेतते प्रासादः घण्टा ध्वनति संयुज्यते अस्ति समवैतीति द्रव्यगुणसंयोगसत्तासम-वायानामिव सिद्धानामप्याख्यातवाच्यत्वेन साध्यतया प्रतीतेरनयोरर्थत्वमप्यस्तु । य-दाह पूर्वापरीभूतं भावमाख्यातेनाचष्टे । सर्पिषो नाथते सर्पिर्नाथते सर्पिर्मे भूयादित्या-शास्ते । नाथ इति कर्मणो वा कर्मत्वे । शेषे इति षष्ठी । आशिषि नाथ इत्या-शिष्येवात्मनेपदनियमादर्थान्तरे परस्मैपदमेव । रिपुं नाथति उपतपति । स्वामी

नाथति ईष्टे। नृपं नाथते याचते। एष्यात्मनेपदाभावान्नाथ इति कर्मणो कर्मत्वाभावे कर्मणीति द्वितीयैव। कथम्।

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डुर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते।
तत्पल्लीपतिपुत्रि कुञ्जरकुलं जीवाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रांशुकैर्मा पिधाः॥

अपपाठ एषः अनुनाथति स्तनयुगं पत्रांशुकैर्मा पिधा इति त्वभियुक्ताः। येषां चानुपसर्गस्य नियमस्तन्मते सोपसर्गस्यार्थान्तरेप्यात्मनेपदं न विरुध्यते। अणोपदेशायम्। यदाह सर्वे नादयो णोपदेशा नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृवर्जमिति। तेनादुरुपसर्गेति णत्वाभावे प्रनाथते। अचि नाथः। इडित इत्यने नाथनः॥

717. श्रथुङ् शैथिल्ये। तालव्यादिः। शैथिल्यमगाढता। उदित्त्वान्ने श्रन्थते श्रन्थते श्रन्थिता शश्रन्थे। अत्र वा श्रन्थग्रन्थो नलुक् चेत्यत्रौपदेशिकस्य श्रन्थो ग्रहणाद्वा एत्वनलुकौ न भवतः। अन्ये त्वत्रापीच्छन्ति। दशनावोदैधोद्मेति घञि निपातनात् प्रश्रथः हिमश्रथः। णिवेत्त्यास्यने श्रन्थना। उणादौ श्रन्थेः शिथ् चेतीरे शिथिरम्। लत्वे शिथिलम् ४१४॥

718. ग्रथुङ् कौटिल्ये। कौटिल्यं कुगतिर्बन्धश्च। उदित्त्वान्ने ग्रन्थते जग्रन्थे ग्रन्थिता। णिवेत्त्यास्यने ग्रन्थनेत्येके। ग्रन्थश् मोचनप्रतिहर्षयोः। ग्रन्थश् संदर्भे। श्रथ्नाति श्रथ्यते। ग्रथ्नाति ग्रथ्यते। वा श्रन्थग्रन्थो नलुक् चेति वा एत्वे नलुकि च श्रेथतुः शश्रन्थतुः। ग्रेथतुः जग्रन्थतुः। श्रन्थ ग्रन्थण् संदर्भे। युजादेर्न वेति वा णिचि श्रन्थयति श्रन्थति। ग्रन्थयति ग्रन्थति। श्रेथतुः शश्रन्थतुः। ग्रेथतुः जग्रन्थतुः। एकधातावित्यात्मनेपदे भूषार्थेति ञिक्यक्योरभावे च कर्मकर्तरि प्रयाणामपि श्रन्थते अश्रीते अश्रन्थिष्ट वा स्वयमेव। एवं ग्रन्थते अग्रीते अग्रन्थिष्ट। उणादौ पदिपठीति इः ग्रन्थिर्ग्रन्थिश्च पर्वसंध्यादिः ६०७॥

719. कत्थि श्लाघायाम्। श्लाघा गुणारोपः। कत्थते चकत्थे कत्थित्वा। इडित इत्यने कत्थनः। वेर्विचेति घिनणि विकत्थी। न णिङ्येत्यत्र दीपिग्रहणेन ताच्छीलिकेष्वप्युत्सर्गसमावेशस्य ज्ञापनादने विकत्थनः॥

अथ दान्ता एकविंशतिर्दन्त्यवर्णाः सेटश्च॥

720. श्विदुङ् श्वैत्ये। श्वैत्यं श्वेतगुणक्रिया। उदित्त्वान्ने श्विन्दते। कोर्थः। यदि सकर्मकस्तदा श्वेतीकरोतीति। अथाकर्मकस्तदा श्वेतीभवतीति। श्वेतगुणः

सिद्धोप्याख्यानेन साध्यैकरूप उच्यते कृतानुसाध्योपि सिद्धतया पाकादिवच्छब्दशक्तिस्वाभाव्यात्। क्ये श्विन्द्यते। क्ते श्विन्दितः॥

721. वदुङ् स्तुत्यभिवादनयोः। स्तुतिर्गुणैः प्रशंसा। अभिवादनं पादयोः प्रणिपातः। उदित्त्वान्ने वन्दते देवान् स्तौतीत्यर्थः। ववन्दे गुरून् आभिवादितवानित्यर्थः। वन्दिता। अचि वन्दी हठाकृष्टा स्त्री। ग्रहादित्वाण्णिनि वन्दी मङ्गः। शृवन्देरारुः वन्दनशीलो वन्दारुः कामवृक्षश्च। न णिङ्येत्यत्र दीपिग्रहणादसरूपेने वन्दनः। णिवेत्तीत्यने वन्दना। उणादौ पदिपठीति इः वन्दिर्महाणिः ६०७॥

722. भदुङ् सुखकल्याणयोः। सुखं सद्वेद्यकर्मोदयाच्छुभानुभवनम्। कल्याणं श्रेयः। प्रीतावप्यन्ये। प्रीतिर्मोहनीयविपाकः। उदित्त्वान्ने भन्दते बभन्दे भन्दिता। इङित इत्यने भन्दनः। उणादौ सीमन्तहेमन्तेत्यन्ते निपातनात् भदन्तः २२२। भन्देर्वेति रे वा नलुकि च भद्रं भन्द्रं च सुखकल्याणे ३९१। चुरादौ भडुण् कल्याणे। दान्त इत्येके भन्दयति॥

723. मदुङ् स्तुतिमोदमदस्वप्नगतिषु। मोदो हर्षः। मदो दर्पः स्वप्नेनालस्यमपि लक्ष्यते। मन्द्रस्तु मदि जाड्ये इत्येनाह। मोदमदस्वप्नेष्वकर्मकोयं स्तुतिगत्योस्तु कर्मकः। उदित्त्वान्ने मन्दते ममन्दे मन्दिता। अचि मन्दः। स्त्रियां जातेरयान्तेति यौवनावस्थावृत्तौ तु वयस्यनन्त्ये इति ङीप्राप्तावजादेरित्यापि मन्दा स्त्रीजातिर्युवतिर्वा। उणादौ शलिबलिपनीत्वाके मन्दाकः [ ३४ ]। मत्वर्थीयेनि मन्दाकिनी। भीवृधीति रे मन्द्रं गम्भीरम्। मद्रमिति तु माद्यतेः ३८७। ऋज्रिवटीत्यरे मन्दरः शैलविशेषः ३९७। अग्यङ्गीत्यारे मन्दारो देववृक्ष ४०६। मादिमन्दीतीरे मन्दिरं सद्म। मदिरेति तु माद्यतेः ४१२। वाश्यसीत्युरे मन्दुरा वाजिशाला ४२३॥

724. स्पदुङ् किंचिच्चलने। उदित्त्वान्ने स्पन्दते पस्पन्दे स्पन्दिता। णिगन्तात्फलवत्कर्तर्यपि चल्याहारार्थेङिति परस्मैपदम् स्पन्दयति। घञि स्पन्दः। चालशब्दार्थादित्यने स्पन्दनो वृक्षविशेषः॥

725. क्लिदुङ् परिदेवने। परिदेवनं शोचनम्। उदित्त्वान्ने क्लिन्दते क्लिन्दिता। क्लिदु परिदेवने। क्लिन्दति। गित्त्वमकृत्वोभयत्र पाठस्तु फलवत्यपि कर्तरि परस्मैपदार्थः। अफलेप्यात्मनेपदार्थश्च॥

726. मुदि हर्षे। अकर्मकोयम्। मोदते मुमुदे मोदिता। क्ते मुदितः। वौ व्यञ्जनादेरिति क्त्वासनोर्वा कित्त्वे मुदित्वा मोदित्वा मुमुदिषते मुमोदिषते। णौ मोदयति चैत्रम्। अत्राणेगीति फलवत्कर्तर्यपि परस्मैपदं गतिबोधाहारार्थेत्यणिक्कर्तुः

कर्मत्वं च। मूलविभुजादित्वात्के कुमुदम्। तिकृतौ नाम्नीत्यानशि मोदमानः कोपि ग्रामः। णके मोदयतीति मोदकः। नाम्युपान्त्येति के मुदः। इडित इत्यने मोदनः। उणादौ पृमुदिभ्यां किदिति किति गे मुद्गः ९३। ऋज्यजीति किति रे मुद्रा ३८८। मुदिगुरिभ्यां टिद्गजौ चान्ताविल्यरे मुद्गरः मुद्गरी ४०४। शुपीषीति कितीरे मुदिरो मेघः ४१६। मुदण् संसर्गे। मोदयति॥

727. ददि दाने। धारणे इति कौशिकः। ददते। अनादेशादेरित्येत्त्वस्य न शसददेति प्रतिषेधात् ददे। ददिता॥

728. हृदि पुरीषोत्सर्गे। हदते जहदे। अनुस्वारेत्त्वान्नेट् हत्ता हत्तुम्। सनि जिहत्सते। इडित इत्यने हदनः॥

729. ष्वदि 730 स्वर्दि 731 स्वादि आस्वादने। आद्यः षोपदेशोयं नेतरौ। यस्स्मृतिः स्वरदन्त्यपराः षोपदेशाः स्मिस्विदिस्वदिस्वञ्जिस्वपयश्च सृपिसृजिस्तृस्त्यास्त्यासेकसृवर्जम्। आस्वादनं जिह्वया लेहः। चैत्राय स्वदते सस्वदे। षोपदेशत्वात्षत्वे असिष्वदत्। सनि षत्वापत्ते णिस्तोरेवेत्यत्र वर्जनाण्ण्यन्तस्य षत्वाभावे सिस्वादयिषति। णिस्तोरेवेति नियमात्सनि षत्वाभावे सिस्वादिषते। इडित इत्यने स्वदनः। उणादौ कृवापाजील्युणि स्वादुः १। ष्वदण् आस्वादने। स्वादयति॥

730. स्वर्दि। स्वर्दते। अषोपदेशत्वात्षत्वाभावे सिस्वर्दयिषति असिस्वर्दत्। स्वर्दिता॥

731. स्वादि। स्वादते सस्वादे। अषोपदेशत्वात्षत्वाभावे असिस्वदत्। सनि सिस्वादिषते॥

732. ऊर्दि मानक्रीडयोश्च। चकारादास्वादने। मानं मितिः। भ्वादेरिति दीर्घे ऊर्दते। गुरुनाम्यादेरिति परोक्षाया आमि ऊर्दां चक्रे। आय र इति रस्य प्रतिषेधात्स्वरादेरिति देरेव द्वित्वे सनि ऊर्दिदिषते। अभि स्त्रियां गौरादित्वाङ्ङ्याम् ऊर्दी विमानम्॥

733. कुर्दि 734 गुर्दि 735 गुदि क्रीडायाम्। भ्वादेरिति दीर्घे कूर्दते चुकूर्दे कूर्दिता॥

734. [ गुर्दि। ] गूर्दते जुगूर्दे गूर्दिता। गुर्देस्थानेन्ये गुर्दि पेठुः। खूर्दते चुखूर्दे। गुर्दण् निकेतने। गूर्दयति॥

735. गुदि। गोदते जुगुदे। वौ व्यञ्जनादेरिति क्त्वामनोर्वा कित्त्वे गुदित्वा गोदित्वा जुगुदिषते जुगोदिषते। नाम्युपान्त्येति के गुदं क्षीणामपाङ्गम्। कल्याणं गुदमस्याः क्रोडादित्वाद् ङ्यभावे कल्याणगुदा। गुदिस्थाने गुधिमेकेऽधीयन्॥

736. षूदि क्षरणे। क्षरणं निरसनम्। षः स इति सत्वे सूदते सुषूदे सूदिता। ङे असूषुदत्। क्ते निसूदितः। नन्द्यादित्वादने सूदनः। अचि सूदः। स्त्रियां गौरादित्वाद् ङ्याम् सूदी। शीलाद्यर्थविवक्षायामिङित इत्यनस्य न णिङ्चेति प्रतिषेधात्तृचि सूदनशीलः सूदिता। षूदण् आस्रवणे। सूदयति॥

737. ह्रादि शब्दे। अव्यक्ते शब्दे इत्यन्ये। अव्यक्तोऽपरिस्फुटवर्णः। ह्रादते जह्रादे ह्रादिता। घञि ह्रादः। अचि ह्रदः पृषोदरादित्वाद्ध्रस्वः॥

738. ह्लादैङ् सुखे च। चकाराच्छब्दे। ह्लादते जह्लादे ह्लादिता। ऐदित्वात् क्तयोर्नेट् प्रह्लन्नः प्रह्लन्नवान्। अत्र ह्लादो ह्रद् क्तयोश्चेति ह्रद् तो नश्च। णौ क्ते आह्लादितः। क्तौ प्रह्लत्तिः। मनयवलपरे हे इत्यनुस्वारानुनासिकयोः। किं ह्लादते किल्ह्लँदते॥

739. पर्दि कुत्सिते शब्दे। पायुध्वनौ वर्तते। अन्ये तु निःशब्दमधोवातं पर्दनं मन्वाना अशब्दे इत्याहुः। पर्दते पपर्दे पर्दिता। इङित इत्यने पर्दनः। पृदाकुरिति तु पिपर्तेर्दाकुकि [उणादौ ७९६]॥

740. स्कुदुङ् आप्रवणे। आप्रवणमुत्प्लुत्य गमनमास्कन्दनं वा। उद्धरणमित्यन्ये। उदित्वान्ने स्कुन्दते चुस्कुन्दे स्कुन्दिता। सनि चुस्कुन्दिषते। यङि चोस्कुन्द्यते। यङ्लुपि चोस्कुन्दीति। कुन्द इति तु कवतेर्दे नेन्त्ये च रूपम् [उणादौ २४०]॥

अथ धान्ताः सप्त सटश्च॥

741. एधि वृद्धौ। एधते। उपसर्गस्यानिणिस्यनेधिवर्जनादुपसर्गावर्णलुगभावे मैधते। अकर्मकत्वाद्भावे एध्यते मैत्रेण। सोपसर्गस्तु साप्योऽपि भवति। गुरुनाम्यादेरिति परोक्षाया आमि एधां चक्रे। एधिता। ओणेर्ऋदित्करणान्नित्यमपि द्विर्वचनं ह्रस्वो बाधते। तेन ङे ह्रस्वे द्वित्वे च मा भवानिदिधत्। सनि एदिधिषते। आनशि एधमानः। घञि एधः। उणादौ असित्यसि एधः एधसी [९९२]। इन्धेरपि दशनावोदेति यैन्धिष्यामिति वचनादेधैधसोः सिद्धिः ९६८॥

742. स्पर्धि संघर्षे। संघर्षः पराभिभवेच्छा। स्पर्धते भ्रातुः भ्रात्रा सह स्पर्धां करोतीत्यर्थः। पस्पर्धे। सनि पिस्पर्धिषते। यङि पास्पर्ध्यते। यङ्लुपि पास्पर्धीति। दिवि यङ्तुरस्तोरितीति अपास्पर्धीत्। सिवि सेः स्द्धां च रुर्वेति सिवो लुकि धस्य दत्वे रो रे लुगिति रो लुग्दस्य दीर्घे च अपास्पाः। इङित इत्यने स्पर्धनः। अकर्मकोऽयम्। तेन स्पर्धयति मैत्रमित्यणिगि प्राणिकर्तृकोनि फलवत्क-

तेर्यपि परस्मैपद गतिबोधेत्यणिकर्तुः कर्मत्वं च । स्पर्धमानः स कृष्णमिति तु कृष्णं प्राप्येत्यध्याहारात् । बहुलमितीष्णौ ।

मेरुं स्पर्धिष्णुनेवान्यो धृतो नाको हिमाद्रिणा ॥

क्तेट इत्यः स्पर्धा । घञि स्पर्धः ॥

743. गाधृङ् प्रतिष्ठालिप्सायन्थेषु । प्रतिष्ठास्पदम् । लब्धुमिच्छा लिप्सा । ग्रन्थनं ग्रन्थः । प्रतिष्ठायामकर्मकोयं लिप्साग्रन्थयोः सकर्मकः । गाधते जगाधे गाधिता । ऋदित्वाङ्के न ह्रस्वः अजगाधत् । सनि जिगाधिषते । यङि जागाध्यते । यङ्लुपि जागाधीति । अचि अगाधमतलस्पर्शम् । इङित इत्यने गाधनः । उणादौ पदिपठीति इः गाधिर्विश्वामित्रपिता ६०७ ॥

744. बाधृङ् रोटने । रोटन प्रतिघातः । बाधते बबाधे बाधिता । ऋदित्वाङ्के न ह्रस्वः अबबाधत् । इङित इत्यने बाधनः । क्तेट इत्यः बाधा । घञि बाधः । बाहुरिति तु मिवहीति णित्यौ वहेः [उणादौ ७२६ ] ॥

745 दधि धारणे । दाने इति कौशिकः । दधते देधे दधिता । यङ्लुपि दादधीति दादद्धि । णौ ङे अददधत् । अचि दधः । उणादौ पदिपठीति इः दधि ६०७ ॥

746. बधि बन्धने । वैरूप्ये शान्दानिति सनीतो दीर्घे च बीभत्सते । अर्थान्तरे तु बधते । न जनबध इति वृद्ध्यभावे अबधि बधकः । उणादौ पदिपठीति इः बधिः ६०७ । बधण संयमने । बाधयति ॥

747. नाधृङ् नाधृङ्वत् । उपतापैश्वर्याशीर्याञ्चार्थेषु नाधृङ्वदयं वर्तते । लाघवार्थमेव निर्देशः । वर्णक्रमानुसरणात्तु नैरुक्तायीतो । नाधते । अणोपदेशत्वादद्रुपसर्गान्तर इति णत्वाभावे प्रनाधते परिनाधते । येषां तु णोपदेशोयं तन्मते प्रणाधते परिणाधते । ननाधे नाधिता ॥

अथ नान्ती द्वौ सेटौ च ॥

748. पनि स्तुतौ । गुपौधूपेत्याये पनायति जिनम् । इङित्वाभावादत्र शेषात्परस्मायिति परस्मैपदम् । ये तु स्वार्थिकप्रत्ययान्तस्य प्रकृतिवद्द्गाथया प्रत्ययान्तस्य प्रकृत्यर्थवानित्व तयेरित्त्वमर्पीति प्रतिपन्नास्तन्मते इङितः कर्तरीत्यात्मनेपदे पनायते जिनम् । एवं पनायते । अशवि ते चेति वाये पनायिष्यते पनिष्यते । उणादौ तव्यशीत्यसे पनसः फलवृक्षः ६६१ । फनस इति तु फणेः फनसनामरसादय इत्यसे निपातनात् ५७३ ॥

749 मानि पूजायाम् । विचारे शान्दान्मानिति सनि पूर्वस्येतो दीर्घे च मीमांसते धर्मम् । शंसिप्रत्ययादित्य. मीमांसा । अर्थान्तरे घञि मानः । अनटि

माननम् । णौ मानयति । उणादौ मावावद्‌दीति से मांसम् ५६४ । मानिभ्राजेर्लुक् चेति तृः माता ८५९ । मानण् पूजायाम् । युजादेर्न वेति वा णिचि मानयति मानति ॥

अथ पान्ताश्चतुर्दश सेटश्च ॥

750. तिपृङ् 751 ष्टिपृङ् 752 ष्टेपृङ् क्षरणे । तेपते तितिपे तेपिता । आगमशासनमनित्यमितीडभावे तेप्ता । ऋदित्त्वाण्णौ ङे अतितेपत् । वौ व्यञ्जनादेरिति स्कासनोर्वा कित्त्वे तिपित्वा तेपित्वा तितिपिषते तितेपिषते ॥

751. ष्टिपृङ् । षः स इति सत्वे स्तेपते । षोपदेशत्वात्षत्वे तिष्टिपे । स्तेपिता । ऋदित्त्वाङ्के न ह्रस्वः अतिष्टेपत् । क्ते स्तिपितः ॥

752. ष्टेपृङ् । षः स इति सत्वे स्तेपते । षोपदेशत्वात्षत्वे तिष्टेपे । स्तेपिता । क्ते स्तेपितः । ऋदित्त्वाङ्के अतिष्टेपत् ॥

753. तेपृङ् कम्पने च । चकारात्क्षरणे । तेपते तितेपे तेपिता । क्ते तेपितः । ऋदित्त्वाङ्के न ह्रस्वः अतितेपत् ॥

754. टुवेपृङ् 755 केपृङ् 756 गेपृङ् 757 कपुङ् चलने । वेपते विवेपे वेपिता । ऋदित्त्वाङ्के अविवेपत् । ट्वित्त्वादथौ वेपथुः । न ख्यापूगिति प्रतिषेधाण्णत्वाभावे प्रवेपनम् । उणादौ त्रिपिनाजिनादय इतीने निपातनात् विपिनं गहनम् २८४ ॥

755. केपृङ् । केपते केपिता । ऋदित्त्वाङ्के अचिकेपत् ॥

756. गेपृङ् । गेपते जिगेपे गेपिता । ऋदित्त्वाङ्के अजिगेपत् ॥

757. कपुङ् । उदित्त्वान्ने कम्पते चकम्पे कम्पिता । चल्याहारार्थेति फलवत्कर्तर्यपि ण्यन्तात्परस्मैपदम् कम्पयति शाखाम् । गतिबोधेत्यणिक्कर्तुरत्र कर्मत्वम् । भीप्यादिभ्योभत्ययेनैव भीपादिसिद्धावद्विधानं णिलुकोनित्यत्वज्ञापनार्थम् । तेनाणिगे-र्गुणे कम्पया स्त्री । लङ्गिकम्प्योरिति नलुकि विकपितः । अङ्गविकृतेरन्यत्रोदित्त्वा-न्नलोपाभावे कम्पितः शीलाद्यर्थविवक्षायाम् । चालशब्दार्थादित्यने कम्पनः । स्म्यजसेति रे कम्प्रः । क्तेट इत्यः कम्पा । उणादौ अम्भिकुण्डीति इर्नलुक् च कपिः ६१४ । कपोल इति तु कपेः सौत्रस्यौले ४९३ । केपृङ्गेपृङौ गतावपि ॥

758. ग्लेपृङ् दैन्ये च । चकाराचलने । गतावप्यन्ये । ग्लेपते जिग्लेपे ग्लेपिता । ऋदित्त्वाङ्के न ह्रस्वः अजिग्लेपत् ॥

759. मेपृङ् 760 रेपृङ् 761 लेपृङ् गतौ । मेपते मिमेपे मेपिता । ऋदित्त्वाङ्के न ह्रस्वः अमिमेपत् ॥

760 रेपृङ् । रेपते रिरेपे रेपिता । ऋदित्त्वाङ्के अरिरेपत् । रेपृः शब्देपीत्येके ॥

761. लेपृङ् । लेपते लिलेपे लेपिता । ऋदित्त्वाद्ङे अलिलेपत् । क्ते लेपितः । देशान्तरप्राप्तिहेतुर्गतिस्तत्रैव स्थितस्य स्पन्दनं चलनमिति पृथगेषां पाठः । हेपृङ् चेति कौशिकः ॥

762. त्रपौषि लज्जायाम् । त्रपते । तॄत्रपफलेत्येत्वे द्वित्वाभावे च त्रेपे । औदित्त्वाद्वेट् त्रप्ता त्रपिता । वेटोपत इति क्तयोर्नेट् त्रप्तः त्रप्तवान् । आसुयुवपीति यापवादे घ्यणि अपत्राप्यम् । भ्राज्यलंकृगिनीष्णावपत्रपाशीलादिः अपत्रपिष्णुः । षित्त्वादङि त्रपा अपत्रपा । उणादौ भृमृत्रिस्युः त्रपु ७१६ ॥

763. गुपि गोपनकुत्सनयोः । गर्हायां सनि जुगुप्सते । अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति यं समुदायं सोऽवयवो न व्यभिचरति । न व्यभिचरति च गुपिर्गर्हायां सनन्तसमुदायमितीङित इत्यात्मनेपदम् । स्वार्थे इतीडभावः । इच्छासनन्तादेव सनो निषेधात्तुमर्हादिति सनि जुगुप्सिषते । शंसिप्रत्ययादित्यः जुगुप्सा । गर्हाया अन्यत्र सनोभावे अर्थान्तरेऽपि प्रायेण त्यादयो नाभिधीयन्ते इत्यत्र प्रायोग्रहणात् गोपते । अनटि गोपनम् । क्तौ गुप्तिः । गुपौ रक्षणे । गोपायति । गुपच् व्याकुलत्वे । गुप्यति । गुपण् भासार्थः । गोपयति ॥

अथ वान्ताः षट् सेटश्च ॥

764. अबुङ् 765 रबुङ् शब्दे । उदित्त्वान्ने अम्बते । अनात इति पूर्वस्यात्वे ने च आनम्बे । अचि कर्मणि घञि वा अम्बा । उणादौ शामादयोति ले अम्बो रसः ४६२ ॥

765. रबुङ् । उदित्त्वान्न रम्बते ररम्बे रम्बिता । के रम्बते इत्यचि करम्बः । कृगो वा कृकडिकटीत्यम्बे करम्बः [ उणादौ ३२१ ] ॥

766. लबुङ् अवस्रंसने च । चकाराच्छब्दे । उदित्त्वान्ने लम्बते गलम्बते अवलम्बते आलम्बते उल्लम्बते विलम्बते इत्यनेकार्थत्वमुपसर्गयोगेऽतिसमन्यत्राप्युदाहार्यम् । णके लम्बिका जिह्वा । विलम्बिका शकृद्विलम्बः । अचि लम्बः । उणादौ नञो लम्बेर्नलुक् चेति णिदुः अलाबुः ८३८ । अलम्बुसेति स्खलतेरम्बुसे अलम्बुसा नाम शाकम् ५८५ ॥

767. कबृङ् वर्णे । वर्णो वर्णनं शुक्लादिश्च । कबते चकबे कबिता । ऋदित्त्वाद्ङे न ह्रस्वः अचकाबत् । घ्यणि काब्यम् । उणादौ जठरेत्यरे कबरः कबरी ३९७. ४०३ । पदिपठीति इः कबिः [ ६०६. ६०७ ] । कर्बुर इति तु कर्बेरोष्ठ्यान्तस्य वाश्यसीत्युरे ४२३ ॥

768. क्लीबृङ् आधार्ष्ट्ये। क्लीबते चिक्लीबे क्लीबिता। ऋदित्त्वाङे अचिक्लीबत्। नाम्युपान्त्येति के क्लीबः। क्ते सेट्त्वात् केट इत्यः क्लीबा विक्लीबा॥

769. क्षीवृङ् मदे। क्षीवते चिक्षीवे क्षीविता। ऋदित्त्वाङे अचिक्षीवत्। नाम्युपान्त्येति के क्षीवः प्रक्षीवः। क्तयोरनुपसर्गाः क्षीवेति निपातनात् क्षीवः क्षीववान्। उपसर्गात्तु प्रक्षीवितः प्रक्षीवितवान्। एते च कबृडादयो यद्यपि दन्त्यौष्ठ्यान्ता अपि काव्यादिशब्देषु श्रूयन्ते तथापि वृद्धैरोष्ठ्यान्त्यमध्ये पठितत्वादस्माभिस्तथैव पठिताः॥

अथ भान्ताः सप्तदश शर्मिलभिंवर्जाः सेटश्च॥

770. शीभृङ् 771 [व]ीभृङ् 772 शल्भि कत्थने। शीभते शिशीभे शीभिता। ऋदित्त्वाङे अशिशीभत्। उणादौ ऋज्यिचर्तीत्यरे शीभरो हस्तिहस्तमुक्तो जललवः ३९७॥

771. [व]ीभृङ्। वीभते विवीभे वीभिता। ऋदित्त्वाङे अविवीभत्॥

772. शल्भि। शल्भते शशल्भे शल्भिता। ङे अशशल्भत्। भ्रयोपि क्ते सेट इति क्तेट इत्यः शीभा। [व]ीभा। शल्भा॥

773. वल्भि भोजने। वल्भते ववल्भे वल्भिता। घञि वल्भः॥

774. गल्भि धार्ष्ट्ये। गल्भते प्रजगल्भे गल्भिता। अचि प्रगल्भः। क्तेट इत्यः प्रगल्भा। प्रगल्भ इवाचरतीति गल्भक्लीबहोडाक्क्विति ङिति क्विपि धातोरनेकस्वरादिति परोक्षाया आमि प्रगल्भां चक्रे। क्विपो ङित्त्वादात्मनेपदम्॥

775. रेभृङ् 776 अभुङ् 777 रभुङ् 778 लभुङ् शब्दे। रेभते रिरेभे रेभिता। ऋदित्त्वाङे न ह्रस्वः अरिरेभत्। क्षुब्धविरिब्धेति निपातनात् विरिब्धः स्वरः। विरेभितमन्यत्॥

776. अभुङ्। उदित्त्वान्ने अम्भते। अनात इति पूर्वस्यात्वे ने च आनम्भे। अम्भिता। अम्भ इति त्वमेर्भो वान्तावित्यमते रूपम् [ उणादौ ९६२ ]॥

777. रभुङ्। उदित्त्वान्ने रम्भते ररम्भे रम्भिता। अचि रम्भा कदली। करम्भो दधिसक्तवः। क्ते रम्भितः॥

778. लभुङ्। उदित्त्वान्ने लम्भते ललम्भे लम्भिता। क्ते लम्भितः। अचि घञि वा लम्भः॥

779. ष्टभुङ् 780 स्कभुङ् 781 ष्टुभुङ् स्तम्भे। स्तम्भः क्रियानिरोधः। षः स इति सत्वे उदित्त्वान्ने च स्तम्भते तस्तम्भे स्तम्भिता। अचि घञि वा स्तम्भः।

अडमनिस्तब्धनिस्तब्ध इति पत्वे विष्टम्भ । अवाचाश्रयोर्जेति पत्वे अवष्टम्भते दण्डम् अवष्टम्भते शूर । उद स्थेति सलुकि उत्तम्भते । णौ सनि पत्वे तिष्टम्भयिषते । ष्टपर पकारोयमित्येके । तन्मते टिष्टम्भयिषते टाष्टम्यते । विष्टम्यते । स्तभ्यते इति तु स्तभ्राते ॥

780 स्कभुङ् । उदित्वान्ने स्कम्भते स्कम्यते चस्कम्भे स्कम्भिता । विष्कभ्यते इति तु स्कभ्राते । स्तम्भू स्कम्भू सौत्रौ स्त स्तभ्नाति स्तभ्नोति । स्कभ्नाति स्कभ्नोति । स्कभ्न इति पत्वे विष्कम्भ ॥

781 ष्टुभुङ् । प स इति सत्वे स्तोभते दोष । पोपदेशत्वात्पत्वे तुष्टुभे । उपसर्गात्सुगिति पत्वे अभिष्टोभते । उदित्वादूदितो वेति क्त्वि वेट् स्तुब्ध्वा । इटि यौ व्यञ्जनादेरिति वा कित्वे स्तुभित्वा स्तोभित्वा । वेट्त्वात् क्तयोर्नेट् स्तुब्ध स्तुब्धवान् । घञि स्तोभ । उणादौ ककुबिति कर्माणि क्विपि त्रिष्टुप् अनुष्टुप् ९३२ । स्तुम्भू इति सौत्रस्य स्तुभ्नाति स्तुभ्नोति ॥

782 जभुङ् 783 जभैङ् 784 जृभुङ् गात्रविनामे । जभुङ् । उदित्वान्ने जम्भते जम्भ्यते जजम्भे । क्ते जम्भित । अने जम्भन ॥

783 जभैङ् । जभ स्वरे इति ने जम्भते जम्भिता । ऐदित्वात् क्तयोर्नेट् जब्ध जब्धवान् ॥

784 जृभुङ् । उदित्वान्ने जृम्भते जजृम्भे जृम्भिता जृम्भित जृम्भितवान् । क्तौ सेट्त्वात् क्तेट इत्य जृम्भा । घञि जृम्भ ॥

785 रभि राभस्ये । राभस्य कार्योपक्रम । रभोपरोक्षाशवीति शबपरोक्षयोर्वर्जनान्नस्याभावे आरभते आरेभे । अनुस्वारेत्वान्नेट् आरब्धा आरब्धुम् । रभलभेति स्वरस्येत्वे ह्रित्वाभावे च आरिप्सते । घञि आरम्भ । णौ आरम्भयति । णके आरम्भक । साधाविति णिनि साध्वारम्भी । ख्णम् चाभीक्ष्ण्ये इति णमि आरम्भमारम्भ याति । अचि रम्भ । स्त्रियाम् रम्भा । अनटि आरम्भणम् । एषु रभोपरोक्षेति न । शक्तिकीति ये रभ्यम् आरभ्यम् सरभ्यम् । शकधृषेति तुमि आरभते भोक्तुम् । उणादौ दिवादीति कित्यसे रभसो निर्विचारा प्रवृत्ति ९७२ ॥

786 डुलभिष् प्राप्तौ । शपरोक्षयोर्वर्जनाल्लभ इति नस्याभावे लभते लेभे । अन्यत्र स्वरे ने आलम्भयति आलम्भक साध्वालम्भी आलम्भमालम्भ याति आलम्भो वर्तते । अनुस्वारेत्वान्नेट् लब्धा लब्धुम् । शक्तिकीति ये लभ्यम् । आङो यीति ने आलम्भ्यम् । उपात्स्तुताविति ने उपलम्भ्य धनम् । ड्वित्त्रिमक् लब्धिमम् । षित्त्वादङि लभ इति ने नो व्यञ्जनस्येति नलुकि लभा उपलभा । भ्रादिभ्य

इति क्तौ लब्धिः उपलब्धिः भिजमोर्वेति वा ने अलाभि अलम्भि लाभं लाभम् लम्भं लम्भम्। उपसर्गात्खल्घञोश्चेति ने दुष्पलम्भः उपलम्भः उपालम्भि उपलम्भमुपलम्भम्। सुदुर्भ्य इति ने अतिसुलम्भम् अतिदुर्लम्भम् अतिसुलम्भः अतिदुर्लम्भः। केवलेभ्यस्तु नस्याभावे सुलभम् दुर्लभम् सुलाभः दुर्लाभः। रभलभेति स्वरस्येत्वे द्वित्वाभावे च सनि लिप्सते भोक्तुम्। अत्र शकधृषेति तुम्॥

अथ मान्तास्त्रयः सेटश्च॥

787. भामि क्रोधे। भामते बभामे भामिता। यङि बाभाम्यते। अत्रातः परस्यानुनासिकस्याभावान्मुरत इति पूर्वस्य मुरन्तो न भवति। ये त्वत इति पूर्वस्य विशेषणं प्रतिपन्नास्तन्मते मौ बम्भाम्यते। यङ्लुपि वम्समोर्मो न इति मस्य नत्वे बाभान्वः बाभान्मः बम्भान्वः बम्भान्मः। क्विपि पदान्ते मो नत्वे प्रभान्। नाम्नो नोनह्न इति नलुक् न भवति नत्वस्यासिद्धत्वात्। आवश्यके णिनि भामिनी। घञि भामः। उणादौ पञ्चमाड्ड इति डे भाण्डम् १६८॥

788. क्षमौषि सहने। क्षमते चक्षमे। औदित्त्वादिट् क्षमिता क्षन्ता क्षमितव्यम् क्षन्तव्यम्। शकितकीति ये क्षम्यम्। षित्वादङि क्षमा। क्षमौच् सहने इत्यस्य तु स्त्रियां क्तौ क्षान्तिः। वेट्त्वात् क्तयोर्नेट् क्षान्तः क्षान्तवान्। उणादौ गमिजमीति डित्यमि क्षं भार्या १३७। क्रमिगमिक्षमेस्तुमाद्यातः क्षान्तुं भूमिस्तुमर्थश्च ९४२। क्षमौच् सहने। क्षाम्यति॥

789. कमूङ् कान्तौ। कान्तिरभिलाषः। कमेर्णिङिति णिङि कामयते। अशवि ने वेति वा णिङि कम्यते काम्यते। णिश्रीति ङे अचकमत अचीकमत। चकमे। धातोरनेकस्वरादिति परोक्षाया आमि कामयां चक्रे। कमिता कामयिता। ऊदितो वेति क्त्वि वेट् कान्त्वा कमित्वा कामयित्वा। ज्ञानेच्छेति वर्तमाने क्तः कान्तः। अत्र वेटोपत इति नित्यमिडभावः। णिङि कामितः। क्तौ कान्तिः। णिवेत्त्यासेत्यने कामना। अनटि कमनम् कामनम्। न ख्यापूगीति प्रतिषेधाददुरुपसर्गान्तर इत्यधिकृत्य स्वरादिति णेर्वेत्यनेन च णत्वं न भवति प्रकमनम् प्रकामना। कर्मणोऽणित्यणि धर्मकामी। णिङ्शीलिकामीत्यणोऽपवादे णे धर्मकामा। अतः कृकमीति रेफस्य सत्वे पयस्कामः। शकितकीति ये कम्यम्। णिङ्र्यं य एघात इति ये काम्यम्। णिङ्यानशि कामयमानः। अत्र शविषयत्वान्नित्यं णिङभावःकम्यमीत्यत्र कमेर्वर्जनाद्ह्रस्वाभावश्च। कथं कामयानः। कामो यानमस्येति बहुव्रीहौ कामयानः कामगतिरित्यर्थः। आनशि आगमशासनस्यानित्यत्वान्माभावः। यद्वामनः

कामयानः सिद्धोनादिश्चेत् । मोकमीत्यत्र कमेर्वर्जनाद्वृद्धिप्रतिषेधाभावे घञि कामः । शृकमेत्युकणि कामनशीलो दास्याः कामुकः । अत्राकमेरुकस्येत्यत्र कमेर्वर्जना-त्प्रतिषेधाभावे कर्मणि कृत इति षष्ठी । स्म्यजसेति रे कम्रः । न णिङ्येत्यत्र दीपि-ग्रहणादुत्सर्गस्यापि समावेशो इङित इत्यने कमनः । उणादौ मृजूभित्यठे कमठो भि-क्षाभाजनम् १६७ । ऋच्छिचटीत्यरे कमरो मूर्खः ३९७ । कमेरत उच्चेत्यारे कुमारः ४०९ । मृदिकन्दीत्यले कमलम् । णिङि कामलः ४६५ । मुरलोरलेत्यले निपातनात् कोमलम् ४७४ । कमितिमेर्दोन्तश्चेत्युके कन्दुकः ५४ । शमिकमिपलिभ्यो बलः कम्बलः ४९९ । मायावदीति से कंसः ५६४ । कृसिकमीति तुनि कन्तुः कन्दर्पः ७७३ ॥

अथ यान्ताः सप्तदश सेटश्च ॥

**790. अयि 791 वयि 792 पयि 793 मयि 794 नयि 795 चयि 796 रयि** गतौ । अयते । उपसर्गस्यायाविति लत्वे पलायते पल्ययते । दयायासेति परोक्षाया आमि पलायां चक्रे । पलयिता । अनटि निलयनम् दुलयनम् । निर्दुसोस्तु सो रुत्वस्य परे लत्वेऽसिद्धत्वात् निरयणम् । अत्र स्वरादिति नस्य णत्वम् । अदुरुपसर्गा-न्तर इत्यत्र दुरो वर्जनात्स्वरादिति णत्वाभावे दुरयनम् । मनि य्वोरिति यलोपेकारा-न्तादिइतिशेत्यत इति लोपविधानादस्य लोपाभावे स्वमा । ये त्वत्राप्यदुकमिच्छन्ति तन्मते सुमा । क्विपि य्वोरिति यलुकि ह्रस्वस्येति ते स्वत् । ये त्वत्राप्यत इत्यल्लोप-मिच्छन्ति तन्मते सुत् । ये त्वन्तरङ्गं तागमं प्रति बहिरङ्गस्यायलुकोऽसिद्धत्वमिच्छन्ति तन्मते स्वः । विचि यलुकि स्वः । क्तौ य्वोरिति यलुकि अतिः । अदुकपक्षे तु तिः ॥

**791.** वयि । वयते । न शसेत्येत्वनिषेधात् वयये । वयिता । मनि य्वोरिति यलुकि सुवमा । अदुकपक्षे सुव्मा । अत्र स्वरस्य परे प्राग्विधाविति स्थानिवत्त्वादलुना-सिके चेति वस्योट् न भवति । उणादौ सृवयिभ्यां णिदित्यसे वायसः ५७० । भामित्यमि वयः पक्षी वाल्यादि न ९९२ ॥

**792.** पयि । पयते पेये पयिता । मनि यो लुकि सुपमा । अदुकपक्षे सुप्मा । एवं वनि सुपवा सुप्वा । क्तौ पतिः प्तिः । असित्यसि पयः । पिबतेर्वा पाहाभ्यां पयश्चो नेत्यसि [ उणादौ ९९२. ९९३ ] ॥

**793.** मयि । मयते मेये मयिता । अचि मयः ॥

**794.** नयि । नयते नेये नयिता । अणोपदेशत्वाण्णत्वाभावे प्रनयिता । मनि यो लुकि सुनमा । अदुकपक्षे सुन्मा । एवं वनि सुनवा सुन्वा । क्विपि यलुकि ह्रस्व-स्येति ते च सुनन् सुनती सुननः । मु सुनौ सूनः । अत्रादुक् स्वरस्य परे प्राग्वि-

धावितिं स्थानित्वस्य न संधीति प्रतिषेधान्नि दीर्घ इति दीर्घो नाम्नो नोनह्न इति नस्य लुक् च भवति । क्तौ नीतिः न्तिः ॥

795. चयि । चयते चेये चयिता । घञि चायः । चय इति तु चिनोतेरलि ॥

796. रयि । रयते रेये रयितेत्यादि ॥

797. तयि 798 णयि रक्षणे च । चकाराद्गतौ । तयते तेये तयिता । णिन् चावश्यकेति णिनि तायी ॥

798. णयि । पाठे धात्वादेरिति णस्य नत्वे नयते । णोपदेशत्वाददुरुपसर्गान्तर इति णत्वे प्रणयते । नेये नयिता । मनादिषु पूर्ववत् ॥

799. दयि दानगतिहिंसादहनेषु च । चकाराद्रक्षणे स्मृत्यर्थदयेश इति कर्मणो वा कर्मत्वे शेषे इति षष्ठ्याम् दानस्य दयने दानं दयते । दयायासिति परोक्षाया आमि दयां चक्रे । दयिता । क्ये दय्यते । अत्र य्वोः प्वयित्यत्र यिवर्जनाद्यलोपाभावः । शीङ्श्रद्धेत्यालौ दयालुः । दयनं दयन्ते प्राणिनोनयेति वा यथाक्रमं क्त्यनटोरपवादे भिदादित्वादङि दया । क्ते दयितः । दयेरेव कर्मणो वा कर्मत्वविधानाद्दिङ् पालने इत्यस्य कर्मणि द्वितीयैव भवति । मातरं दयते ॥

800. ऊयैङ् तन्तुसंताने । ऊयते । गुरुनाम्यादेरिति परोक्षाया आमि ऊयां चक्रे । ऊयिता । ऐदित्वात् क्तयोर्नेट् ऊतः ऊतवान् । मनि यलुकि गुणे च स्योमा । एवं धनादिष्वपि ॥

801. पूयैङ् दुर्गन्धविशरणयोः । पूयते पुपुये पूयिता । ऐदित्वात् क्तयोर्नेट् पूतः ,पूतवान् । अचि पूयः । स्त्रियां गौरादित्वाड् ड्याम् पूयी । क्तौ पूतिः । अत्र क्तेनिट्त्वात् क्तेट इत्यप्रत्ययो न भवति । उणादौ दृमुपीति किति तौ पूतिर्दुर्गन्धः ६९१ ॥

802. क्नूयैङ् शब्दोन्दनयोः । उन्दन क्लेदनम् । दुर्गन्धेपीत्येके । क्नूयते चुक्नूये क्नूयिता । ऐदित्वात् क्तयोर्नेट् क्नूतः क्नूतवान् । णावर्तिरीति पौ पुस्ताविति गुणे य्वोरिति यलुकि च क्नोपयति । चेलार्थान्क्नोपेरिति णमि चेलक्नोपं वृष्टो देवः । न णिङ्योति प्रतिषेधादनाभावे तृनि क्नूयनशीलः क्नूयिता ॥

803. क्ष्मायैङ् विधूनने । क्ष्मायते चक्ष्माये क्ष्मायिता । ऐदित्वात् क्तयोर्नेट् क्ष्मातः क्ष्मातवान् । णावर्तिरीति पौ य्वोरिति यलुकि क्ष्मापयति । तृनि पूर्ववत् क्ष्मायिता ॥

804. स्फायैङ् 805 ओप्यायैङ् वृद्धौ । स्फायते पस्फाये स्फायिता । ऐदित्वात् क्तयोर्नेट् स्फातः स्फातवान् । स्फायः स्फी वेति स्फीभावे स्फीतः स्फीतवान् । णौ स्फायः स्फावीति स्फाव् स्फावयति । पारायणिकानां तु स्फावयतीत्यपि । तथा

क्विपि यलुकि स्फामाचष्टे इति । णिच्यन्तस्यावादेशो स्फवयतीति । उणादौ दिननग्नेति ने निपातनात् फेनः २६८ । भीवृधीति रे स्फारम् ३८७ । स्थविरपिठिरेतीरे निपातनात् स्फिरः स्फार इत्यर्थः ४१७ ॥

805. ओप्यायैङ् । प्यायते । परोक्षायङोः प्यायः पीति प्यादेशे आपिप्ये आपेपीयते । क्तयोरनुपसर्गस्येति पीभावे सूयत्यादीति क्तस्य नत्वे च पीनौ स्तनौ पीनं मुखम् । आङोन्धूधसोरिति प्यादेशे आपीनोन्धुः आपीनमूधः । अर्थान्तरे तु आप्यानश्चन्द्रः । अत्र व्यञ्जनान्तस्थात इति तस्य नत्वम् । दीपजनेति कर्तर्यद्यतन्यास्ते वा ञिचि तलुकि च अप्यायि अप्यायिष्ट । न ख्यापूगिति प्रतिषेधात्स्वरादिति णत्वाभावे प्रप्यानः । ओदित्वात्सूयत्यादीति तस्य नत्वम् ॥

806. तायृङ् संतानपालनयोः । संतानः प्रबन्धः । तायते तताये तायिता । दीपजनेति वा ञिचि अतायि अतायिष्ट । ऋदित्वाङ्के न ह्रस्वः अततायत् । यङि तातायते । यङ्लुपि तातायीति तातातेि । न णिङयेति प्रतिषेधादनाभावे तृनि तायनशीलस्तायिता । णिन् चावश्यकेति णिनि तायी ॥

अथ लान्ता नव सेटश्च ॥

807. वलि 808 वल्लि संवरणे । वलते । अनादेशादेरित्येत्वद्वित्वाभावयोर्न शसेति निषेधात् ववले । वलिता । क्ते उपोद्वलितः । अचि वलः । कुत्सितो वलः कुवलः । स्त्रियां गौरादित्वाङ् ङ्याम् कुवली बदरी । घञि वालाः केशाः । कल्याणा वाला यस्या इति क्रोडादित्वादसहनञिति ङयभावे आपि कल्याणवाला । श्वेतवालीति तु जातिवाचिनः पाककर्णेति ङ्यां सिद्धम् । उणादौ भीण्शलीति के वल्कम् २१ । स्यमिकषीतीके वलीकं नीव्रम् ४६ । सृणीकास्तीकेतीके निपातनात् वल्मीको नाकुः ५० । कुगुवलीत्यये वलयं कटकः ३६५ । वलिपुषेः कलक् वल्कलम् ४९६ । वल्कं लातीति वा डे वल्कलम् । पदिपठीति इः वालिः ६०७ । फलिवलीति गौ वल्गु ७५८ । दन्त्योष्ठ्यादिरयम् । ज्वलादौ वल प्राणनधान्यावरोधयोरिति त्वोष्ठ्यादिः । वलति । वर्षादयः क्लीबे इत्यलि वलम् । वा ज्वलादीति णे वालः । अचि वलः । उणादौ शलिवलीत्याके वलाका ३४ । वलेर्वोन्तश्च वेत्यजे वल्वज उलपः । वल्वजा सवुसो धान्यपुञ्जः १३३ । विटपोलपेत्यपे निपातनात् उलपः ३०७ । वलण् प्राणने घटादिश्चेत्येके । वलयति ॥

808. वल्लि । वल्लते ववल्ले वल्लिता । क्ते वल्लितः । क्ते मेदृत्वात् नेट इत्यः वल्ल । अचि वल्लम् । उणादौ कृशृभ्यभे वल्लभः ३२९ । मीमसीत्युरे वल्लूरं

शुष्कमांसम् ४२७। वडिवटीत्यवे वड्वो गोपालः ६१६। पदिपटीति इः वल्लिर्लता ६०७। नदिवल्लीत्यरौ वल्लरिर्मञ्जरी ६९८॥

809. शलि चलने च। चकारात्संवरणे। तालव्यादिः। शलते शेले शलिता। उणादौ भीण्शलीति के शल्कः शरणम् २१। शलिबलीत्याके शलाका ३४। शल्यणेर्णिदित्यूके शालूकः ९१। कृशृभित्यभे शलभः ३२१। स्याछामेति ये शल्यम् ३५७। यावादित्वात्के शल्यकः। मृदिकन्दीत्यले शललं श्वाविल्सूची ४६६। शलमिति त्वचि। कामिवमीति णिदिः शालिः ६१८। शलेराडुः शलाडुः कोमलं फलम् ७६३। लस्जीर्ष्यिशलेरालुः शलालुर्वृक्षावयवः ८२२। शल गतौ ज्वलादिः शलति। या ज्वलादीति णे शाला। अचि शलं श्वाविद्रोम॥

810. मलि 811 मल्लि धारणे। मलते मेले मलिता। अचि मलः। कर्मणि घञि माला। उणादौ कुगुवलीत्यये मलयो गिरिः ३६५। मह्किणीति णिल्लूरे मालूरो बिल्वः ४२८। चुरादेराकृतिगणत्वाच्चुरादावदन्तः मलयति। अलि परिमलः॥

811. मल्लि। मल्लते ममल्ले मल्लिता। अचि मल्लः। गौरादित्वाद् ङ्याम् मल्ली विचकिलः। णके मल्लकः। स्त्रियाम् मल्लिका। उणादौ हृकृत्रित्यके मल्लकः शरावः। मल्लिका विचकिलः शरावश्च २७॥

812. भलि 813 भल्लि परिभाषणहिंसादानेषु। भलते बभले भलिता। भलिस्थाने ओष्ठ्यादिं बलिमेके पठन्ति बलते। अनादेशादेरित्येत्वद्वित्वाभावयोः बेले। भलिण् आभण्डने। निभालयते। उणादौ मृमन्यञ्जीत्यूके भालूक ऋक्षः ९८॥

813. भल्लि। भल्लते बभल्ले भल्लिता। करणे व्यञ्जनादिति घञि भल्लः क्षुरप्रः। उणादौ कणिभल्लेर्दीर्घश्च वेत्यूके भल्लूको भालूकश्च ऋक्षः ६०। पदिपटीति इः भल्लिः [ ६०७ ]॥

814. कलि शब्दसंख्यानयोः। कलते आकलते संकलते परिकलते प्रत्याकलते विकलते चकले कलिता। अचि कलः। कर्मणि घञि कालः। तिकृतौ नाम्नीत्यके कलिका। उणादौ भीण्शलीति के कल्को दम्भः २१। श्रीकलीतीके कलिका कोरकम्। उत्कलिकोर्मिः ३८। कलम इति तु कडत् मदे इत्यस्य सृपृप्रथीत्यमे डस्य लत्वे च सिद्धम् ३४७। स्याछामेति ये कल्यं प्रातः ३५७। कुलिलुलीत्याये कलायस्त्रिपुटधान्यम् ३७२। मृदिकन्दीत्यले कललं शुक्रशोणितमलः ४६६। कल्यनिमहीतीले कलिलं व्याप्तम् ४८१। ऋपृनहीत्युषे कलुषं पापम् ५५७। कलेर्मषः कल्मषं पापम् ५६२। कुनेश्च माषक् कल्माषः शबलः ५६३।

कलिकुलिभ्यां मासक् कल्मासः शवलः ५८४ । पदिपठीति इः कलिः ६०७ । कलण् क्षेपे । कालयति । अचि कालः । णिवेत्त्यास्यने कालना । स्वरेभ्य इति इः कालिः [ उणादौ ६०६ ] । कालिकेति तु कालाचोरादकाभि । कलण् संख्यानगत्योः । अदन्तः कलयति । कलना । भीषिभूषीत्यन बहुवचनादङि कला ॥

815. कल्लि अशब्दे । शब्दस्याभावोशब्दं तूष्णींभावः । शब्दार्थोयमित्येके । अव्यक्तशब्दार्थ इत्यपरे । कल्लते चकल्ले कल्लिता । अचि कल्लः । उणादौ पिञ्छोलकल्लोलेत्योले कल्लोलः ४९९ ॥

अथ यान्ताश्चतुर्दश सेटश्च ॥

816. तेवृङ् 817 देवृङ् देवने । तेवते तितेवे तेविता । ऋदित्त्वाङे न ह्रस्वः अतितेवत् । यङि तेतेव्यते । यङ्लुपि तेतेवीति । पक्षेनुनासिके चेति वस्योटि गुणे च तेतयोति । क्ङित्येवोङिति पक्षे य्वोरिति वलुकि तेतेति । मन्यनुनासिके चेति वस्योटि गुणे च सुतयोमा । वनि य्वोरिति वलुकि सुतेवा । क्विप्युटि सुतयूः । क्विपि य्वोरिति यस्य लुकि सुतेः । क्तेरपवादः क्तेट इत्यः तेवा ॥

817. देवृङ् । देवते दिदेवे देविता । ऋदित्त्वाङे न ह्रस्वः अदिदेवत् । शेषं पूर्ववत् । परेर्देवीति घिनणि परिदेवी । उपसर्गाद्देवृदेवीति णके आदेवकः । उणादौ ऋच्छिचटीत्यरे देवरः ३९७ । मृदिकन्दीत्यले देवल ऋषिः ४६५ । देवट इति तु दीव्यतेर्दिव्यषीत्यटे १४२ ॥

818. षेवृङ् 819 सेवृङ् 820 केवृङ् 821 खेवृङ् 822 गेवृङ् 823 ग्लेवृङ् 824 पेवृङ् 825 प्लेवृङ् 826 मेवृङ् 827 म्लेवृङ् सेवने । सर्वे ऋदितः सेटश्च । ऋदित्त्वं ङपरे णावुपान्त्यह्रस्वाभावार्थम् । षः स इति सत्वे सेवते सिषेवे सेविता । ऋदित्त्वाङे ह्रस्वाभावे षोपदेशत्वाच्च नाम्यन्तस्थेति षत्वे असिषेवत् । परिनिवेः सेव इति षत्वे परिषेवते निषेवते विषेवते । अड्व्यवायेपि पर्यषेवत इत्यादि । सनि परिषिषेविषते । अत्र णिस्तोरेवेति नियमेन बाधितस्य षत्वस्य प्रतिप्रसवः । अनटि सेवनम् । भीरुष्ठानादित्वात्षत्वे दुन्दुभेः सेवनं दुन्दुभिषेवणम् ॥

819. सेवृङ् । सेवते । असोपदेशत्वात्षत्वाभावे परिसेवते निसेवते विसेवते पर्यसेवत । सनि परिसिसेविषते । सिसेवे । णौ ङे असिसेवत् । क्ते सेवितः । क्तेट इत्यः सेवा ॥

820. केवृङ् । केवते चिकेवे । णौ ङे अचिकेवत् । उणादौ मृदिकन्दीत्यले केवलः ४६५ ॥

821. खेवृङ् । खेवते चिखेवे खेविता । णौ ङे अचिखेवत् ॥

822. गेवृङ् । गेवते जिगेवे । णौ ङे अजिगेवत् ॥

823. ग्लेवृङ् । ग्लेवते जिग्लेवे । णौ ङे अजिग्लेवत् ॥

824. पेवृङ् । पेवते पिपेवे पेविता । णौ ङे अपिपेवत् ॥

825. प्लेवृङ् । प्लेवते पिप्लेवे । णौ ङे अपिप्लेवत् ॥

826. मेवृङ् । मेवते मिमेवे । णौ ङे अमिमेवत् ॥

827. म्लेवृङ् । म्लेवते मिम्लेवे । णौ ङि अमिम्लेवत् ॥

828. रेवृङ् 829 पवि गतौ । रेवृङ् प्लुतिगतावित्यन्ये । प्लुतिभिर्गतिः प्लुतिगतिः । रेवते रिरेवे रेविता । ऋदित्वाङ्के ह्रस्वाभावे अरिरेवत् । नाम्युपान्त्येति के रेवा नर्मदा । उणादौ तृजीत्यन्ते रेवन्तः सूर्यपुत्रः २२१ । रेवती तु रैयते-र्विचि मतौ ङ्यां रूपम् ॥

829. पवि । पवते पेवे पविता । इङित इत्यने पवनः ॥

अथ शान्तौ द्वौ सेटौ च ॥

830 काशृङ् दीप्तौ । काशते चकाशे काशिता । ऋदित्वाङ्के ह्रस्वाभावे अच-काशत् । अचि काशः आकाशः संकाशः प्रकाशः । नामिनः काशे इति दीर्घे प्रतीकाशः नीकाशः । घञि काशः । उणादौ वनिकणीति ठे काष्ठम् १६२ । पदिपठीति इः काशिः ६०७ ॥

831. क्लेशि विबाधने । क्लेशते चिक्लेशे क्लेशिता । क्ते क्लेशितः । क्तेट इत्यः क्लेशा । घञि क्लेशः ॥

अथ षान्ता द्वादश सेटश्च ॥

832. भाषि च व्यक्तायां वाचि । प्रकृते॥परश्चकारः प्रकृतिमनुकर्षति । तेन क्लेशिर्भाषिश्च व्यक्तायां वाचि । क्लेशिरुदाहृत एव । भाषि । भाषते बभाषे भाषिता । णौ ङे भ्राजभासेति वा ह्रस्वे अबीभषत् अबभाषत् । क्ते भाषितः । क्तेट इत्यः भाषा । घञि भाषः । ध्यणि भाष्यते इति भाष्यम् । करणे वा बहुलमिति ध्यण् । निन्दाहिंसेति णके व्याभाषणशीलो व्याभाषकः ॥

833. ईषि गतिहिंसादर्शनेषु । ईषते । गुरुनाम्यादेरिति परोक्षाया आमि ईषां चक्रे । ईषिता । क्ते ईषितः । क्तेट इत्यः ईषा । नाम्युपान्त्येति के वा रूपम् । उणादौ ऋच्यृजीतीके ईषीका काशः । इषीकेति तु इषत् इच्छायामित्यस्य ४८ । इषुरित्यपीच्छतेः पृकाहषीति कित्यौ रूपम् ७२१ । ईष उञ्छे । ईषति ॥

834. गेषृङ् अन्विच्छायाम् । अन्विच्छान्वेषणम् । गेषते जिगेषे गेषिता । ऋदित्वाङ्के ह्रस्वाभावे । अजिगेषत् ॥

835. येपृङ् प्रयत्ने । येपते यियेपे येपिता । ऋदित्त्वाङ्ङे ह्रस्वाभावे । अयियेपत् ॥

836. जेपृङ् 837 णेपृङ् 838 एपृङ् 839 ह्रेपृङ् गतौ । जेपते जिजेपे जेपिता । ऋदित्त्वाङ्ङे अजिजेपत् ॥

837. णेपृङ् । पाठे, धात्वादेरिति नत्वे नेपते । णोपदेशत्वाददुरुपसर्गेति णत्वे प्रणेपते । निनेपे नेपिता । ऋदित्त्वाङ्ङे अनिनेपत् । नेटेति तु नयतेर्नियः षादिरिति तृप्रत्यये रूपम् [ उणादौ ८६४ ] ॥

838. एपृङ् । एपते अन्वेपते । गुरुनाम्यादेरिति परोक्षाया आमि एपां चक्रे । स्वरादेर्द्वितीय इति पेर्द्वित्वे अन्वेपिपिपते । ऋदित्त्वाङ्ङे न ह्रस्वः मा भवानेपिपत् । अत्राप्योणेरेव ऋदित्करणेन नित्यस्यापि द्वित्वस्य ह्रस्वेन बाधाज्ञापनाद्ध्रस्वस्याप्राप्तिः । क्ते अन्वेपितः । अन्विष्ट इति त्विष्यतेः ॥

839. ह्रेपृङ् । ह्रेपते जिह्रेपे ह्रेपिता । ऋदित्त्वाङ्ङे अजिह्रेपत् । क्ते ह्रेपितः । क्तेट इत्यः ह्रेपा ॥

840. रेपृङ् 841 हेपृङ् अव्यक्ते शब्दे । रेपते रिरेपे रेपिता । ऋदित्त्वाङ्ङे अरिरेपत् । क्तेट इत्यः रेपा ॥

841. हेपृङ् । हेपते जिहेपे हेपिता । क्ते हेपितम् । ऋदित्त्वाङ्ङे अजिहेपत् । क्तेट इत्यः हेपा ॥

842. पर्पि गेहने । पर्पते पपर्पे पर्पिता । क्विपि मह्मुकि रात्स इति नियमात्पदस्येति लोपाभावे सुपर्द् । पार्ष्णिरिति तु पृषेः । पृषिहृपिभ्यां वृद्धिश्चेति णौ [ उणादौ ६३६ ] । पर्षदित्यपि पृणातेः षः सदिति सदि [ उणादौ ८९७ ] । परिषदिति तु परिपूर्वात्सीदतेः क्विपि ॥

843. घुपुङ् कान्तीकरणे । उदित्त्वान्ने घुंपते जुघुंपे घुंपिता ॥

अथ सान्तास्त्रयोदश सेटश्च ॥

844. स्रंसूङ् प्रमादे । दन्त्यादिः । प्रमादोवलेपः । स्रंसते सस्रंसे स्रस्यते । ऊदित्त्वात् क्त्वि वेट् स्रस्त्वा । इटि क्त्वेति कित्त्वाभावे स्रंसित्वा । वेट्त्वात् क्तयोर्नेट् स्रस्तः स्रस्तवान् । वस्त्रस्रंसेत्यत्र ध्वंसिसहचारितस्य युतादिस्रंसेर्ग्रहणादस्य यङि न्यभावे सास्रस्यते । स्रंस्ध्वंसित्यत्र साहचर्यानाश्रयणादुभयोरपि ग्रहणे क्विपि दत्वे उखास्रत् । भान्तोयमित्येके विस्रम्भते विस्रभ्यते ॥

845. कासृङ् शब्दकुत्सायाम् । शब्दस्य कुत्सा रोगः । कासते । दयायासिनि परोक्षाया आमि कासां चक्रे । कासिता । ऋदित्त्वाङ्ङे न ह्रस्वः अचकासत् । क्ते कासितम् । क्तेट इत्यः कासा । घञि कासः । विकास इति तु कसेर्घञि ॥

846. भासि 847 टुभ्रासि 848 टुभ्लासृङ् दीप्तौ । भासते बभासे भासिता । णौ ङे भ्राजभासेति वा ह्रस्वे अबीभसत् अबभासत् । ग्रहादित्वाण्णिनि उद्भासी । भञ्जिभासीति घुरे भासनशीलो भासुरः । स्येशभासेति वरे भास्वरः । दिद्युद्दृदिति क्विपि भाः भासौ भासः । भेति तु मृगयेच्छेति निपातनादङ्यपि च भातेः । क्ते भासितः । क्तेट इत्यः भासा । घञि उद्भासः । उणादौ तृजिभुवदीत्यन्ते भासन्तः पाथामन्तेत्यथि भासयन्तश्च सूर्यः २२१ ॥

847. टुभ्रासि । भ्रासभ्लासेति वा श्ये भ्रास्यते भ्रासते । जृभ्रमवमेति वा स्वरस्यैत्वे द्वित्वाभावे च भ्रेसे बभ्रासे । भ्रासिता । णौ ङे भ्राजभासेति बहुवचनाद्वा ह्रस्वे अबिभ्रसत् अबभ्रासत् । द्विस्वादयौ भ्रासयुः ॥

848. टुभ्लासृङ् । भ्रासभ्लासेति वा श्ये भ्लास्यते भ्लासते । जृभ्रमेति वैत्वे द्वित्वाभावे च भ्लेसे बभ्लासे । भ्लासिता । ऋदित्वाण्णौ ङे न ह्रस्वः अबभ्लासत् । द्विस्वादयौ भ्लासयुः ॥

849. रासृङ् 850 णासृङ् शब्दे । रासते ररासे । ऋदित्वान्न ह्रस्वः अररासत् । नाम्नि पुंसि चेति णके रासकः । उणादौ कृशॄभिरयभे रासभः ३२९ । रास्ना रजेति तु रसेर्णिद्वेति ने रसतेः २६० ॥

850. णासृङ् । पाठे धात्वादेरिति नत्वे नासते । णोपदेशत्वाददुरुपसर्गेति णत्वे प्रणासते । ननासे नासिता । ऋदित्वाङ्के अननासत् । भिदि नासा । णके नासिका ॥

851. णसि कौटिल्ये । पाठे धात्वादेरिति णस्य नत्वे णोपदेशत्वाददुरुपसर्गेति णत्वे प्रणसते । नेसे नसिता । णके नासिका । विचि क्विपि वा सौ भ्वादित्वादभ्वादेरिति दीर्घाभावे सुनः । कर्मणि घञि नासो घ्राणम् । उणादौ नसिवसीति णिदिकः नासिका ४० ॥

852. भ्यसि भये । भ्यसते बभ्यसे भ्यसिता । भेपृ इति चन्द्रः । भेपते ॥

853. आङःशसुङ् इच्छायाम् । आङ इति आङः पर एवायं प्रयुज्यते अन्योपसर्गोऽपि केचन इति ज्ञापनार्थम् । उदित्वान्ने आशंसते आशंस्ते आशशंसे । क्ते आशंसितम् । क्तेट इत्यः आशंसा । सन्भिक्षेत्युः आशंसुः । प्रशास्यते शास्त्रम् प्रशंसेति ॥ शंसू स्तुतावित्यस्य ॥

854. घसृङ् 855 ग्लसृङ् अदने । घसते जघसे घसिता । यङि जाघस्यते । यङ्लुपि जाघसीति जाघस्ति । ऋदित्वात् क्त्वि वेट् घस्त्वा घसित्वा । वेट्त्वात् क्तयोर्नेट् ग्रस्तः घस्तवान् । घञि घासः । उणादौ घसिहाक्भ्यां भाजिह्रौ चेति मे घामः ३३९ । रुक्मग्रीष्मेति मे निपातनात् ग्रीष्मः ३४६ ॥

855. ग्लसूङ् । ग्लसते जग्लसे ग्लसिता । उदित्त्वात् क्त्वि वेट् ग्लस्त्वा ग्लसित्वा । वेट्त्वात् क्तयोर्नेट् ग्लस्तः ग्लस्तवान् । घञि ग्लासः ॥

856. घसुङ् करणे । उदित्त्वान्ने घंसते जघंसे घंसिता । मूर्धन्यान्तोऽयमिति चन्द्रः । घंषते ॥

अथ हान्ता अष्टादश सेटश्च ॥

857. ईहि चेष्टायाम् । ईहते । गुरुनाम्यादेरिति परोक्षाया आमि ईहां चक्रे । ईहिता । घञि ईहः । स्त्रियां क्तेट इत्यः ईहा ॥

858. अहुङ् 859 प्लिहि गतौ । उदित्त्वान्ने अंहते । अनात इति पूर्वस्यात्वे ने च आनंहे । अंहिता । उणादौ अम्भिकुण्ठीति इर्नलुक् च अहिः ६१४ । तङ्कि-घङ्कीति रौ अंह्रिः ६९२ । असित्यसि अंहः पापम् अमेर्वा अमेर्भ्रंहौ चान्तावि-त्यसि [९६२.] ९६२ । अहुण् भासार्थः । अंहयति ॥

859. प्लिहि । प्लेहते पिप्लेहे प्लेहिता । उणादौ श्वनित्यानि निपातनात् प्लीहा ९०२ ॥

860. गर्हि 861 गल्हि कुत्सने । गर्हते जगर्हे गर्हिता । याङि जागर्ह्यते । मनि सुगर्ह्मा । वनि सुगर्ह्वा । स्त्रियां क्तेट इत्यः गर्हा । श्वादिभ्य इति क्तौ गर्हिः । घञि गर्हः । क्विपि रात्स इति नियमात्संयोगान्तलोपाभावे सुगर्ट् । गर्हण् विनिन्दने । युजादित्वाद्वा णिचि गर्हयति गर्हति ॥

861. गल्हि । गल्हते जगल्हे गल्हिता । यङि जागल्ह्यते । मनादिषु पूर्ववत् ॥

862. वर्हि 863 वल्हि प्राधान्ये । वर्हते ववर्हे वर्हिता । अचि वर्हः प्रधानभूतः । मुनिप्रवर्हः ॥

863 वल्हि । वल्हते ववल्हे वल्हिता । चुरादौ भासार्थौ वर्हयति वल्हयति ॥

864. वर्हि । 865 वल्हि परिभाषणहिंसाच्छादनेषु । दानेप्यन्ये । ओष्ठ्यादी एतौ पूर्वौ तु दन्त्यौष्ठ्यादी । वर्हते ववर्हे वर्हिता । घञि वर्हः । प्रज्ञादित्वात् वार्हः । फलबर्हाभ्येनीने वर्हिणो बार्हिणः ॥

865. वल्हि । वल्हते ववल्हे वल्हिता । हान्तस्येत्यधनन्या धस्य वा ढत्वे अवल्हिढ्ढ्म् अवल्हिध्वम् । उणादौ सृणीकेतीके निपातनात् वाल्मीकः ५० । पदिपठीति इः वल्हिः [६०७] । बाहुलकादीर्घे वाल्ह्यः । स्वार्थिके के वाल्हिका देशाः क्षत्रियाश्च ॥

866. वेहृङ् 867 जेहृङ् 868 वाहृङ् प्रयत्ने । वेहते विवेहे वेहिता । ऋदित्वाद्धे न ह्रस्वः अविवेहत् । वेहर्दति तु ह्रस्वोऽपि वर्तन्ति गर्भमिति वेहद्गर्भघ्नी गौः संधिहस्ताक्षादादय इति निपातनात् [ उणादौ ८८२ ] ॥

867. जेहृङ् । जेहते जिजेहे जेहिता । ऋदित्वाड्डे अजिजेहत् ॥

868. वाहृङ् । वाहते ववाहे वाहिता । ऋदित्वाड्डे अववाहत् । क्षुब्धविरिब्धेति क्ते निपातनादिडभावे वाढं भृशम् । वाहितमन्यत् ॥

869. द्राहृङ् निक्षेपे । निद्राक्षेप इत्येके । द्राहते दद्राहे द्राहिता । ऋदित्वाड्डे अदद्राहत् ॥

870 ऊहि तर्के । तर्क उत्प्रेक्षा । ऊहते । उपसर्गादस्येति वात्मनेपदे समूहति समूहते । उपसर्गादूह इति क्ङिति यि ह्रस्वे अभ्युह्यते समुह्यते । गुरुनाम्यादेरिति परोक्षाया आमि ऊहा चक्रे । सनि स्वरादेरिति द्वोर्ईहत्वे ऊजिहिषते । क्ते ऊहितम् । च्टेट इत्य· ऊहा । घञि ऊहः ॥

871. गाहौङ् विलोडने । विलोडनं परिमलनम् । गाहते जगाहे । औदित्वाद्वेट् गाढा गाहिता । वेट्त्वात् क्तयोर्नेट् गाढः गाढवान् । अचि गाहः । स्त्रियां गौरादित्वाड्ङ्याम् गाही । घञि अवगाहः ॥

872. ग्लहौङ् ग्रहणे । ग्लहते अग्लहे । औदित्वाद्वेट् ग्लाढा । अत्र हस्तड्डे इति ढे ढो लुक् पूर्वस्यातो दीर्घश्च । इटि ग्लहिता । वेट्त्वात् क्तयोर्नेट् ग्लाढ ग्लाढवान् । सृग्लह· प्रजनाक्षे इत्यलि अक्षाणा ग्लहः पणः । अक्षविषयादन्यत्र घञि ग्लाहः । अथ गृहौङ् इत्येके । गर्हते गर्हिता गर्ढा गृढ· गृढिः गृहम् गृहा ॥

873. बहुङ् 874 महुङ् वृद्धौ । उदित्वान्ने बहते बबंहे बहिता । उणादौ स्थाबङ्क्षिबहीति किल्युले नलुकि च बहुलः कृष्णपक्ष ४८६ । बन्हिवृहेर्नलुक् चेतीसि बहिः ११० । बहु· बाहुरिति तु मिबहीति वा णित्यौ बहेः ७२६ ॥

874. महुङ् । उदित्वान्ने महते ममहे महिता । महानिति तु महेर्डुहिवृहीति कर्तरि [ उणादौ ८८४ ] । महीत्यप्यस्यैव पदिपठीति इप्रत्ययेजन्तस्य वा ङ्याम् [ उणादौ ६०७ ] । बहुण् महुण् भासार्थौ । बहयति महयति ॥

अथ क्षान्ता अष्टौ सेटश्चैतेषा च पान्त्येषु पाठो युक्तो वैचित्र्यार्थ स्त्विह कृत ॥

875 दक्षि शैघ्र्ये च । शैघ्र्य शीघ्रता । चकाराद्वृद्धौ । दक्षते ददक्षे दक्षिता । अचि दक्ष· । उणादौ द्रुहिलीणे दक्षिण दक्षिणा ११४ । भुदक्षीत्यप्ये दक्षाय्यो गरुडः ३७३ ॥

876 धुक्षि 877 धिक्षि सन्दीपनक्लेशनजीवनेषु । धुक्षते दुधुक्षे धुक्षिता । सनि दुधुक्षा । क्विप्लुकि संयोगस्यादाविति को लुकि सुधुट् । क्ते अधुक्षित· ॥

877. धिक्षि । धिक्षते दिधिक्षे धिक्षिता । मनि सुधिक्ष्मा । क्विपि सुधिट् ॥

878. वृक्षि वरणे । वृक्षते ववृक्षे वृक्षिता । यङ्यृमतामिति रौ वरीवृक्ष्यते । अचि घञि वा वृक्षः । मनादिषु पूर्ववत् ॥

879. शिक्षि विद्योपादाने । शिक्षते शिशिक्षे शिक्षिता । क्ते शिक्षितः । क्तेट इत्यः शिक्षा । णके शिक्षकः । शिक्षतीति तु शकेः सनन्तस्याजिज्ञासायां रूपं जिज्ञासायां तु शकेरप्यात्मनेपदमेव विद्यासु शिक्षते ॥

880. भिक्षि याच्ञायाम् । भिक्षते गां राजानम् । बिभिक्षे भिक्षिता । सन्भिक्षेत्युः भिक्षणशीलो भिक्षुः । वृङ्भिक्षीति टाके भिक्षाकः भिक्षाकी । क्ते भिक्षितः । क्तेट इत्यः भिक्षा । घञि भिक्षः । केचिदलाभे लाभे चेत्याहुः ॥

881. दीक्षि मौण्ड्येज्योपनयननियमव्रतादेशेषु । मौण्ड्यं वपनम् । इज्या यजनम् । उपनयनं मौञ्जीबन्धः । नियमः संयमः । व्रतादेशः संस्कारादेशः । दीक्षते दिदीक्षे दीक्षिता । इङ्गित इत्यनस्य न णिङ्येति प्रतिषेधात्क्तिनि दीक्षिता । क्ते दीक्षितः । क्तेट इत्यः दीक्षा । केचित्तु दीक्षि मौण्ड्ये ज्योपनयनादौ चेति वृद्धपाठं भिन्दन्ति । [ ज्य ]यते जीतः ॥

882. ईक्षि दर्शने । ईक्षते । गुरुनाम्यादेरिति परोक्षाया आमि ईक्षां चक्रे । यद्वीक्ष्ये राधीक्षौ इति चतुर्थ्याम् मैत्रायेक्षते ईक्षितव्यं परस्त्रीभ्यः । अचि वीक्षः । शीलिकामीत्यणोपवादे णे प्रेक्षा । क्ते प्रेक्षितः । क्तेट इत्यः प्रेक्षा । घ्यणि उत्प्रेक्ष्यः । करणेऽनटि ईक्षणम् ॥

अथोभयपदिनो भ्लक्षीपर्यन्ता वर्णक्रमेण ॥

883. श्रिग् सेवायाम् । गित्वात्फलवति कर्तरि ईगित इत्यात्मनेपदेऽन्यत्र च शेषात्परस्मायिति परस्मैपदम् । एवं सर्वत्र । श्रयते श्रयति शिश्रिये शिश्राय । णिश्रीति ङे अशिश्रियत् । श्रयिता श्रयितुम् । ऋवर्णश्र्यूर्णुगः कित इतीड़भावे श्रित्वा श्रितः श्रितवान् । सनि इवृधेति वेटि शिश्रीषति शिश्रयिषति । जीणृदृक्षीतीनि विश्रयणशीलो विश्रयी । दिद्युद्दद्दिति क्विपि निपातनात् श्रीः । भूश्यद इति सोपसर्गादलि प्रश्रयः । अनुपसर्गात्तु घञि श्रायः । श्रय इति तु बाहुलकादलि । उदः श्रेरिति वालि उच्छ्रयः । पक्षे घञि उच्छ्रायः । उणादौ कावावीति णौ श्रेणिः ६३४ । अभ्रिरिति त्वभ्रौतेस्लाङ्किवङ्कीति रौ ६९२ । दमश्रुरित्यपि शेतेः दमनः श्रीडो डिदिति रै ८१० । शिर इति च शृणातेर्मिथिरञ्ज्युषीति किल्यासि ९७१ ॥

884. णींग् प्रापणे । अजां नयते नयति वा ग्रामम् प्रापयतीत्यर्थः । णोपदेश-

स्वाद्दुरुपसर्गान्तर इति णत्वे प्रणयते प्रणयति। पूजाचार्यकेत्यात्मनेपदे नयते विद्वान् स्याद्वादे बटुमुपनयते। कर्तृस्थेत्यात्मनेपदे क्रोधं विनयते। क्ये अजा नीयते ग्रामम्। निन्ये निनाय। अनुस्वारेत्त्वाच्चेट् नेता नेतुम्। णिगि गतिबोधेत्यत्र नीवर्जेनादणिक्कर्तुः कर्मत्वाभावे नाययति भारं ग्रामं चैत्रेण। प्रणाय्यो निष्कामासंमते इति घ्यणि निपातनात् प्रणाय्यः। धाय्यापाय्येति निपातनात् सांनाय्यं हविः। परिचाय्योपचाय्येति निपातनात् आनाय्यो दक्षिणाग्निः। ये त्वग्नेरन्यत्राप्यनित्यविशेषमिच्छन्ति तन्मते आनाय्यो गोधुक्। जिविपून्य इति क्यपि विनीयः कल्कः। वा ज्वलादीति णे नायः। पक्षेऽचि नयः। ग्रामाग्रान्नियः इति णत्वे क्विपि ग्रामणीः अग्रणीः। असरूपोपवादे इत्यणि ग्रामनाय इत्यपि। नीदाविति करणे त्रटि नेत्रम्। नियश्चानुपसर्गाद्वेति वा घञि नायः। पक्षेऽलि नयः। थोदः उन्नायः उन्नयः। अवात् अवनायः। परेर्द्यूते परिणायेन शारीन् हन्ति। पुंनाम्नि घे नीयतेऽनेनेति नयः। आनायो जालमिति घञि आनायो मृगाणाम्। उणादौ नीनूरमीति किति थे नीथं जलम्। सुनीथो नाम राजा २२७। नियो वेति वा किति पे नीपः कदम्बः। कित्त्वाभावे नेपः पुरोधाः। नेप जलं यानं च ३०२। ऋज्यजीति किति रे नीरम् ३८८। नीसेति मौ नेमिश्चक्रधारा ६८७। नियो डिदिति ऋः वा नरौ ८६४। हुयामेति तृः उन्नेता ऋत्विक् ८६३। नियः षादिः नेष्टा ऋत्विक् ८६४।

अथ ऋदन्ताश्चत्वारोऽनिटश्च॥

885. हृंग् हरणे। हरते हरति जह्रे जहार। विनिमेयेति कर्मणो वाकर्मत्वे शेषे इति षष्ठ्याम् शतस्य व्यवहरति शतं व्यवहरति। अनुस्वारेत्त्वाच्चेट् हर्ता हर्तुम्। हनृतः स्यस्येतीटि हरिष्यति। हगो गतताच्छील्ये इत्यात्मनेपदे पैतृकमश्वा अनुहरन्ते। हरतिरयं सकर्मकश्चाकर्मकश्च तथाभ्यवहारार्थश्चेतरार्थश्च दृश्यते। यदाकर्मकश्चाभ्यवहारार्थश्च भवति तदा णौ गतिबोधेत्यणिक्कर्तुर्नित्यं प्राप्तं कर्मत्वं हृक्रोर्न वेति विकल्प्यते। हरति मैत्रः हारयति मैत्रं मैत्रेण वा चैत्रः। अभ्यवहरति मैत्रः अभ्यवहारयति मैत्रं मैत्रेण वा चैत्रः। यदा सकर्मको भवति तदा चौर्यार्थत्वादनभ्यवहारार्थश्च तदा कर्मत्वमप्राप्तं हृक्रोर्न वेति विभाष्यते हरति द्रव्यं चौरः हारयति द्रव्यं चौरं चौरेण वा चैत्रः। यदा तु सकर्मकोऽपि देशान्तरप्रापणार्थस्तदा गत्यर्थत्वाद्गतिबोधेति नित्यं प्राप्तं कर्मत्वं विभाष्यते हरति भारं चैत्रः हारयति भारं चैत्रं चैत्रेण वा मैत्रः देशान्तरं प्रापयतीत्यर्थः। महादिस्त्वाण्णिनि व्याहारी संव्याहारी। अवदसासंसोरिति णे अवहारो ग्राहः। हगो वयोनुद्यमे इत्यनि अस्थिहरः श्वा। मनोहरः। उद्यमे त्वणेव भारहारः। आङः

-शीले इत्यचि पुष्पाहरो विद्याधरः। दृतिनाथात्पशाविः दृतिहरिः नाथहरिः पशुः। न्यायावायेति घापवादे घञि संहारः अवहारः। उणादौ कुशिकहृदिकेतीके निपातनात् हृदिको यादवः ४६। द्रुहृवृहीतीणे हरिणः १९४। हृश्येतीते हरितः २१०। गयहृदयेत्यये निपातनात् हृदयम् ३७०। हिरण्येत्यन्ये निपातनात् हिरण्यम् ३८०। स्थरेभ्यं इः हरिः ६०६। नीवीमहभ्यो डित् महिः कूपः ६१६। कृहिल्येणौ हरेणुर्गन्धद्रव्यम् ७७२। हसृरुहीतीति हरिद्दिक् ८८७। हृजनिभ्यामिमन् हरिमा मृत्युः ९१७। सृहभ्रितीमनि हरीमा वायुः ९१८॥

886. भृंग् भरणे। भरते भरति। अनुस्वारेत्त्वान्नेट् भर्ता भर्तुम्। तीर्थस्य भर्ता तीर्थभर्ता कर्मजा तृचा चेति प्रतिषिद्धोपि याजकादित्वात्षष्ठीसमासः। हनृतः स्यस्येतीटि भरिष्यते भरिष्यति। सनि इवृधेति वेटि बुभूर्षति बिभरिषति। भृतः भृतवान्। घञि भारः। भर इति तु भृणातेरलि। भृगोसंज्ञायामिति क्यपि भृत्यः। संज्ञायां तु ऋवर्णेति घ्यणि भार्यो नाम क्षत्रियः। भार्या वधूः। कुक्ष्यात्मोदराद्भृगः खिः कुक्षिंभरिः आत्मंभरिः उदरंभरिः। भृवृजीति खे विश्वंभरा भूः। क्विपि विदभृत्। अजातेः शीले इति णिनि मालभारी। अत्र मालेषीके इति पूर्वपदस्य ह्रस्वः। एवमुत्पलमालभारी। उणादौ दृभृभ्रित्यते भरतः २०७। अवभ्रिति किति ये अवभृथो यज्ञान्तः २२९। कृवृभ्रिति किति शे भृशम् ५२८। भृमृत्रित्युः भरतेशः समुद्रश्च ७१६। कृतृशृभृभ्रादिभ्यो रो लश्चेति णिदुः भालुरिन्द्रः ७२७। ग्नि-चेति किल्वौ द्वित्वे च बभ्रुर्नकुलः ७३२। भृगुरिति तु भ्रस्जेः स्पृशिभ्रस्जेः स्तुक् चेति किल्यौ ७३१। भृपणिभ्यामिज् भुरवणौ च भुरिक् भुरिजौ बाहुः ८७५। विप्यवीत्यटे भरट उडुपः १४२। शासिशंसीति तृः भर्ता पतिः ८७५। डुडु-भृंग्क् पोषणे च। बिभर्ति॥

887. धृंग् धारणे। धरते धरति। अनुस्वारेत्त्वान्नेट् धर्ता धर्तुम्। आयुधादिभ्य इत्यचि वज्रधरः चक्रधरः। दण्डादेस्तु कर्मणोणित्यणि दण्डधारः सूत्रधारः। धृंङ् अविध्वंसने। धरते। धृङ्त् स्थाने। ध्रियते। चुरादेराकृतिगणत्वात् धारयति॥

888. डुकृंग् करणे। कृगतनादेरुः कुरुते करोति। फलवत्कर्तर्यपि परानोः कृग इति परस्मैपदे पराकरोति अनुकरोति। तनादिषु पाठमकृत्वास्या पाठमन्यो चेति मिथो लुग्विकल्पाभावार्थः। तेन अकृत अकृथाः इत्यत्र धुट्ह्रस्वादिति नित्यमेव सिज्लुक् भवति। शायथेश। तेन करते करति इत्यत्र कर्तर्यनद्भ्य इति शवपि भवति। चक्रे चकार। अनुस्वारेत्त्वान्नेट् कर्ता कर्तुम्। द्विरयाचिमकृ

कृत्रिमम् । गन्धनेत्यात्मनेपदे उत्कुरुते । अधेः प्रसहने अधिकुरुते । वेः कृग इत्यात्मनेपदे क्रोष्टा विकुरुते स्वरान् विकुर्वते सैन्धवाः । णौ मिथ्याकृग इत्यात्मनेपदे पद मिथ्या कारयते स्वरादिदोषदुष्टमसकृदुच्चारयतीत्यर्थः । कृगो यि चेत्युलोपे कुर्यात् कुर्वः कुर्मः । एषु कुरुच्छुर इति प्रतिषेधात् भ्वादेरिति दीर्घो न भवति । हनृत इतीटि करिष्यते करिष्यति । स्क्रसृभृवृस्तुद्रुस्रुश्रुवो ति इतीटि संचस्करिव संचस्करिम । अत्र सपरेरिति स्सट् स्कृच्छृत इति गुणश्च । उपाद्भूषेति स्सटि एधोदकस्योपस्कुरुते । अत्र कृगः प्रतियत्ने इति कर्मणो वा कर्मत्वे शेषे इति षष्ठी । हृक्रोर्न वेत्याणिकर्तुर्णौ वा कर्मत्वे करोति कटं चैत्रः कारयति कटं चैत्रं चैत्रेण वा मैत्रः । कृगो न वेति वा गतिसंज्ञायां तिरसो वेति वा रस्य सत्वे तिरस्कृत्य तिरःकृत्य । पक्षे गतित्वाभावे गतिक्विति समासाभावाद्यबभावे तिरःकृत्वा । कर्मणोणित्याणि पयस्कारः । अत्रातः कृकमीति रस्य सत्वम् । सत्यागदेति मे सत्यकारः । कृवृषीति वा क्यपि कृत्यम् । पक्षे घ्यणि कार्यम् । शकृत्स्तम्बादिति इः शकृत्करिर्वत्सः स्तम्बकरिर्व्रीहिः । किंयत्तद्बहोरः किंकरः किंकरा जातिरिदानीम् । किंकरीति तु हेतुतच्छीलेति टे रूपम् । यथा विद्या यशस्करी । सङ्ख्याहर्दिवेति टे सङ्ख्याकरः एककर इत्यादि । भृतौ कर्मणः कर्मकरः कर्मकरी । क्षेमप्रियमद्रभद्रात्खाण् क्षेमंकरः क्षेमकारः । मेघर्तिभयाभयात्खः मेघंकरः । कृगः खनट् करणे नग्नंकरणं द्यूतम् । कृगः सुपुण्यपापेति भूते क्विपि सुकृत् । सहराजेति भूते क्वनिपि सहकृत्वा राजकृत्वा । भ्राज्यलमितीष्णौ अलंकरणशीलो अलंकरिष्णुः निराकरिष्णुः । कृगः श च वा क्रिया । क्यपि कृत्या । पक्षे क्तौ कृतिः । भिदादिनिपातनादङि कारा गुप्तिः । कारणमित्यनटि निपातनात् करोतीति कारणम् । च्व्यर्थे कर्त्राप्येति खलि सुकटंकराणि वीरणानि । अन्यथैवमिति खणि अन्यथाकारं भुङ्क्ते । यथातथादीर्ष्योत्तरे यथाकारमस्तु किं तथानेन । शापे व्याप्यात् चौरंकारमाक्रोशति । स्वाद्वर्थाददीर्घात् स्वादुंकारं भुङ्क्ते । कृगोव्ययेनानिष्टोक्तौ क्त्वाणमौ उच्चैःकृत्य उच्चैःकृत्वा उच्चैःकारं कथयति ब्राह्मण कन्या ते गर्भिणी । तिर्यचापवर्गे तिर्यक्कृत्य तिर्यक्कृत्वा तिर्यक्कारं गतः समाप्येत्यर्थः । स्वाङ्गतस्च्व्यर्थनानाविनाधार्थेन भुवश्च मुखतः कृत्य मुखतः कृत्वा मुखतः कारं गतः । एषु तृतीयोक्तं वेति वा समासः । सनि क्ते चिकीर्षितम् । प्रज्ञाद्यणि चैकीर्षितम् । कृभ्वस्तिभ्यामिति च्वौ घटीकरोति मृदम् । अरुर्मन इति सो लुकि अरुस्करोति । तीयशम्बेति डाचि द्वितीयाकरोति क्षेत्रम् । सङ्ख्यादेर्गुणात् द्विगुणाकरोति क्षेत्रम् । अव्यक्तानुकरणेति डाचि डाच्यादाविति पूर्वस्य तो लुकि पटपटाकरोति । उणादौ कृयापाजीत्यु-

णि कारुः शिल्पी १ । कृगो श्वेति वा किति के कृकः शिरोग्रीवम् । कर्कः श्वेताश्वः २३ । करकः करकेति तु दृकॄन्नित्यके रूपम् २७ । कृगो द्वे चेति किदः चक्रम् ७ । कृकडीत्यम्बे करम्बो दध्योदनो दधिसक्तवश्च ३२१ । कृकलेरम्भः करम्भो दधिसक्तवः ३३६ । करीर इति तु किरतेः कॄशॄभितीरे ४१८ । ऋकृञ्नित्याले करालमुखम् ४७५ । पनिकृलूभ्यो णित् कारालं लेपद्रव्यम् ४७९ । कृधूतनीति किति सरे कृसरस्तिलौदनः ४४० । कृकुरिभ्यां पासः कर्पासः ५८३ । कृशॄकुटीति वा णिदिः कारिः शिल्पी । करिर्हस्ती विष्णुश्च ६११ । ऋदस्वित्यणौ करणिः सादृश्यम् ६३८ । आङः कृह्रिति सनोणौ आचिकीर्षणिर्व्यवसायः ६४३ । कृभूभ्यां किदिति मौ कृमिः ६९० । क्रिमिरिति तु क्रमेः क्रामितमीति इमत्यये उपान्त्येत्वे च ६९३ । जृशॄस्त्रिति डिति वौ कृविः रुद्रो राजा च ७०५ । कृहूल्येणौ करेणुर्हस्ती ७७२ । कृलाभ्यां किदित्यतौ क्रतुः ७८० । मनि कर्म ९११ । करण्ड इति तु जृकॄन्नित्यण्डे किरतेः १७३ । एवं किरोङ्को रो लश्च या करङ्कः कलङ्कः ६२ । कृभ कत उरु चेत्युः कुरुः ७३४ । कुरोरपत्यमिति दुनादीति ञ्यः [ कौरव्यः ] । कुरोर्वेति स्त्रियां तद्धुप्युतोऽप्राणिनश्चेत्यूङि कुरूः । कृंगट् हिंसायाम् । कृणुते कृणोति ॥

अथ कान्तः ॥

889 क्लिकी अव्यक्ते शब्दे । ईदित्वात्फलवत्कर्तरि ईगित इत्यात्मनेपदम् । अफलवति तु शेषात्परस्मायिति परस्मैपदम् । क्लिकते क्लिकति चिक्लिके चिक्लिक क्लिक्लिता । क्ते क्लिक्लितम् । क्लेट इत्यः क्लिका ॥

अथ घान्ताश्चयलवाद्या सेटाघन्त्योनिट् ॥

890. अङ्घुग् गतौ च । चकारादव्यक्ते शब्दे । गतिपूर्वयोरयं परस्मैपदिषु पठितः स चास्य पाठो गतौ फलवत्कर्तर्यपि परस्मैपदार्थः । अङ्घते अङ्घति । अङ्घोनर्चायामिति नस्य लुकि अघ्यते । अनात इति पूर्वस्यात्वे मे च आनङ्घे आनङ्घ आङ्घिता आङ्घितुम् । उदित्वात् क्त्वि वेट् अक्त्वा आङ्घित्वा । अत्र क्त्वेति क्रियाभावात्तस्य लुग्नास्ति । वेट्त्वात् क्तयोर्नेट् अक्तः अक्तवान् । अयमङ्घुग् गतावित्येके । अघते अघति आघे आघ अघिता अघितुम् । उदित्वात् क्त्वि वेट् अक्त्वा अघित्वा । अङ्घुग् गतावित्यन्ये । उदित्वान्ते अङ्घते अङ्घति । क्ये अङ्घ्यते । क्ते आङ्घितः । अङ्घुं गतौ च । अङ्घति । अनर्चायां नस्य लुकि अघ्यते । अर्चायां नलोपाभावे अङ्घ्यते ॥

891. दुयाचृग् याच्ञायाम् । याचते याचति ययाचे ययाच । क्ते याचितः ।

ऋदित्त्वाङ्गे न ह्रस्वः अययाचत्। ङ्वित्त्वाच्चिमक् याचित्रिमम्। ङ्वियमित्येके। तन्मतेयौ याचथुः। क्ते सेट्त्वात् घ्यणि कत्वाभावे याच्यम्। मृगयेच्छेति निपातनान्ते याञ्चा॥

892. डुपचींष् पाके। पचते पचति पेचे पपाच। यङि पापच्यते। यङ्लुपि पापचीति पापक्ति। अनुस्वारेत्त्वान्नेट् पक्ता पक्तुम्। ईदित्त्वात् क्तयोरिट्प्रतिषेधः ...ीति क्तयोस्तस्य वत्वे पक्वः पक्ववान्। क्तेऽनिट इति चस्य कत्वे घ्यणि पाक्यः। व्याप्ये घुरकेलिमकृष्टपच्यम् कृष्टे स्वयमेव पच्यन्ते कृष्टपच्या व्रीहयः। उणादौ विहाविशेति केलिमे पचेलिमा माषाः ३६४। लिहादित्वादणोपवादेऽचि श्वपचः। न्यङ्क्वादिनिपातनादणि कत्वे च श्वपाकः मांसपाकः। न्यङ्क्वादित्वादेव कर्मकर्तर्यचि वृद्धावुदन्तत्वे च दूरेपाकुः फलेपाकुः। मांसस्यानडित्यलुकि मांसपचनम् मांसपचनम् मांस्पाकः मांसपाकः। परिमाणार्थेति खे प्रस्थंपचः मितंपचः नखंपचा यवागूः। उदः पचीतीष्णौ उत्पचनशील उत्पचिष्णुः। ङ्वित्त्वाच्चिमकि पाकेन निर्वृत्तं पक्त्रिमम्। पितोऽङ् पच्यतेऽसाविति पचा। स्त्रियां भावे तु पापेति क्तिरेव पक्तिः। उणादौ स्थविरेति निपातनात् किरीरे पिठिरम् ४१७॥

अथ जान्ताश्चत्वारस्तत्राद्यौ सेटावन्त्यौ त्वनिटौ॥

893. राजृग् 894 टुभ्राजि दीप्तौ। राजते राजति। जृभ्रमेति वा स्वरस्यैत्वे द्वित्वाभावे च रेजे रराजे रेजुः रराजुः। राजिता। ऋदित्त्वाङ्गे अरराजत्। क्विपि सम्राट् विराट्। उणादौ शीभीत्यानके राजानकः ७१। धायाजीत्यन्ये राजन्यः ३७९। त्रटि राष्ट्रम् ४४६। उक्षितक्षीत्यनि राजा ९००॥

894. टुभ्राजि। इदित्त्वादात्मनेपदे भ्राजते। जृभ्रमेति वा स्वरस्यैत्वे द्वित्वाभावे च भ्रेजे बभ्राजे। भ्राजिता। णौ ङे भ्राजभासेति वा ह्रस्वे अबिभ्रजत् अबभ्राजत्। ट्वित्त्वादथुः भ्राजथुः। ट्वित्त्वमेके नेच्छन्ति। भ्राजेरात्मनेपदिनोपि पुनरिह पाठो राजृसाहचर्यप्रदर्शनार्थः। तेन यजसृजेत्यत्रास्यैव ग्रहणात्षत्वे यङ्लुपि बाभ्राष्टि। पूर्वस्य तु धातोर्गत्वे बाभ्राक्ति। द्वितीयं तेनास्य भ्राजथुः। पूर्वस्य तु भ्राज इति रूपम्। यद्येव षत्वमेव विकल्प्यतां किं पुनः पाठेन। सत्यम्। अस्यात्मनेपदाव्यभिचारोपदर्शनद्वारान्येषां यथादर्शनमात्मनेपदानित्यत्वज्ञापनार्थः पाठः पुनः। तेन लभते लभति सेवते सेवति। श्रोतारमुपलभति न प्रशंसितारम्।

स्वाधीने विभवेप्यहो नरपतिं सेवन्ति किं मानिनः॥

इत्यादयः प्रयोगाः साधव इति॥

895. भजीं सेवायाम्। भजते भजति। तॄत्रपेत्येत्वे द्वित्वाभावे च भेजे भेजुः। यङि बाभज्यते बाभजीति बाभक्ति। अनुस्वारेत्त्वान्नेट् भक्ता भक्तुम्। श्रिपेति वा कर्तरि क्ते विभक्ता भ्रातरो रिक्थम्। पक्षे कर्मणि क्ते विभक्तं धनं तैः। भावे विभक्तं तैः। शकितकीति ये भज्यम्। बहुलमिति घ्यणि भाग्यम्। भजो विण् अर्धभाक्। युजभुजेति घिनणि भजनशीलो भागी। घञि भागः। गोचरेति निपातनात्करणाधारयोर्घअपवादे घे भगः। क्तौ भक्तिः॥

896. रञ्जीं रागे। अकट्घिनोश्चेति नस्य लुकि रजते रजति। कुषिरञ्जोरिति कर्मकर्तरि वा श्ये परस्मैपदे च रजति वस्त्रं रजकः रज्यति वस्त्रं स्वयमेव। पक्षे एकधाताविति क्ये आत्मनेपदे च रज्यते वस्त्रं स्वयमेव। संयोगान्तत्वादविल्परोक्षाया अपि इन्ध्यसंयोगादिति कित्त्वाभावे नलोपाभावात् ररञ्जे ररञ्ज। अनुस्वारेत्त्वान्नेट् रङ्क्ता रङ्क्तुम्। णौ मृगरमणे इति नलुकि कगेवन्वीति ह्रस्वे च रजयति मृगं व्याधः। मृगरमणादन्यत्र नलोपाभावे रञ्जयति नटः। केचित्त्वन्यत्रापि नलुकमिच्छन्ति राजर्षिकल्पो रजयति मनुष्यान्। नृत्खनित्यकटि रजकः शिल्पी। युजभुजेति घिनणि रञ्जनशीलो रागी। घञि भावकरणे इति नलुकि रञ्जनं रागः। व्यञ्जनाद्घञिति करणे घञि रागः। आधारे घञि रङ्गो नृत्तस्थानम्। ऋवर्णेति घ्यणि रङ्ग्यः। उणादौ इषिरञ्जीति कित्यते रजतम् २०८। तुदादिवृजीति कित्यने रजनं हरिद्रा। महारजनं कुसुम्भम् २७३। गौरादित्वाद् ङ्याम् रजनी। रञ्जेः किदित्यनी रजनिः रात्रिः ६८१। मिथिरञ्जुषीति कित्यसि रजः ९७१। रञ्जीच् रागे। रज्यते रज्यति॥

अथ टान्तः सेट् च॥

897. रेटृग् परिभाषणयाचनयोः। रेटते रेटति रिरेटे रिरेट रेटिता रेटितुम्। क्ते रेटितम्। ऋदित्त्वाङ्के न ह्रस्वः अरिरेटत्॥

अथ णान्तः सेट्॥

898. वेणृग् गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु। वादित्रस्य वाद्यभाण्डस्य वादनाय ग्रहणं वादित्रग्रहणम्। वेणते वेणति विवेणे विवेण वेणिता वेणितुम्। ऋदित्त्वाङ्के न ह्रस्वः अविवेणत्। अचि वेणः। णके स्त्रियाम् वेणिका। उणादौ इणुर्विशीति णे वेण्णा नाम नदी १८२। वीणेति तु पूर्वोक्तेति किति णे वेनेः १८३। वेणिरित्यपि काचानीति णावस्यैव ६३४॥

अथ तान्तः सेट्॥

899. चतेंग् याचने। चतते चतति चेते चचात चतिता चतितुम्। चतिरप्यत्र-

नादेरिति वा वृद्धेर्न भिजामिति प्रतिषेधे अचतीत् । क्ते चतितम् । उणादौ कृगृभिति वरटि चत्वरम् ४४१ । चादयसीत्युरे चतुरः ४२३ । चतेरर् चत्वारः ९४८ ।

अथ थान्तास्त्रयः सेटश्च ॥

900 प्रोथृग् पर्याप्तौ । पर्याप्तिः पूर्णता। प्रोथते प्रोथति पुप्रोथे पुप्रोथ प्रोथिता प्रोथितुम् । ऋदित्त्वाङ्डे अपुप्रोथत् । अचि प्रोथोऽश्वघोणाधः प्रियश्च युवा । प्रियं प्रोथमनुव्रजेत् ॥

901. मिथृग् मेधाहिंसयोः । मेथते मेथति मिमिथे मिमेथ मेथिता मेथितुम् । क्ते मिथितम् । ऋदित्त्वाङ्डे न ह्रस्वः अमिमेथत् । क्ये मिथ्यते । लिहाद्यचि मेथः । गौरादित्वाड् ङ्याम् मेथी ।

मेथीबद्धोऽपि हि भ्राम्यन् घासग्रासं करोति गौः ॥

उणादौ किलिपिलीति इः मेथिः खलमध्यस्थूणा ६०८ ॥

902. मेथृग् सङ्गमे च । चकारान्मेधाहिंसयोः । मेथते मेथति मिमेथे मिमेथ मेथिता मेथितुम् । क्ते मेथितम् । ऋदित्त्वाङ्डे न ह्रस्वः अमिमेथत् । क्ये मेथ्यते । अचि मेथः । गौरादित्वाड् ङ्याम् मेथी ॥

अथ दान्ताः षट् सेटश्च ॥

903. चदेग् याचने । चदते चदति चेदे चचाद चदिता चदितुम् । क्ते चदितम् । एदित्त्वाद्व्यञ्जनादेरिति वा वृद्धेर्न भिजामिति प्रतिषेधे अचदीत् ॥

904. ऋबुन्दृग् निशामने । निशामनमालोचनम् । बुन्दते बुन्दति । क्ये बुद्यते । बुबुन्दे बुबुन्द बुन्दिता बुन्दितुम् । ऋदित्त्वाङ्डि अबुदत् अबुन्दीत् । ऊदित्त्वात् क्त्वि वेट् बुत्त्वा बुन्दित्वा । वेट्त्वात् क्तयोर्नेट् बुन्नः बुन्नवान् । धान्तोऽयमिति नन्दी बुन्धते बुन्धति बुध्यते अबुधत् अबुन्धीत् बुबुन्धे बुबुन्ध बुन्धिता बुन्धितुम् बुद्ध्वा बुन्धित्वा बुद्धः बुद्धवान् । अयमूदेदित्येके ॥

905 णिदृग् 906 णेदृग् कुत्सासंनिकर्षयोः । पाठे इति नत्वे नेदते नेदति । णोपदेशत्वाददुरुपसर्गेति णत्वे प्रणेदते प्रणेदति । निद्यते निनिदे निनेद नेदिता नेदितुम् । ऋदित्त्वाङ्डे अनिनेदत् ॥

906. णेदृग् । पाठे इति नत्वे नेदते नेदति नेद्यते । णोपदेशत्वाददुरुपसर्गेति णत्वे प्रणेदते प्रणेदति । निनेदे निनेद नेदिता । क्ते नेदितम् । ऋदित्त्वाङ्डे अनिनेदत् ॥

907 मिदृग् 908 मेदृग् मेधाहिंसयोः । मेदते मेदति मिद्यते मिमिदे मिमेद मेदिता । क्ते मिदितः । ऋदित्त्वाङ्डे अमिमेदत् ॥

908. मेदृग् । मेदते मेदति मेद्यते मिमेदे मिमेद मेदिता । क्ते मेदितः । ऋदित्वाङ्ङे अमिमेदत् । ञिमिदाङ् स्नेहने । मेदते । ञिमिदाम् स्नेहने । मेद्यति । मिदुण् स्नेहने । मिन्दयति ॥

अथ धान्ताश्चत्वारः सेटश्च ॥

909. मेधृग् संगमे च । चकारान्मेधाहिंसयोः । मेधते मेधति मेध्यते मिमेधे मिमेध मेधिता । क्ते मेधितः । ऋदित्वाङ्ङे अमिमेधत् । क्टेट इत्यः मेधा । ध्यणि मेध्यम् । कर्मणोणित्याणि अश्वमेधः । अजातेरिति णिनि गृहमेधी । उणादौ पदिपठीति इः मेधिः [ ६०७ ] ॥

910. शृधुग् 911. मृधृग् उन्दे । उन्दः क्लेदनम् । शृधू तालव्यादिः । शर्धते शर्धति शशृधे शशर्ध शर्धिता । ऊदित्वात् क्त्वि वेट् शृद्ध्वा शर्धित्वा । वेट्त्वात् क्तयोर्नेट् शृद्धः शृद्धवान् । शृधुङ् शब्दकुत्सायाम् । शर्धते ॥

911. मृधृग् । मर्धते मर्धति ममृधे ममर्ध मर्धिता । ऊदित्वात् क्त्वि वेट् मृद्ध्वा मर्धित्वा । वेट्त्वान् क्तयोर्नेट् मृद्धः मृद्धवान् । नाम्युपान्त्येति के मृधः एणः ॥

912. बुधृग बोधने । बोधते बोधति बुबुधे बुबोध बोधिता । ऋदित्वाङ्ङि अबुधत् अबोधीत् । आत्मनेपदे स्वडोसस्ते अबोधिष्ट । क्ते बुधितः । नायमृदिदित्येके । बुध अवगमने ज्वलादिः । बोधति । वा ज्वलादीति णे बोधः । नाम्युपान्त्येति के बुधः । बुधिच् ज्ञाने । बुध्यते । अविवक्षितकर्मत्वेन गत्यर्थेति कर्तरि क्ते बुद्धः ॥

अथ नान्तास्त्रयः सेटश्च ॥

913. खनूग् अवदारणे । खनते खनति । गमहनेत्यलुकि चखे चख्नुः । खनिता । ऊदित्वात् क्त्वि वेट् खात्वा । अत्राः खनीत्यात्वम् । खनित्वा । ये न वेति वात्वे खायते खन्यते । यङि चाखायते चङ्खन्यते । यङ्लुपि चङ्खनीति चङ्खन्ति । वेट्त्वात् क्तयोर्नेट् खातः खातवान् । खेयेति यपि निपातनात् खेयम् । नृत्खनित्यकटि खनकः खनकी । क्वचिदिति डे खन्यते रम् परिखाता परिखा । लूधूस्वितीत्रे खनन्ति तेन खनित्रम् । खनो डडरेकेकवकघं च आखः आखरः आखनिकः आखनिकवकः आखनः आखानः । उणादौ मृमृखनीति किति त्रटि स्वार्थे चौरकृतं खित्रम् ४५९ । कृशृकुटीति वा णिदिः खानिः खनिश्चाकरः ६१९ । पराभ्यामिति डित्यौ आखुः ७४२ ॥

914. दानी अवखण्डने । आर्जवे शान्दानिति सनि पूर्वस्येतो दीर्घत्वं च दीदांसते दीदांमानि । अर्थान्तरे नु सन्नाभावे प्रत्ययान्तराण्यपि भवन्ति ॥

915. शानी तेजने । निशाने शान्दानिति सनि पूर्वस्येतो दीर्घत्वे च शीशांसते शीशांसति शस्त्रम् । अर्थान्तरे तु सनोऽभावे प्रत्ययान्तराण्यपि ॥

अथ पान्तोऽनिट् च ॥

916. शपीं आक्रोशे । आक्रोशो विरुद्धानुध्यानम् । शपते शपति । अनेकार्थत्वादुपलम्भनेऽपि शप उपलम्भने इत्यात्मनेपदे चैत्राय शपते । अत्र श्लाघह्नुस्थेति चतुर्थी । शेपे शशाप रिपुम् । यङि शाशप्यते । यङ्लुपि शाशपीति शाशप्ति । अनुस्वारेत्त्वादनिट् शप्ता शप्तुम् । शकितकीति ध्यणपवादे ये शप्यः । घञि शापः । उणादौ भृशीशपीत्यये शपथः २३२। शाशपीति दे शब्दः २३७ । शबल इति तु शमेर्व च वेत्यले शाम्यतेः ४७० । शपिंच् आक्रोशे । शप्यते शप्यति ॥

अथ यान्तौ सेटौ च ॥

917. चायृग् पूजानिशामनयोः । चायते चायति चचाये चचाय । ऋदित्वाङ्के न ह्रस्वः अचचायत् । चायिता । चायः की यङि चेकीयते । अपाच्चायश्चिः क्तौ अपचितिः । अपचित इति क्ते वा निपातनात् अपचितः अपचायितः । उणादौ चायः केक चेत्यये केकयो राजा ३६६ । चायः के चेति तुनि केतुः ७७८ । चायेर्नो ह्रस्वश्च चेत्यसि चणश्चाणश्चानम् । बाहुलकाण्णत्वम् । णत्वं नेच्छन्त्येके ९६७ ॥

918. व्ययी गतौ । व्ययते व्ययति वव्यये वव्याय । व्यञ्जनादेरिति वा वृद्धेर्न श्विजागिति प्रतिषेधात् अव्ययीत् । व्ययिता । णौ व्याययति । अचि व्ययः । व्ययण् वित्तसमुत्सर्गे । अदन्तः व्यययति ॥

अथ लान्तः सेट् च ॥

919. अली भूपणपर्याप्तिवारणेषु । अलते अलति आले आल । सनि अलिलिषते अलिलिषति । अचि अलम् । निषेधेलंखल्विति निर्देशान्मान्तत्वं निपात्यतेऽव्ययश्चायम् । भूषादरेति भूषायां गतित्वे अलंकृत्य कन्यामुपयच्छते । अत्र गतिक्विति समासे क्त्वो यप् । पर्याप्तौ अलं मल्लो मल्लाय । अत्र शक्तार्थेति चतुर्थी । वारणे अलं कृत्वा । अत्र निषेधेलमिति क्त्वा । उणादौ निष्कतुरुष्केति के निपातनात् अलर्कः उन्मत्तः श्वा २६ । दृकृन्नित्यके अलकं चूर्णकुन्तलः । अलका पुरी २७ । क्रीकल्यलीतीके अलिकं ललाटम् ३८ । स्यमिकषीतीके अलीकं मिथ्या । अलीका पण्यस्त्री । व्यलीकमपराधः । व्यलीका लज्जा ४६ । कल्यलीतीन्दकि अलिन्दो द्वारामस्थूणा २४६ । शल्यलेरुचात इति वे उल्वं कललम् ३११ । कृगृकुटीति त्वा णिदिः आलिः सखी । अलिर्भ्रमरः ६१९ । अलक इति स्वरकशब्दस्य लत्वे । परस्मैपदिनमेनमन्ये मन्यन्ते ॥

अथ वान्तौ सेटौ च ॥

920. धावूग् गतिशुद्धयोः। धावते धावति दधावे दधाव धाविता। ऊदित्त्वात् क्त्वि वेट् धौत्वा। अत्रानुनासिके चेति वस्योटि ऊटेत्यौत्वम्। पक्षे धावित्वा। वेट्त्वात् क्तयोर्नेट् धौतः धौतवान् पादौ। कथं धावितः धावितवान्। सत्यपि वेट्त्वे गतौ क्तयोरिट्प्रतिषेधस्यानित्यत्वात्। णके धावकः। मन्यनुनासिके चेत्यूटि सुधौमा। वनि व्योरिति वस्य लुकि सुधावा। क्विपि सुधाः। क्विप्यूटि सुधौः। क्तौ धौतिः। क्तौनिट्त्वात् क्तेट इत्यप्रत्ययो नास्ति॥

921. चीवृग् झषीवत्। झषी आदानसंवरणयोर्वक्ष्यते तद्वदयमप्यादानसंवरणयोरित्यर्थः। चीवते चीवति चिचीवे चिचीव चीविता। ऋदित्त्वाड्डे अचिचीवत्। अनृदिदयमित्येके। तन्मते ङे ह्रस्वे अचीचिवत्। उणादौ जठरेति निपातनादरे चीवरं मुनिवासः। चिनोतेर्वा वरटि दीर्घे च ४०३, ४४३॥

अथ शान्तः सेट् च॥

922. दाशृग् दाने। दाशते दाशति ददाशे ददाश दाशिता। ऋदित्त्वाड्डे अददाशत्। दाश्वत्साह्वदिति निपातनात्फलवत्कर्तर्यपि क्वसौ द्वित्वेटोरभावे दाश्वान्। घञि दाशतेऽस्मै दाशः। पुरो दाश्यते पुरोडाशः। दुःखेन दाश्यते दूडाशः। पृषोदरादित्वात्साधू॥

अथ पान्ता नव त्विषींवर्जाः सेटश्च॥

923. झषी आदानसंवरणयोः। झपते झपति जझपे जझाप झपिता। क्ते झपितम्। अचि झपः। झप हिंसायाम्। झपति॥

924. भेपृग् भये। भेपते भेपति बिभेपे बिभेप भेपिता। ऋदित्त्वाड्डे न ह्रस्वः अबिभेपत्। णौ भेपयति॥

925. भ्रेपृग् चलने च। चकाराद्भये। भ्रेपते भ्रेपति बिभ्रेपे बिभ्रेप भ्रेपिता। ऋदित्त्वाड्डे न ह्रस्वः अबिभ्रेपत्। णौ भ्रेपयति। घञि भ्रेपः॥

926. पषी बाधनस्पर्शनयोः। स्पर्शनं ग्रन्थनम्। पषते पषति पेषे पपाष पषिता। क्ते पषितम्। घञि पाषः। उणादौ पषो णिदित्याणे पाषाणः १९२। अयं स्पशीत्येके। स्पशते स्पशति। अचि स्पशश्चरः। सेयमुभयतः स्पाशा रज्जुः। स्पाशभान्यः। परस्पश उपोद्घातः। पषण् बन्धने। पाषयति। पषण् अनुपसर्गोदन्तः पषयति॥

927. लषी कान्तौ। कान्तिरिच्छा। भासभ्लासेति वा श्ये अभिलष्यते अभिलष्यति अभिलषते अभिलषति लेषे ललाष लषिता। लषपतेत्युकणि अभिलाषुकः।

मृषाक्रोधार्थेत्यने अभिलषणः। व्यपाभेरिति घिनणि विलाषी अपलाषी अभिलाषी। घञि अभिलाषः। उणादौ लषेः श् चेत्युने लशुनं कन्दविशेषः २८९॥

928. चषी भक्षणे। चषते चषति चेषे चचाष चषिता। क्ते चषितम्। घञि चाषः। उणादौ दृकृनीत्यके चषकं सरकः २७। ऋकृमृत्यालै चषालो यूपवलयः ४७५। चष हिंसायाम्। चषति॥

929. छषी हिंसायाम्। छषते छषति चच्छषे चच्छ[ा]ष छषिता छषितुम्॥

930. त्विषीं दीप्तौ। त्वेषते त्वेषति तित्विषे तित्वेष। अनुस्वारेत्त्वान्नेट् त्वेष्टा त्वेष्टुम्। हशिट इति साकि अत्विक्षत। क्रुत्संपदेति क्विपि त्विट्। उणादौ त्वष्टृक्ष- त्रेति तृप्रत्यये निपातनात् त्वष्टार्कः ८६९। अवपूर्वो दाननिरसनयोर्भेरयेके। निरसन- मपाकरणम्। चकाराद्दीप्तौ। अवत्वेषते अवत्वेषति ददाति निरस्यति दीप्यते चेत्यर्थः॥

931. अषी 932 असी गत्यादानयोश्च। चकाराद्दीप्तौ। अषते अषति आषे आष अषिता अषित्वा॥

अथ सान्तौ सेटौ च॥

932. असी। असते असति आसे आस। आसेत्यसतेरिति वामनः। असिता। सते असक् भुवि। अस्ति। असूच् क्षेपणे। अस्यति॥

933. दासृग् दाने। दासते दासति ददासे ददास दासिता। क्ते दासितम्। अचि दासः। गौरादित्वाड् ङ्याम् दासी। महादित्वाण्णिनि उदासी। घञि उदासः। णौ दान्तेति क्ते वा निपातनात् दस्तः दासितः॥

अथ हान्तौ सेटौ च॥

934. माहृग् माने। मानं वर्तनम्। माहते माहति ममाहे ममाह माहिता। ऋदित्वाङ्के न ह्रस्वः अममाहत्। अचि माहः। स्त्रियाम् माहा गौः॥

935. गुहौग् संवरणे। गोहः स्वरे इत्यूत्वे गूहते गूहति जुगुहे जुगूह। औदि- त्वाद्वेट् गोढा गूहिता। इड्भावपक्षे हशिट इति साकि दुहदिहेति वा तल्लुकि च अघुक्षत अगूढ। अगूहिट। परस्मैपदे तु सको लुगभावे अघुक्षत्। अगूहीत्। स्वरेत इति सकोऽलुकि अघुक्षाताम् अघुक्षन्त। स्वरस्य परे इति प्राचः परस्मिन्नपि विधौ कर्तव्ये स्वरादेशस्य स्थानिवत्त्वमिष्यते। तेनात्राक्लुकः परस्मिन्नन्तोदादेशे स्थानित्वादन्तोन्त इत्यत्र भवति। वेट्त्वात् क्तयोर्नेट् गूढः गूढवान्। ग्रहगुहश्चेति सनीट्प्रतिषेधात् जुघुक्षति। णौ ङे अजूगुहत्। ये तु ह्रस्वं नेच्छन्ति तन्मते अजुगूहत्। कृवृषीति वा क्यपि गुह्यम्। पक्षे घ्यणि गोह्यम्। नाम्युपान्त्येति के गुहः। गिर्योषध्योर्भिदा-

दित्वादङि गुहा । अन्यत्र क्तौ गूढिः । उणादौ विदनगगनेत्यने निपातनात् गहनम २७५ । तीवरधीवरेति वरटि निपातनात् गह्वरम् ४४४ ।

अथ क्षान्तः सेट् च ॥

936. भ्लक्षी भक्षणे । भ्लक्षते भ्लक्षति बभ्लक्षे बभ्लक्ष भ्लक्षिता । क्ते भ्लक्षितम् । घञि भ्लक्षः । अयं भक्षीरित्यन्ये । भक्षते भक्षति बभक्षे बभक्ष भक्षितुम् । क्ते भक्षितम् ॥

अथ द्युतादयः कृपौङ्पर्यन्ता आत्मनेपदिनोऽपि वर्णक्रमेण सेटश्च ।

पूर्वाचार्यानुवर्तनेन द्युतेः पूर्वं पाठः ॥

937. द्युति दीप्तौ । इदित्वादात्मनेपदम् । द्योतते दिद्युते । द्युद्भ्योऽद्यतन्यामित्यात्मनेपदिनोऽपि विकल्पनात्पक्षे शेषात्परस्मायीति परस्मैपदे लृदिद्द्युतादीत्यङि अद्युतत् । पक्षे अद्योतिष्ट । णौ ङे द्युतेरिति पूर्वस्येत्वे अदिद्युतत् । इङित इत्यने द्योतनशीलो द्योतनः । क्विपि विद्युत् । दिद्युद्दद्गिति क्विपि निपातनात् दिद्युदायुधम् । धौ व्यञ्जनादेरिति क्त्वासनोर्वा कित्वे द्युतित्वा द्योतित्वा दिद्युतिषते दिद्योतिषते । उणादौ द्युतेरादेश्च ज इतीसि ज्योतिः ९९१ । स्वार्थे के ज्योतिष्काः सूर्यादयः ॥

938. रुचि अभिप्रीत्यां च । चकाराद्दीप्तौ । अभिप्रीतिरभिलाषः । मैत्राय रोचते दधि । अत्र रुचिकृप्यर्थेति चतुर्थी । द्युतादित्वादङि अरुचत् अरोचिष्ट । फलवत्कर्तरीति इत्यात्मनेपदेऽणिगि प्राणीति परस्मैपदेन बाधिते परिमुहेति पुनर्विहिते परिरोचयते मैत्रं चैत्राय । रुच्याव्यथ्येति कर्तरि निपातनात् क्यपि रुच्यम् । भावे घ्यणि क्ते सेट्त्वात्कत्वाभावे रोच्यम् । क्ते रुचितः । भ्राज्यलङ्कृगिति णौ रोचनशीलो रोचिष्णुः । इङित इत्यने रोचनः । घञि न्यङ्क्वादित्वात्कत्वे रोकः । करणाधारे इत्यनटि रोचनी दृषत् । व्यञ्जनाद्घञि रोचना वर्णजातिः । उणादौ प्यासिरमील्यने रोचनश्चन्द्रः । विरोचनः सूर्यो दानवश्च । रोचना गोपित्तम् २६९ । रुक्ममीप्मेति मे निपातनात् रुक्म हिरण्यम् । रुक्मो वर्णः ३४६ । रोऽस्या अस्तीति रुक्मिणी । नाम्युपान्त्येति किः रुचिः ६०९ । मत्वर्थे रे रुचिरम् [४१६] । रुच्यर्चीतीसि रोचिः । वसुभी रोचते वसुरोचिरादित्यः ९८९ ॥

अथ टान्ताखयः ॥

939. घुटि परिवर्तने । घोटते जुघुटे । द्युताद्यङि अघुटत् अघोटिष्ट । णके घोटकः । नाम्युपान्त्येति के घुटः । स्वार्थिके के घुटिका गुल्फास्थि ॥

940. रुटि 941 लुटि 942 लुठि प्रतीघाते । आद्यौ दीप्तावित्यन्ये । रोटते रुरुटे । द्युताद्यङि अरुटत् अरोटिष्ट । नाम्युपान्त्येति के रुटः । ग्रन्थोऽयमित्यन्ये ॥

941. लुटि । लोटने लुलुटे । द्युतादयङि अलुटत् अलोटिष्ट । लुट विलोटने । लोटति । लुटच् विलोटने । लुट्यति ॥

अथ ठान्तः ॥

942. लुठि । लोठने लुलुठे । द्युतादयङि अलुठत् अलोठिष्ट । लुठ उपघाते । लोठति । लुठत् संश्लेषणे । लुठति ॥

अथ तान्तः ॥

943. ञिश्विताङ् वर्णे । ङित्वादात्मनेपदे श्वेतते शिश्विते । द्युतादयङि अश्वितत् अश्वेतिष्ट । आदित्वात् क्तयोर्नेट् श्वित्तः श्वित्तवान् । न वा भावारम्भे श्वेतितमनेन श्वित्तमनेन प्रश्वित्तः प्रश्वेतितः । घञि श्वेतः । उणादौ ऋज्यजीति किति रे श्वित्रं कुष्ठभेदः ३८८ ॥

अथ दान्तास्त्रयः ॥

944. ञिमिदाङ् स्नेहने । स्नेहनं स्नेहयोगः । मेदते मिमिदे द्युतादयङि अमिदत् अमेदिष्ट । ञीत्वाज्ज्ञानेच्छेति वर्तमाने क्तः मिन्नः । अत्रादित्वान्नेट् । मिन्नवान् । न वा भावारम्भे इति वेट्प्रतिषेधे मिन्नमनेन मेदितमनेन प्रमिन्नः प्रमेदितः । अनेटि न डीडिति किर्त्वप्रतिषेधाद्गुणः । लिहादयचि मेदो म्लेच्छः । भञ्जिभासीति घुरे मेदनशीलो मेदुरः । उणादौ चिमिदीति किति त्रे मित्रम् ४६४ । असिल्यसि मेदो वसा ९६२ । ञिमिदाच् स्नेहने । मेद्यति । मिदुण् स्नेहने । मिन्दयति ॥

945. ञिक्ष्विदाङ् 946 ञिश्विदाङ् मोचने च । चकारात्स्नेहने । क्ष्वेदते चिक्ष्विदे । द्युतादयङि अक्ष्विदत् अक्ष्वेदिष्ट । ञीत्वाद्वर्तमाने क्तः क्ष्विण्णः । अत्रादित्वान्नेट् । न वा भावारम्भे इति वेट्प्रतिषेधे क्ष्वेदितमनेन क्ष्विण्णमनेन प्रक्ष्वेदितः प्रक्ष्विण्णः प्रक्ष्वेदितवान् प्रक्ष्विण्णवान् । एवमिटि न डीडिति किर्त्वप्रतिषेधाल्लघोरिति गुणः । डान्तोयमित्येके । क्ष्वेडो विषः । क्ष्वेडा रवः । ञिक्ष्विदाच् मोचने च । क्ष्विद्यति ॥

946. ञिष्विदाङ् । षः स इति सत्वे । स्वेदते । नाम्यन्तस्थेति षत्वे सिष्विदे । द्युतादयङि अस्विदत् अस्वेदिष्ट । ञीत्वात्सति क्ते स्विन्नः स्विन्नवान् । अत्रादित्वा-न्नेट् । न वा भावारम्भे वेड्भावे स्विन्नमनेन स्वेदितमनेन प्रस्विन्नः प्रस्वेदितः । अनेटि न डीडिति किर्त्वाभावाद्गुणः । वौ व्यञ्जनादेरिति क्त्वासनोर्वा किर्त्वे स्विदित्वा स्वेदित्वा सिस्विदिषते सिस्वेदिषते । अत्र णिस्तोरेवेति नियमान्न षत्वम् । णिस्तोरेवेत्यत्र स्विदेर्वर्जनाण्णौ सनि षत्वाभावे सिस्वेदयिषति । घञि स्वेदः । ष्विदांच् गात्रप्रक्षरणे । स्विद्यति ॥

अथ मान्ताः पञ्च ॥

947. शुभि दीप्तौ । शोभते शुशुभे । द्युताद्यडि अशुभत् अशोभिष्ट । नाम्युपान्त्येति के शुभम् । णौ नन्द्यादने शोभनः । इङित इत्यने शोभनशीलः शोभनः । भिदादिनिपातनादङि शोभा । उणादौ ऋज्यजीति किति रे शुभ्रः ३८८ । शुभत् शोभार्थे । शुम्भति । अत्र मुचादीति नः ॥

948. क्षुभि संचलने । संचलनं रूपान्यथात्वम् । क्षोभते चुक्षुभे । द्युताद्यडि अक्षुभत् अक्षोभिष्ट । क्षुब्धविरिब्धेति निपातनादिडभावे क्षुब्धो मन्थः । क्षुभितोऽन्यः । क्षुभत् संचलने । क्षुभ्यति । क्षुभश् संचलने । क्षुभ्नाति । क्षुभ्नादित्वाण्णत्वाभावः ॥

949. णभि 950 तुभि हिंसायाम् । पाठे इति नत्वे नभते । णोपदेशत्वाद-दुरुपसर्गेति णत्वे प्रणभते नेभे । द्युताद्यडि अनभत् अनभिष्ट । उणादौ असित्यसि नभः ९६२ । अणोपदेशोऽयमित्येके ॥

950. तुभि । तोभते तुतुभे । द्युताद्यडि अतुभत् अतोभिष्ट । णभ तुभत् हिं-सायाम् । नभ्यति प्रणभ्यति । तुभ्यति । णभ तुभश् हिंसायाम् । नभ्नाति प्रणभ्नाति । तुभ्नाति ॥

951. स्रम्भूङ् विश्वासे । दन्त्यादि [:] । स्रम्भते सस्रम्भे । द्युताद्यडि अ-स्रभत् अस्रम्भिष्ट । ऊदित्त्वात् क्त्वि वेट् स्रब्ध्वा स्रम्भित्वा । क्तेति सेटः कित्त्वाभा-वाच्चो व्यञ्जनस्येति नलोपाभावः । वेट्त्वात् क्तयोर्नेट् विस्रब्धः विस्रब्धवान् । वेर्विचेति घिनणि विस्रम्भशीलो विस्रम्भी । घञि विस्रम्भः । हान्तोऽयमिति कौशिकः । स्रंहते ॥

अथ शान्तः ॥

952. भ्रंशूङ् 953 स्रंसूङ् अवस्रंसने । शिड्हे इति नस्यानुस्वारे भ्रंशते बभ्रंशे । द्युताद्यडि अभ्रशत् अभ्रंशिष्ट । ऊदित्त्वात् क्त्वि वेट् भ्रष्ट्वा भ्रंशित्वा । वेट्त्वात् क्तयोर्नेट् भ्रष्टः । संज्ञायां कुत्सितेति कपि भ्रष्टकः । भ्रष्टवान् । यङि वञ्चस्रंसेति पूर्वस्यान्तो नी बनीभ्रश्यते । केनिट्त्वात् क्तेट इत्यप्रत्ययाभावे स्त्रियां क्तौ भ्रष्टिः । घञि भ्रंशः । भ्रंशूच् अधःपतने । भ्रश्यति ॥

अथ सान्तौ ।

953. स्रंसूङ् । दन्त्यादिः । स्रंसते सस्रंसे । द्युताद्यडि अस्रसत् अस्रंसिष्ट । मनि स्रिस्रंसिषते । यङि सनीस्रस्यते । यङ्लुपि सनीस्रंसीति । ऊदित्त्वात् क्त्वि वेट् स्रस्त्वा स्रंसित्वा । वेट्त्वात् क्तयोर्नेट् स्रस्तः स्रस्तवान् । क्विपि उखेन उखया या स्रंसते उखास्रत् । अत्र स्रंस्ध्वंसिति पदान्ते सस्य दः । घञ्युपसर्गेति बाहुलकाद्दीर्घः ।

स्त्रिया क्तौ रास्ति । ससूइ प्रमादे । वस्त्रप्रसेत्यत्र ध्वंसिसहचरितस्य ससेर्ग्रहणान्य-भावे यङि सास्रस्यते । अङभावे असासिट । ससध्वंसित्यत्र नुभयोर्ग्रहणात् क्विपि दस्वे उदाहृत ॥

951 ध्वसूइ गतौ च । चकारादवस्रसने । ध्वसते दध्वसे । द्युताद्यङि अध्वसत अध्वसिष्ट । यङि दध्वंसीति पूर्वस्य नी दनीध्वस्यते । ऊदित्त्वात् क्त्वि वेट् ध्वस्त्वा ध्वसित्वा । वेट्त्वात् क्तयोर्नेट् ध्वस्त ध्वस्तवान् । स्त्रिया क्तौ ध्वस्ति । घञि ध्वस । क्विपि पर्णध्वत ॥

अथ द्युताद्यन्तर्गणो वृतादि पञ्चकः ॥

955 वृतुङ् वर्तने । वर्तनं स्थितिः । वर्तते ववृते । द्युताद्यङि अवृतत् अव-र्तिष्ट । वृद्भ्य गति स्यसनोर्विषये वात्मनेपदमात्मनेपदाभावे च न वृद्भ्य इति नेट् वर्त्स्यति वर्तिष्यते अवर्त्स्यत् अवर्तिष्यत । सनि विवृत्सति विवर्तिषते । यङ्यृ-मतामिति पूर्वस्य री वरीवृत्यते । णौ डे ऋदृवर्णस्येति गुणापवादे ऋतो वा ऋत्वे अवीवृतत् अववर्तत् । वर्तवृत्तमिति निपातनात् क्ते वृत्तस्तर्कः । अन्यत्राद्यन्य वर्ति-त कुङ्कुमम् । ऊदित्त्वात् क्त्वि वेट् वृत्त्वा वर्तित्वा । वेट्त्वात् क्तयोर्नेट् वृत्त वृत्तवान् । णके वर्तकः । स्त्रिया वौ वर्तिकेति वेत्त्वे वर्तिका वर्तका वा शकुनिः । क्विपि गतिकारकस्येति दीर्घे नीवृत् उपावृत् । स्त्रिया क्तौ वृत्तिः । वृत्तिरस्त्यस्या वार्त्ता । व्यञ्जनाद्घञि दधा आस्मिन्नावर्तन्ते रथावर्तो ग्रामो गिरिश्च । घञ्युपसर्ग-स्येति बाहुलकाद्दीर्घे । श्नाद्यर्थादिति णमि हस्तवर्तं वर्तते । णौ हस्तवर्तं वर्तयति । उणादौ तृवृभ्यामिरे वर्तकः वर्तिका वर्तका वा शकुनिः २७ । मताकश्यामाकेत्याके निपातनात् वार्ताकी शाकविशेषः । तत्फलं वार्ताकम् । वन्तास्तृवृवृती । तत्फलं वृन्ताकम् ३७ । वतेस्तिकः वर्तिका चित्रकरोपकरणम् ७८ । ऋज्यजीति क्विति रे वृत्र ३८८ । निविवृतेर्नीति या किदि वति कण्ठाभरणम् । निर्वृतिः सुखम् । वर्तिर्दीपदशा ६१० । सदिवृनीत्यनी वर्तनि पन्था ६८० । मनिति मनि वर्त्म ९११ । वृतुञ् वरणे । वृत्यते । वृतण् भासार्थे । वर्तयति ॥

अथ दान्त ॥

956 स्यन्दौङ् स्रवणे । स्यन्दते सस्यन्दे । द्युताद्यङि अस्यदत् अस्यन्दिष्ट । निरभ्यनोश्चेति वा षत्वे निष्यन्दते निःस्यन्दते अभिष्यन्दते अभिस्यन्दते । वृद्भ्य इति स्यसनोर्वात्मनेपदं तदभावे च न वृद्भ्य इति नेट् स्यन्त्स्यति । आत्मनेपदे त्वौदित्त्वाद्वेट् स्यन्दिष्यते स्यन्त्स्यते सिस्यन्त्सते सिस्यन्दिषते सिस्यन्त्सते । यङि सास्यद्यते । यङ्लुपि सास्यन्दीति सास्यन्ति । क्त्वीटभावे स्कन्स्यन्द्र इति कित्त्वाभावे

स्यन्त्वा। इति नु क्त्वेति किन्त्वाभावे स्यन्दित्वा। यपि प्रस्यन्द्य। गादेरेव क्तः कि-त्वाभाव इत्येके। तन्मते किन्त्वे नलुकि प्रस्यद्य। वेट्त्वात् क्तयोर्नेट् स्यन्नः स्यन्नवान्। स्यदो जवे इति घञि निपातनात् गोस्यदः अश्वस्यदः। जवादन्यत्र तैलस्यन्दः घृतस्यन्दः। उणादौ स्यासिरसीत्यने स्यन्दनः २६९। स्यन्दिसृजिभ्यां सिन्धरज्जौ चेत्युः सिन्धुः ७१७॥

अथ धान्तौ॥

957. वृधुङ् वृद्धौ। वर्धते ववृधे। द्युताद्यडि अवृधत् अवर्धिष्ट। वृद्भ्यः स्यसनोरिति वात्मनेपदं तदभावे न वृद्भ्य इति नेट् वर्त्स्यति वर्धिष्यते विवृत्सति विवर्धिषते। ऊदित्वात् क्त्वि वेट् वृद्ध्वा वर्धित्वा। वेट्त्वात् क्तयोर्नेट् वृद्धः वृद्धवान्। क्तौ लिकि वा वृद्धिः। णौ नन्द्यादने वर्धनः सुखवर्धनः। भ्राज्यलंकृगिनीष्णौ वर्धिष्णुः। उणादौ भीवृधीति रे वर्ध्रः ३८७। वृधण् भासार्थः। वर्धयति॥

958. शृधुङ् शब्दकुत्सायाम्। तालव्यादिः। शब्दकुत्सा पायुशब्दत्वात्। शर्धते शशृधे। द्युताद्यडि अशृधत् अशर्धिष्ट। वृद्भ्यः स्यसनोरिति वात्मनेपदाभावे न वृद्भ्य इति नेट् शर्त्स्यति शर्धिष्यते शिशृत्सति शिशर्धिषते। ऊदित्वात् क्त्वि वेट् शृद्ध्वा शर्धित्वा। वेट्त्वात् क्तयोर्नेट् शृद्धः शृद्धवान्। घञि शर्धः शर्धजश मापाः। उणादौ डीनीबन्धीति डिम्बे शिम्बा बीजकोशी ३२९। वृनिगृधीति किदुः शृधुः शर्धनः ८४४॥

959. कृपौङ् सामर्थ्ये। रूर इति लत्वे कल्पते। लृत्वे चक्लृपे। द्युताद्यडि अक्लृपत् अकल्पिष्ट। वृद्भ्यः स्यसनोरिति कृपः श्वस्तन्यामिति च वात्मनेपदाभावे न वृद्भ्य इति नेट्। आत्मनेपदे स्वौदित्वाद्वेट् कल्प्स्यति कल्पिष्यते कल्प्स्यते चिक्लृप्सति चिकल्पिषते चिक्लृप्सते कल्प्तासि कल्पितासे कल्प्तासे कल्प्तुम् कल्पितुम्। वेट्त्वात् क्तयोर्नेट् क्लृप्तः क्लृप्तवान्। णौ कल्पयति। ऋदुपान्त्येत्यत्र कृपिचृतिवर्जनात् क्लृप्तकीर्तीति ये कल्प्यम्। णावचि कल्पः। यङि चलीक्लृप्यते। णौ क्ते अवकल्पितः। व्यञ्जनादित्याधारे घञि कल्प्यन्ते यस्मिन्प्राणिनां भोगोपभोगा बुद्धिहानिश्चामिति कल्पः कालविशेष उत्सर्पिण्यवसर्पिणीसमुदायः। उणादौ नृकृकृपीति अटे कृपाटं हिरण्यं जलं च १६१। कृपण् अवकल्कने। कल्पयति। कृपण् दौर्बल्ये। अदन्तः कृपयति॥

वृत् वर्तनम्। वृत सुतादि [:] २३ वृतादिः आत्मनेपदी वर्तिनौ समाप्तार्थस्यर्थः। वृधेः क्विपि वृत् वर्धितौ पूर्णाविल्येके॥

अथ ज्वलादयो यजादेः प्राक् पठ्यन्तं कुंतंदंरमितर्मा: तत्र वर्ण-क्रमेण निर्दिश्यन्ते। तत्रापि पूर्वाचार्यानुरोधेन पूर्व

960 ज्वल दीप्तौ। शेषात्परस्मा इति परस्मैपदे ज्वलति जज्वाल ज्वलित्वा।

णौ घटादित्वाद्ध्रस्वे प्रज्वलयति । ज्वलह्वलेत्यनुपसर्गस्य वा ह्रस्वे ज्वलयति ज्वालयति । वा ज्वलादीति णे ज्वाल ज्वाला । पक्षेऽचि ज्वल । भूषाक्रोधार्थेत्यने ज्वलनशीलो ज्वलन । उणादौ निष्कतुरुष्केति के निपातनात् उल्का २६ । कम्बुकाशुकेत्युके निपातनात् उल्मुकम् ६७ ॥

अथ चान्त ॥

961 कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । सम्पर्चनं मिश्रता । प्रतिष्टम्भो रोधनम् । विलेखनं कर्षणम् । कोचति चुकोच कोचिता सकुचित । णौ क्ते सकोचित । वा ज्वलादीति णे कोच । नाम्युपान्त्येति के कुच । घञि क्ते सेट्त्वात्कत्वाभावे उत्कोच सकोच ॥

अथ तान्त ॥

962 पत्लृ 963 पन्ॅ गतौ । पतति पपात पेतु । लदित्वादङि श्वयतीति पप्तादेशे अपप्तत् । नेर्ङ्गदेति नेर्णत्वे प्रणिपतति प्रण्यपतत् । अगो धात्वादित्वादृयवधानाभाव । सनीवृधेति वेट् अनिट्पक्षे रभलभेति स्वरस्येत्वे द्वित्वाभावे च पित्सति । इटि पिपतिषति । यङि वञ्चस्रंसेति पूर्वस्यान्तो नी पनीपत्यते । भावकर्मणोरेथ प्राप्तस्य घ्यणो भव्यगेयेति कर्तरि वोत्पत्तौ आपात्य । पक्षे आपात्यमनेन । वा ज्वलादीति णे पातो राहु । पक्षेऽचि पत पत्नी । घञि उत्पात निपात । वेटो पत इति पतो वर्जनादिट्प्रतिषेधाभावे पतित पतितवान् । उद पत्नीतीष्णो उत्पतनशील उत्पतिष्णु । लषपतेत्युकणि प्रपातुक । भूषाक्रोधार्थेत्यने पतन । नीदाविति त्रटि पत्त्रम् । विशपतेति णमि गेहानुप्रपातमास्ते । उणादौ शलिबलीत्याके पताका ३४ । आङ पणीतीके आपतिक श्येन ३९ । पतितमीत्यङ्गे पतङ्ग पक्षी ९८ । धीपतिपञ्चिभ्यस्तन पत्तन पुरविशेष २९० । घृगृनक्षीत्यत्रे पतत्र पक्षम् ४५६ । पतिकलूभ्यो णिदित्याले पातालम् ४७९ । पते सल पत्सल प्रहार ६०४ । कमिवमीति णिदि सपातिर्गध्रराज ६१८ । आत्मनात्मानिति मनि निपातनाण्णौ पाप्मा ९१६ । पतण गतौ वा । अदन्त । शीङ्श्रद्धेत्याले पतयालु ॥

अथ यान्तास्त्रय सेटश्च ॥

963 पये । पयति पपाय पयिता । एदित्वादृद्यञ्जनादेरिति वा वृद्धेर्न श्विजागेति प्रतिषेधे अपयीत् । वा ज्वलादीति णे पाय । पक्षेऽचि पय । उणादौ पयिमनिभ्यामितीनि पन्था ९२६ ॥

964 क्नये निपाके । क्नयति चक्नाय क्नयिता । एदित्वाद्व्यञ्जनादेरिति वा वृद्धेर्न श्विजागेति प्रतिषेधे अक्नयीत् । वा ज्वलेति णे क्नाय । अचि क्नय । घञि क्नाय । अतोनेकस्वरादिति मत्वर्थीये के क्नायिका यवागू ॥

965. मथें विलोडने। मथति ममाथ मथिता। एदित्त्वाद्व्यञ्जनादेरिति वा-वृद्धेर्न श्विजागिति प्रतिषेधे अमथीत्। वा ज्वलेति णे माथः। पक्षेऽचि मथः। मथलप इति घिनणि प्रमथनशीलः प्रमाथी। घञि प्रमाथोऽध्वपरिमाणम्। उणादौ वाश्यसीत्युरे मथुरा ४२३। मन्था इति तु मथ्नातेः ९२६॥

अथ दान्तौ॥

966. षद्लृं विशरणगत्यवसादनेषु। विशरणं शटनम्। अवसादोऽनुत्साहः। श्रौतीति सीदादेशो सीदति। षः स इति सत्वे ससाद। सदोऽप्रतेरिति षत्वे निषीदति विषीदति निषसाद विषसाद। सनि निषिषत्सति विषिषत्सति। प्रतेस्तु षत्वाभावे प्रतिसीदति। नाम्यन्तस्थेति षत्वे सिषत्सति। लृदित्वादङि आसदत्। अनुस्वारेत्त्वादिट् सत्तः सत्तवान्। गृलुपेति गर्ह्यार्थे यङि सासद्यते। वा ज्वलादीति णे सादः। बाहुलकात्सोपसर्गादपि णे निषादः विषादः। अचि सदः। क्विपि भीरुष्ठानादित्वात्षत्वे आदिषत् उपसत् पुष्करसत्। संपदादिक्विपि उपनिषत्। परिपीदन्त्यस्यामिति परिषत्। ग्रहादित्वाण्णिनि सादी निषादी। दाधेसीति रौ सादनशीलः सद्रुः। घञि सादः निषादः विषादः। स्त्रियां समजेति क्यपि निषद्या। आधारे व्यञ्जनादिति घञि घञ्युपसर्गेति दीर्घे प्रासादः। उणादौ ह्रुयामेति त्रे सत्त्रं यज्ञः ४५१। कृगृश्रिति वराटि निषद्वरः पङ्कः ४४१। मनिति मनि सद्म ९११। कमिवमीति णिदिः सादिरश्वारोहः सारथिश्च ६१८। असिरयसि सदः सभा ९५२॥

967. शद्लृं शातने। शातनं तनूकरणम्। शदेः शितीत्यात्मनेपदे श्रौतीति शीयादेशे शीयते। शितोऽन्यत्र परस्मैपदे शशाद। अनुस्वारेत्त्वादिट् शत्स्यति। लृदित्वादङि अशदत्। णौ शादेरगतौ शात् पुष्पाणि शातयति। गतौ तु गाः शादयति। वा ज्वलेति णे शादस्तृणपङ्कौ। अचि शदः शदितः। क्षत्रियापशदः धिग्दः। णौ करणाधारे इत्यनटि पलाशशातनो दण्डः पलाशशातनी यष्टिः। उणादौ शदे-रूच्चेति रे शूद्रः ३९४। लाङ्किवङ्कीति रिः शाद्रिर्वंशः ६९२। जनिहर्माति रौ तादेशे न शत्रुः ८०९॥

अथ धान्तः॥

968. बुध अवगमने। अवगमनं ज्ञापनम्। बोधति बुबोध बोधिता। वा ज्वलेति णे बोधः। पक्षे नाम्युपान्त्येति के बुधः। णौ गतिबोधेत्यणिक्कर्तुः कर्मत्वे बोधयति शिष्यं धर्मम्। अजातेरिति णिन् चावश्यकेति वा णिनि प्रतिबोधी। गम्यादित्वादिन्प्रत्यये साधुः। घञि बोधः। उणादौ युयुजीति किल्याने बुधान आ-

नार्यः २७७ । अनुस्वारेदयमित्येके । तन्मते अभौत्सीत् बोद्धा राज्ञाम् बुद्धः । बुधिंच् ज्ञाने । बुध्यते ॥

अथ मान्तौ ॥

969. टुवमू उद्गिरणे । उद्गिरणं भुक्तस्योर्ध्वगतिः । वमति ववाम । अनादेशादेरित्येत्वद्वित्वाभावयोर्न शसददवेति प्रतिषेधे जृभ्रमेति वा प्रतिप्रसवे वेमतुः ववमतुः । वा ज्वलेति णे मोकमीत्यत्र यमेर्वर्जनाद्वृद्धिप्रतिषेधाभावे वामः । अनि वमः । वमिता । अमोकमीति ह्रस्वे णौ उद्वमयति । ज्वलह्वलेत्यनुपसर्गस्य वा ह्रस्वे वमयति वामयति । णौ नन्द्याद्यने वामनः । णके वामकः । घञि वामः । अङ्गादित्वान्मत्वर्थीये ने वामनः । जीणृदृक्षीतीनि वमनशीलो वमी । द्वित्वादथुः वमथुः । ऊदित्वात् क्त्वि वेट् वान्त्वा वमित्वा । वेट्त्वात् क्तयोर्नित्यमिडभावे प्राप्ते श्वसजपेति वेटि वान्तः वान्तवान् वमितः वमितवान् । उणादौ कमिवमीति णिदिः वामिः स्त्री ६१८ । इत इति वा ङ्याम् वाम्यभा । नायमृदिदित्यन्ये ॥

970. भ्रमू चलने । भ्रासभ्लासेति वा श्ये भ्राम्यति भ्रमति । बभ्राम । जृभ्रमेति वैत्वे भ्रेमुः बभ्रमुः । ऊदित्वात् क्त्वि वेट् भ्रान्त्वा भ्रमित्वा । वेट्त्वात् क्तयोर्नेट् भ्रान्तः भ्रान्तवान् । वा ज्वलेति णे ज्वलादिपाठबलान्मोकमीति प्रतिषेधाभावे ञ्णितीति वृद्धौ भ्रामः । अनि भ्रमः । तृचि भ्रमिता । उणादौ ऋच्छिचटीत्यरे भ्रमरः ३९७ । तृभ्रमीति इर्भृमश्च भृमिर्वायुः । बाहुलकाद्भृमदेशाभावे भ्रमिर्भ्रमः ६११ । भ्रमिगमीति डिद्रुः भ्रुः ८४३ । भ्रमुन् अनवस्थाने । भ्राम्यति ॥

अथ रान्तः ॥

971. क्षर सञ्चलने । सकर्मकश्चायमकर्मकश्च । क्षरति गौः पयो मुञ्चतीत्यर्थः । क्षरति जलं स्यन्दतीत्यर्थः । चक्षार क्षरिता । वा ज्वलेति णे क्षारः । गौरादित्वाद् ङ्याम् क्षारी । णे ण्यणि कृते क्षारिरित्येके । अनि क्षरः अक्षरः ॥

अथ लान्ताश्चतुर्दश ॥

972. चल कम्पने । चलति चचाल चलिता । वा ज्वलेति णे चालः । अनि चलः । चराचरेति निपातनात् चलाचलः । यङ्लुपि चाचलश्चञ्चलः । कम्पने घटादित्वाण्णौ ह्रस्वे चलयति शाखाम् । अन्यत्र चालयति सूत्रम् । चालशब्देत्यने चलनशीलश्चलनः । घञि चालः । चलम् भूमी । चालयति ॥

973. जल घात्ये । घात्यं जडत्वमदेव्यामित्यर्थः । जलति जजाल । वा ज्वलेति णे जालम् । अनि जलम् । डलयोरैक्यम् जडः । ज्वलन्यपि विभाषया-

द्विर्नेर्थे प्रत्ययौ । घञि जालम् । घञन्तस्यापि नपुंसकत्वं लोकात् । जलण् अपवारणे । जालयति ॥

974. टल 975 ट्वल वैक्लव्ये । विक्लव एव वैक्लव्यम् । टलति ट्वलति टटाल टट्वाल । वा ज्वलेति णे टालः ट्वालः । अचि टलः ट्वलः । टलितुम् ट्वलितुम् ॥

976. ष्ठल स्थाने । षः स इति सत्वे स्थलति तस्थाल स्थलिता । वा ज्वलेति णे स्थालम् । गौरादित्वाड् ङ्याम् स्थाली । अचि स्थलम् । स्त्रियां भाजगोणेति ङ्याम् स्थल्यकृत्रिमा । स्थलान्या । विकुशमीति पत्वे विष्ठलम् कुष्ठलम् शमिष्ठलम् । कपेर्गोत्रे कपीनां स्थलमिव स्थलमस्य कापिष्ठलः । षोपदेशत्वाण्णम्यन्तस्येति पत्वे तिष्ठालयिषति । अषोपदेशोयमित्यन्ये ॥

977. हल विलेखने । विलेखनं कर्षणम् । हलति जहाल हलिता । वा ज्वलेति णे हालः हाला सुरा । अचि हलम् हलाहलम् । उणादौ पदिपठीति इः हलिः हडिः ६०७ ॥

978. णल गन्धे । गन्धोर्दनम् । पाठे इति नत्वे नलति । णोपदेशत्वाददुरुपसर्गेति णत्वे प्रणलति परिणलति । ननाल नलिता । वा ज्वलेति णे नालम् नाला पद्मादीनां वृन्तम् नाली नाडी प्रणालम् प्रणाली प्रणालिका प्रणाडिका । अचि नलम् नलः नडः । आत इति डे नलदः ॥

979. बल प्राणनधान्यावरोधयोः । प्राणनं जीवनम् । धान्यमवरुध्यते यत्रेति धान्यावरोधः कुसूलः । ओठघादिः । बलति बबाल । अनादेशादेरित्येत्वे द्वित्वाभावे न बेलतुः बेलुः । बलिता । वा ज्वलेति णे बालः । स्त्रियां वयस्यनन्त्ये इति ङ्यपवादेजादित्वादापि बाला । अचि बलः बलम् । उणादौ वृपृभिदिल्यते बलतः कुसुमः २०७ । वलि भरणे । दन्त्यौष्ठ्यादिः । वलते ववले । वलण् प्राणने घटादिश्चेत्येके । वलयति ॥

980. पुल महत्त्वे । पोलति पुपोल पोलिता । वा ज्वलेति णे पोलः । पक्षे नाम्युपान्त्येति के पुलः पुलम् विपुलम् । उणादौ भुभृन्दीति कित्यके पुलको रोमाञ्चः ३९ । पापुर्लीति कितीके पुलिकमुच्चधान्यम् ४१ । कल्यलीतीन्दकि पुलिन्दः २४६ । वृजितुर्लीति किनीने पुलिनम् २८३ । नाम्युपान्त्येति किदिः पुलिः [६०९] । अगिविनीत्यस्मिकि पुलस्मिः ६६० । अयं तुदादिरपीत्येके । पुलति । पुलण् समुच्छ्राये । पोलयति ॥

981. कुल बन्धुसंस्त्यानयोः । संस्त्यानं संघातः । कोलति चुकोल कोलिता । वा ज्वलेति णे कोलः सूकरः कोलं बदरम् । नाम्युपान्त्येति के कुलम् सकुलः ।

कपोलमिति तु कन्नेः पिञ्ज्योलेत्योले निपातनात् [ उणादौ ४९५ ]। उणादौ कृलिपिलीति किल्याले कुलालः ४७६ ॥

982. पल 983 फल 984 शल गतौ। पलति पपाल पलिता। या ज्वलेति णे पालः। अचि पलं मांसम्। कर्मणोऽणि गोपालः। उणादौ हृश्येतीते पलित पाण्डुरः केशः केशपाकश्च २१०। अभ्रादित्वादः पलितमस्यास्ति पलितः। मृदिकन्दीत्यले पललं तिलकल्कः ४६९। ऋकृमित्याले पलालम् ४७५। शमिकमीति वले पल्वलमखातसरः ४९९। पलण् रक्षणे। पालयति ॥

983. फल। फलति पफाल। तृत्रपफलेत्येत्वे द्वित्वाभावे च फेलतुः फेलुः। फलिता फलिष्यति। या ज्वलेति णे फालः कुशिकः। फाला इव तण्डुलाः। अचि फलम् ॥

984. शल। शलति शशाल शलिता। या ज्वलेति णे शालः शाला। अचि शलं श्वाविद्रोम। उणादौ भीण्शलीति के शल्कः शकलम् २१। शलिबलीत्याके शलाका ३४। शल्यणेर्णिद्वित्युके शालूकं कुमुदादिकन्दः ६९। शल्यलेरुधात इति धे शुल्वम् ३११। कृशृभित्यभे शलभः ३२९। स्याशमीति ये शल्यम् ३६७। याधादित्यके शल्यकः। मृदिकन्दीत्यले शललं श्वाविल्सूची ४६९। कमिवमीति णिदिः शालिः ६१८। माशालीति व्यन्ताम्मलौ शाल्मलिः ७०३। फलिशल्योः पूर्वमधीतयोरपीह पाठो ज्वलादिकार्यार्थः शलेः परस्मैपदार्थश्च ॥

985. हुल हिंसासंवरणयोश्च। धकारादुतौ होलति जुहोल होलिता। या ज्वलेति णे होलः। पक्षे नाम्युपान्त्येति के हुलः हुटः। उणादौ पृकाहृषीति किदुः हुदुर्मदः [ ७२९ ] ॥

अथ शान्ताः ॥

986. क्रुशं आह्वानरोदनयोः। क्रोशति चुक्रोश। हशिट इति सकि अक्रुक्षत्। अनुस्वारेत्त्वादनिट् क्रोष्टा आक्रोष्टा। या ज्वलेति णे क्रोशः। बाहुलकात्सोपसर्गादपि णे उत्क्रोशः कुररः। पक्षे नाम्युपान्त्येति के क्रुशः। उपसर्गादेविति णके आक्रोशनशील आक्रोशकः। घञि आक्रोशः। क्रुश्यते उच्यतेऽध्वपरिमाणं यस्मात् क्रोशः। णके उत्क्रोशकः। उणादौ कृसिकमीति तुनि क्रोष्टुना ७७८। स्त्रीक्रुशीति यनिपि क्रुशा दिशा ९०६ ॥

अथ मान्ताः ॥

987. क्रम गतौ। क्रमति उत्क्रमति विक्रमति चक्राम क्रमिता। या ज्वलेति णे क्रामः। अचि क्रमः। गति मन्नामसंमेति पूर्वस्यान्तो नौ चंक्रम्यते। यङ्लुपि

चनीकसीति । स्थेशभासेति वरे विकसनशीलो विकस्वरः । उणादौ संनिव्यामित्युके संकसत्यस्मात् संकसुकोऽस्थिरः । भीमादित्वादपादाने साधुः । विकसुको गुणवादी ५२ । कासिपदीति णिद्रुः कासूः शक्त्यायुधम् ८३८ ॥

अथ हान्तः ॥

988. रुहं जन्मनि । बीजजन्मनीत्यन्ये । बीजजन्माङ्कुरोत्पत्तिः । रोहति रुरोह । अनुस्वारेत्त्वादनिट् रोढा । हशिट इति सकि अरुक्षत् । णौ रुहः प इति वा पादेशे रोपयति रोहयति । वा ज्वलेति णे रोहः । बाहुलकात्सोपसर्गादपि णे प्ररोहः आरोहः । नाम्युपान्त्येति के रुहो मृगः । छिन्नरुहः प्ररुहः । स्यादित्वाद्वायार्ती-मूलविभुजादित्वाद्वा कर्त्तरि के बीजरुहा । अस्य साक्षादादिश्च्व्यर्थे इति कृगा योगे वा गतित्वे बीजरुहाकृत्य बीजरुहा कृत्वा गतः । क्षिपशीडिति वा कर्त्तरि क्ते खट्वामारूढः । क्तौ रूढिः । उणादौ दृयेतीते रोहितो वर्णः । लत्वे लोहितः २१० । श्येतेति ङ्याम् रोहिणी । रुहिनन्दीति डित्यन्ते रोहन्तो द्रुमः । रोहन्त्योषधिः २२० । विपिनेति निपातनादिने रोहिणः [ २८४ ] । रिणां रेयनेति ङ्याम् रोहिणी नक्षत्रम् । हनेर्वृंहिश्चेनीषे रौहिष तृणजातिः ५४८ । प्यन्तास्सर्वेभ्य इः रोहिर्मृगः ६०६, ६०८ । रुमृहनीति रोहिन्मृगः ८८७ । ऋणीभृणीति रुणिपि रुह्य वृक्षः ९०६ ॥

अथात्मनेपदिनौ ॥

989. रमिं क्रीडायाम् । इदित्त्वादात्मनेपदे रमते । व्याङ्परेरिति परस्मैपदे विरमति आरमति परिरमति । वोपात् उपरमति उपरमते वा । संगणौ भार्य-मुपरमति उपरमते वा । अन्तर्भावितण्यर्थोऽयं सकर्मकः । रेमे । यमिरमीति सिटि सेन्ते च व्यरंसीत् व्यरंसिष्टाम् । यङि रंरम्यते । यङ्लुपि रंरन्ति । अनुस्वारेत्त्वा-दनिट् रन्ता रन्तुम् । भव्यगेयेति कर्त्तरि निपातनाद्ये रम्यः । नन्द्यादने रमणः । रम्यादिभ्य इति कर्त्तर्यनटि रमणी । वा ज्वलेति णे रामः वामा । अचि रमः रमा । शीकापयुदेति निपातनात्के स्तम्बेरमो हस्ती । उणादौ पुरपिलेति निपातनात् सुरतो दमितो हस्त्यन्यो वा दान्तः २०८ । नीरमीति क्थनि रथः २२५ । पथयुरेति निपातनात् सुरथो दान्तः २३१ । रमेस्त चेति ने रत्नम् २६४ । दृभिल्यभे रभसः महर्षः ३२१ । चकिरमिरमेरघाम्येति ने रमोऽग्नः ३९३ । रस इति नु रम इति च रश्मिर्योरश्मि ९०२ । वेत्तिस्तु यमं उपरमे । रमृंट् क्रीडा-यामित्युदितौ चन्द्रादयोऽधीयते । तन्मते उदित्त्वात् क्त्वि वेट् यन्त्वा यमित्वा । रन्त्वा रमित्वा ॥

990. षहि मर्षणे । मर्षणं क्षमा । षः स इति सत्वे इदित्वादात्मनेपदे सहते । परोक्षायामनादेशादित्वादनादेशादेरित्येत्वे, हित्वाभावे न सेहे । षोपदेशत्वान्नाम्यन्तस्थेति षत्वे णौ ङे असीषहत् । असोङेति षत्वे परिषहते निषहते विषहते । स्तुस्वञ्जश्चाटि न वा पर्यषहत पर्यसहत न्यषहत न्यसहत व्यषहत व्यसहत । असोङेति वर्जनात्सोढयोः षत्वाभावे ; परिसोढः निसोढः विसोढः । णौ ङे पर्यसीषहत् । अत्र पूर्वस्य न षत्वमुत्तरस्य तु नाम्यन्तस्थेति स्यादेव । सनि षत्वाप्राप्तेः निस्नोरेवेति नियमात्षत्वाभावे सिसहिषते । णिस्तोरेवेत्यत्र ण्यन्तस्यापि सहेर्वर्जनान्न षत्वम् सिसाहयिषति । साक्षादादौ पाठात्षत्वाभावेनटिगगनिपातनादेत्वे च विसहनेकृत्य । दाधर्त्साह्वदिति निपातनात् क्वसौ साह्वान् । शकितकीति ये सह्यम् । वा ज्वलेति णे साहः । अचि सहः । नन्द्यादने .सहनः । क्विपि गतिकारकस्येति दीर्घे जलासट् । महादित्वाण्णिनि उत्साही । साहिसातीति शे साहयः । सर्वात्सहश्चेति खे सर्वंसहः । भ्राज्यलंकृगेतीष्णौ सहनशीलः सहिष्णुः । लूधूस्वितीत्रे सहित्रम् । सहलुभेति तादावादिति वेटि सोढा सहिता । वेट्त्वात् क्तयोर्नेट् सोढः सोढवान् । शकधृषेति तुमि सहते भोक्तुम् । उणादौ ऋञ्जिरञ्जीत्यसाने सहसानो वृद्धः २७९ । मस्यसीत्युरौ सहुरिर्भूः ९९९ । सहेः षप् चेति क्विपि षट् ९९१ । असित्यसि सहो बलम् ९९२ । षहण् मर्षणे । युजादेर्न वेति वा णिचि साहयति ।

महति कल्मेभ्यः परिभवम् ॥

वृत् ज्वलादिः । ज्वलादयो वृत्ताः समाप्ता इत्यर्थः ॥

अथ यजादयो नव श्विवर्ज्जा अनिटश्च वर्णक्रमेण दर्श्यन्ते । तत्रापि पूर्वाचार्यानुरोधेनादौ

991. यजीं देवपूजासंगतिकरणदानेषु । ईदित्वादीगित इति फलवत्कर्त्र्यात्मनेपदम् । अन्यत्र शेषात्परस्मायिति परस्मैपदम् यजते यजति । यजादिवशिति पूर्वस्य य्वृति इयाज । यजादिवचेरिति य्वृति इज्यते ईजे ईजुः । यङि यायज्यते । यङ्लुपि यायजीति यायष्टि । अनुस्वारेत्त्वान्नेट् यष्टा यष्टुम् । यजेर्यज्ञाङ्गे इति गत्वप्रतिषेधाद्घञि प्रयाजः अनुयाजः । यज्ञाङ्गादन्यत्र गत्वे यागः । त्यज्यजेति घ्यणि गत्वप्रतिषेधात् याज्यम् । अत एव वचनाद् घ्यणपि शकितकीति ये यज्यम् । णके याजकः । कर्मजा तृचा चेति निषिद्धोपि याजकादित्वात्षष्ठीसमासः नृपयाजकः । क्विपि यजसृजेति षापवादे ऋत्विग्दिगिति गे ऋतौ यजति ऋत्विक् । करणाद्यजो भूते इति णिनि अग्निष्टोमयाजी । सुयज इति ङ्वनिपि यज्वा । पूङ्यज इति शाने यजमानः । यजिजपीति यङन्ताद्वूके यायजनशीलो यायजूकः । यजिस्वपीति ने यज्ञः ।

आस्यटीति स्त्रियां भावे क्यपि इज्या। श्वादिभ्य इति क्तौ इज्यतेनया इष्टिः। उणादौ सुयजेति तौ यष्टिः ६४६। स्वर्तीत्युसि यजुरच्छन्दाः श्रुतिः ९९७॥

अथैदन्तास्त्रयः॥

992. वेंग् तन्तुसंताने। गित्त्वादीगित इति फलवत्कर्तर्यात्मनेपदमन्यत्र शेषात्परस्माायेति परस्मैपदम् वयते वयति। वेर्वयिति वा वयादेशे यजादिवशेति पूर्वस्य य्वृति उवाय उवयिथ। यजादिवचेरिति य्वृति न वयो यिति यस्य प्रतिषेधे ऊयतुः ऊयुः। वयादेशाभावपक्षे वेरय इति पूर्वस्य य्वृत्प्रतिषेधे ववौ। थवि सृजिदृशीति वा नेटि वविथ ववाथ। अविति वेति वा य्वृति द्वित्वे वार्णात्प्राकृतं बलीय इति पूर्वमुवादेशो समानदीर्घे च ऊवतुः ऊवुः। पक्षे ववतुः ववुः। अनुस्वारेत्त्वान्नेट् वाता वातुम् वातव्यम्। णौ पाशाछेति ये वाययति। ज्यश्च यपीति य्वृन्निषेधे प्रवाय उपवाय। य एचात इति ये वेयः पटः। उपसर्गादात इति डे प्रवः। तन्व्यधीति णे वायः। आतो ड इत्यत्र वावर्जनात्कर्मणोणि तन्तुवायः। मनि सुवामा। वनि सुवावा। क्वनिपि यजादीति य्वृति दीर्घमवं इत्यत्र वेगो वर्जनाद्दीर्घाभावे ह्रस्वस्येति तागमे सूत्वा। विचि सुवाः। क्विपि सूत्। क्ते यजादीति य्वृति दीर्घमवोन्त्यामित्यत्र वावर्जनाद्दीर्घाभावे उतः उतवान्। ऊयते इत्यत्र तु य्वृति दीर्घश्च्वियङिति दीर्घः। क्तौ उतिः। ऊतिरिति तु ऊयैङ् तन्तुसंताने इत्यस्य क्तौ। उणादौ वेगो डिदितीनौ वीनिः ६२८। सात्मनात्मनिति मनि निपातनात् वेमा वेम तन्तुवायोपकरणम् ९१६। विरिति तु वेतेर्डौ ६१६॥

993. व्येंग् संवरणे। संवरणमाच्छादनम्। व्ययते व्ययति। व्यस्यवृग्वीत्यात्त्वाभावे ज्याव्य इति पूर्वस्येत्वे संविव्याय। सृजिदृशीति थवि विकल्पापवादे ऋवृतीडि संविव्ययिथ। अत्र परोक्षाश्रयत्वेन बहिरङ्गमित्वमन्तरङ्गे दीर्घमिद्धमिति व्यादेरिति पूर्वस्य दीर्घाभावः। यजादिवचेरिति य्वृति अनेकस्वरस्येति यत्वे च संविव्यतुः संविव्युः। यमिरमीनीटि सेन्ते च अव्यासीन् अव्यासिष्टाम्। यङि व्येस्यम इति य्वृति संवेवीयते। यपि व्य इति य्वृन्निषेधे उपव्याय। संपर्योर्वा संव्याय संवीय परिव्याय परिवीय। क्ये वीयते। णौ पाशाछेति ये व्याययति। अनुस्वारेत्त्वान्नेट् संव्याता संव्यातुम्। य एचात इति ये व्येयम्। नीविरिति तु नयतेर्गेणादिके वौ ७०९॥

994. ह्वेंग् स्पर्धाशब्दयोः। ह्वयते ह्वयति। स्पर्धे इत्यात्मनेपदे मल्लो मल्लमाह्वयते। संनिविभ्यः संह्वयते निह्वयते विह्वयते। उपात् उपह्वयते। क्ये यजादि-

यचेरिति य्वृति आहूयते । ह्विवे ह्व इति य्वृति जुहाव जुहुवतुः । थवि सृजिदृशीति वा नेटि जुहोथ जुहविथ । सनि जुहूषति । यङि जोहूयते । णौ डसनीति य्वृति अजूहवत् जुहावयिषति । अत्र णौ विषये य्वृदिति पाशाछासेति योन्तो न भवति । पाशेति ये आह्वाययति । अनुस्वारेस्त्वाचेद् आह्वाता आह्वातुम् । अद्यतन्यां ह्वालिपि-त्यङि आह्वत् । आत्मने आह्वत आह्वास्त । उपसर्गादात इति डे आह्वः । तन्व्य-धीति णे ह्वायः । आतो ड इत्यत्र ह्वावर्जनात्कर्मणोणि स्वर्गह्वायः । ह्वः समाह्वया-ह्वयौ द्यूतनाम्नोरित्यलि निपातनात् समाह्वयः प्राणिद्यूतम् आह्वयः संज्ञा । न्यभ्युपवे-र्वाश्चोदित्यलि निहवः अभिहवः उपहवः । यङ्लुपि निजोहवः । आङो युद्धे आहवो युद्धम् । आह्वायोन्यः । आहावो निपानम् आहूयन्ते पानाय गावो यत्रेति आहावो निपानम् । भावेनुपसर्गात् हवः । कर्मणि घञि ह्वायः । उणादौ तीवरधीवरेति वराटे निपातनात् उपह्वरं संधिः ४४४ ॥

अथ पान्तः ॥

995. डुवपीं बीजसंताने । बीजानां संतानः क्षेत्रे विस्तारणम् । वपते वपति । नेङ्मदेति नेर्णस्वे प्रणिवपते । यजादिवशीति पूर्वस्य य्वृति उवाप । यजादिवचे-रिति य्वृति ऊपे । क्ये उप्यते । यङि वावप्यते । यङ्लुपि वावपीति वावप्ति । आसुयुवपीति यपवादे घ्यणि वाप्यम् । अलि वपः । कर्मणोणि बीजवापः । अनुस्वा-रेस्त्वाचेद् वप्ता उप्तः उप्तवान् । ड्वित्वात्त्रिमकि उप्त्रिमम् । घञि परिवापः । भिदा-दित्वादङि वपा मेदः । उप्तिरन्या । उणादौ आपावणीति पः वप्पः पिता २९६ । भीवृधीति रे वप्रः केदारः ३८७ । कमिवमीति णिदिः वापिः ६१८ । ह्यर्ती-त्युसि वपुः ९९७ ॥

अथ हान्तः ॥

996. वहीं प्रापणे । वहते वहति । नेङ्मदेति नेर्णस्वे प्रणिवहते । प्राद्वहः परेर्मृषश्चेति फलवत्कर्तर्यपि परस्मैपदे प्रवहति परिवहति । यजादिवशीति पूर्वस्य य्वृति उवाह । यजादिवचेरिति य्वृति ऊहे ऊहुः । क्ये उह्यते । यङि वावह्यते । यङ्लुपि वावहीति वावोढि । अनुस्वारेस्त्वाचेद् वोढा ऊढः ऊढवान् । घञि प्रवाहः । गोचरसंचरेति निपातनाद्घ्यपवादे घे वहो वृषस्कन्धः । वह्यं करणे इति निपातनाद्ये वह्यं शकटम् । वाह्यमन्यत् । ण्यन्तादचि वाहः । उदकस्य वाह उदवाहः । अत्र नाम्न्युत्तरपदस्येति उदादेशः । कूलाद्दुजोद्वह इति खशि कूलमुद्वहः समुद्रः । णौ करणेनटि वाहनम् । प्रगतानि वाहनानि यस्य स प्रवाहणः । अत्र पूर्वपदस्था-न्नाम्न्यग इति णत्वम् । अजा अस्मिन्नुह्यन्ते इति व्यञ्जनाद्घञि क्यापो बहुलं

नामीति ह्रस्वे च अजवाहो नाम ग्रामः । कर्तुर्जीवेति णमि पुरुषवाहं वहति । उणादौ वन्धिवहीतीत्रे वहित्रं वाहनं वहनं च ४५९ । वीयुसुवहिगिभ्यो निः वह्निः ६७७ । वहेर्ध चेल्युः वधूः ८३२ ॥

अथ परस्मैपदिनश्वयः ॥

997. ट्वोश्वि गतिवृद्ध्योः । श्वयति श्वयिता । क्ये यजादिवचेरिति य्वृति शूयते । वा परोक्षायङीति वा य्वृति शुशाव शिश्वाय । यङि शोशूयते शेश्वीयते । यङ्लुपि शौशवीति शोशोति शेश्वयीति शेश्वेति । णौ ङसन्परे श्वेर्येति वा य्वृति अशूशुवत् अशिश्वयत् शुशावयिषति शिश्वाययिषति । ऋदिच्छ्वीति वाङि श्वयत्यसूवचेति श्वादेशे अश्वत् । ट्धेश्वेर्वेति वा ङे अशिश्वियत् । पक्षे सिचि न श्विजागिति वृद्धेः प्रतिषेधाद्गुणे अश्वयीत् । य एचात इति ये श्वेयम् । ओदित्त्वात्सूयत्यादीति क्तयोस्तस्य नत्वे डीयश्वीतीड्भावे च शूनः शूनवान् । ट्वित्त्वादथुः श्वयथुः । स्त्रियां क्तौ शूतिः । क्त्वि श्वयित्वा । क्त्वेति किस्त्वाभावादत्र गुणः । उणादौ श्वन्मातरिश्वन्नित्यनि निपातनात् श्वा मातरिश्वा ९०२ ॥

998. वद व्यक्तायां वाचि । वदति । दीप्तिज्ञानेत्यात्मनेपदे वदते विद्वान् स्याद्वादे वदन्दीप्यते इत्यर्थः । व्यक्तवाचां सहोक्तौ संप्रवदन्ते द्विजाः । विवादे वा विप्रवदन्ते विप्रवदन्ति वा मौहूर्तिकाः । अनोः कर्मण्यसति अनुवदते कठः कालापस्य । वदोपादिति फलवत्कर्तरि अपवदते । अन्यत्र अपवदति । यजादिवचेरिति य्वृति क्ये उद्यते । यजादिवश्चेति पूर्वस्य य्वृति उवाद । स्क्रसृवृभृस्तुद्रुस्रुश्रुवो ऽपरोक्षायामिति उवदिथ । वदव्रजेति वृद्धौ अवादीत् । णावीगित इति फलवत्कर्तर्यात्मनेपदे ऽणिगि प्राणीति परस्मैपदेनापोदिते परिमुहेति पुनर्विहिते वदति चैत्रः वादयते चैत्रं मैत्रः । अत्र गतिबोधेत्यणिक्कर्तुः कर्मत्वम् । फलवतोऽन्यत्र शेषात्परस्मायिति परस्मैपदे वादयति चैत्रं मैत्रः । वदिता वदितुम् । ऋवर्णेति घ्यणि वाद्यम् । वर्योपसर्येति निपातनाद्ये अवद्यं गर्ह्यम् । अनुद्यमन्यत् । नाम्नो वदः क्यप् च ब्रह्मोद्या कथा । घे ब्रह्मवद्या । रोयमृषोद्ये इति निपातनात् क्यपि मृषोद्यम् । अचि वदः । चराचरेति निपातनात् वदावदः । लिहादयाच्चि श्लोकवदः । प्रियवशाद्वद इति खे प्रियंवदः वशंवदः । संपरिव्यनुप्राद्वद इति घिनणि संवदनशीलः संवादी । एवं परिवादी । वादेश्च णक इति णौ णके परिवादनशीलः परिवादकः । यजिजपीति यङन्ताद्वूके वावदूकः । घञि वादः । मनादित्वादिटि उदितिः । क्त्वि उदित्वा । गत्यर्थेति गतित्वे गतिक्वन्यस्तत्पुरुष इति समासे-ऽक्त्वो यपि अभ्युद्य । उणादौ वदिमनिभ्यामान्यः वदान्यो दाता

प्रियवाक् च ३८१ । प्रवन्य इति तु वदने साधुरिति तु साधौ ये । भुमिति णितीत्रे वादित्रमातोद्यम् ४६० । कमिवमीति णिदिः वादिर्वाग्मी ६१८ । मावावदीति से वत्सः ५६४ ॥

999. वसं निवासे । वसति । यजादिवशीति पूर्वस्य य्वृति उवास । यजादिवचेरिति य्वृति घस्यस इति षत्वे ऊषतुः ऊषुः । क्ये उष्यते । उपान्वध्याङ्वस इत्याधारस्य कर्मत्वे ग्राममुपवसति अनुवसति अधिवसति आवसति । अन्वादिसाहचर्याद्वासार्थस्यैवोपस्य ग्रहणम् । तेन भोजननिवृत्त्यर्थेनोपेन योगे कर्मत्वं न भवति । यद्वा नात्र वसेरुपपूर्वस्य ग्राम आधारः किं तु वसेः । ग्रामे वसंस्त्रिरात्रमुपवसतीत्युपवस्याधारस्य त्रिरात्रस्य कर्मता स्यादेव । यवि सृजिदृशीति वा नेटि उवस्थ उवसिथ । णावीगित इत्यात्मनेपदेणिगि प्राणीति परस्मैपदेनापोदिते परिमुहेति फलवत्कर्तरि पुनर्विहिते वसति चैत्रः वासयते चैत्रं मैत्रः । अत्र गतिबोधेत्यणिक्कर्तुः कर्मत्वम् । अनुस्वारेत्त्वात्सेट् निवत्स्यति वस्तुम् । क्षुधवसस्तेषामितीटि उषितः उषितवान् उषित्वा । अत्र क्षुधक्लिशेति क्त्वः किरवाद्यजादीति य्वृत् । वच्याय्यधेति कर्तरि निपातनाद्घ्यणि वास्तव्यः । वाधारे इति घ्यणि वा निपातनात् अमावस्या अमावास्या । अजातेः शीले इति णिनि शयवासीति सप्तम्या वालुपि ग्रामवासी ग्रामेवासी । भुसदेति भूते वा परोक्षा अनूवास । पक्षे अन्ववात्सीत् अन्ववसत् । तत्र क्वसुकानाविति क्वसौ घसेकस्वरेतीटि अनूषिवान् गुरु शिष्यः । संप्राद्वसादिति घिनणि संवसनशीलः संवासी । एवं प्रवासी । उणादौ तृजीत्यन्ते वसन्तः २२१ । उपसर्गाद्वस इत्यथे आवसथः २३३ । भेषजादित्यणि आवसथ्यम् । व्याधेति ने वस्नं वस्नं मूल्यं च २९८ । कृज्यजीति किति रे उस्रो रश्मिः । बाहुलकात्पत्वाभावः ३८८ । णौ कृच्चिपटीत्यरे वासरः ३९७ । भीज्यजीति सरे वत्सरः ४३९ । कृशृकुटीति वा णिदिः वासिः । इयाम् वासी तक्षभाण्डम् । वसिः शय्या ६११ । ब्रुजेति तौ वस्तिर्मेढ्रोर्ध्वं वस्त्रदशाः गुदं क्षेत्रनोमकरणं च ६४६ । खल्यमीत्यती वसतिः ६५३ । वस्यर्तिभ्यामातिः वसातयो राष्ट्रम् ६६२ । भृमृत्रित्यौ वसु द्रव्यम् ७१६ । वसेर्णिद्वेति तुनि वस्तु पदार्थः । वास्तु गृहं गृहभूमिश्च ७७४ । उच इति कुरोर्मिथिरत्नीति किल्यसि ९७१ । वसिक् आच्छादने । वस्ते । वसूङ् स्तम्भे । वस्यति । उणादौ दम्यमीति ते वसन्तागः २०० । वस्निंग् अर्दने हत्यस्य याति । वसण् क्षेत्रच्छेदावरणेषु । वासयति ॥ वृन् यजादिः । वर्तिताः समाप्तिता यजादय इत्यर्थः ॥

अथ घटादयो वर्णक्रमेणाश्वादिसमाप्तेर्वक्ष्यन्ते । तत्र घटेः पूर्वाचार्यप्रसिद्ध्या पूर्वं निर्देशः ॥

1000. घटिष् चेष्टायाम् । चेष्टेहा । इदित्त्वादिङित इत्यात्मनेपदे घटते जघटे । सनि जिघटिषते । यङि जाघट्यते । क्ते घटितम् । णौ घटादेर्ह्रस्व इति ह्रस्वे घटयति । दीर्घस्तु वा ञिणम्परे अघाटि अघटि घाटिष्यते घटिष्यते घाटं घाटम् घटं घटम् । णिवेत्त्यासेत्यने घटना । षित्त्वादङि घटा ॥ इह घटादीनामनेकार्थत्वेपि पठितार्थेष्वेव घटादिकार्यविज्ञानम् । तेन उद्घाटयति ।

कमलवनोद्घाटनं कुर्वते ये ॥

प्रविघाटयिता समुत्पतन्हरिदश्वः कमलाकरानिव ॥

उद्घाटितः कपाटः । श्रापयति स्मारयति दारयति नाटयति फाणयति छादयति प्रमादयति चालयतीत्यादौ चेष्टाद्यर्थाभावे घटादेर्ह्रस्व इति ह्रस्वो न भवति । विघटयतीति त्वजन्तस्याऽन्तस्थ वा णिज् बहुलं नाम्न इति करोत्यर्थे णिचि रूपम् । अन्ये तु ये घटादयोन्यत्र पठितास्तेषां योर्थ उपात्तस्तत्रैव ह्रस्वादिकार्यं ये त्वत्रैव पठ्यन्ते तेषां सामान्येनानेकार्थत्वादिति ब्रुवते । तन्मते विघटयतीति चेष्टाभावे ह्रस्वः स्यादेव । कमलवनोद्घाटनम् । प्रविघाटयिता समुत्पतन्नित्यादि तु चुरादौ भासार्थस्य घटेर्णिचि यमिञ्ञाचमिवर्जितस्य घटादिकार्यनिषेधाद्ध्रस्वाभावे रूपम् । यथा शमिणो णिचि निशामयते चेष्टार्थस्यैव वा घञन्तस्य णिचि । इत्थं च ।

उच्छामिनाखिलमहीधरकंधरस्य ॥

चौरस्योत्क्राथयतीत्यादि सिद्धम् । संक्रामयतीति तु संक्रामं करोतीति णिचि । शकधृषेति तुमि घटते भोक्तुम् । अचि घटः । इह घटादौ केप्यन्यैवाधीताः प्रकृत्यादिकार्यभाजो न्याय्यशास्त्रप्रत्ययाश्च । अन्ये तु स्वस्थानोक्तकार्यभाजः पित्त्वाद्ध्रस्वाद्यर्थमनूद्यन्त इति यथायथमुल्लेख्यम् ॥

अथ जान्तः ॥

1001. क्षजुङ् गतिदानयोः । उदित्त्वात्से क्षञ्जते चक्षञ्जे क्षञ्जिता । क्ते क्षञ्जितः । क्तेट इत्यः क्षञ्जा । णौ क्षञ्जयति । घटादिपाठबलाण्णौ ञिणम्परेनेकव्यञ्जनव्यवधानेपि वा दीर्घे अक्षाञ्जि अक्षञ्जि क्षाञ्जं क्षाञ्जम् क्षञ्जं क्षञ्जम् । एवं कन्दिक्रन्दिक्लन्दिदक्षीणां ज्ञेयम् । अत एव णौ ञिणम्परे ह्रस्वमाविकल्प्य दीर्घविकल्पः । क्षनुण् कृच्छ्रजीवने । क्षञ्जयति । कौशिकस्तु क्षजी विपर्ययेगाधीते ॥

अथ यान्तौ ॥

1002. व्ययिष् भयचलनयोः । दुःखेप्यन्ये । व्ययते । ज्याम्लेव्यर्थानि पूर्व-

व्येत्वे विव्यथे । व्यथिता । णौ घटादेरिति ह्रस्वे व्यथयति । ञिणम्परे तु वा दीर्घे अव्याथि अव्यथि व्याथं व्याथम् । व्यथं व्यथम् ।।ऋच्याव्यथ्येति कर्तरि निपातनाद्ये अव्यथ्यः । भावे घ्यणि अव्याथ्यम् । ग्रहादित्वाण्णिनि अव्याथी । जीण्दृक्षीतीनि अव्यथनशीलोऽव्ययी । इडित इत्यने व्यथनः । षित्त्वादङि व्यथा । उणादौ भगुरे- त्युरे निपातनात् विथुरो राक्षसः ४२६ । नञो व्यथेरिति टितीषे अव्याथिषः सूर्यः । अव्यथिषी भूः ५५२ ॥

1003. प्रथिष् प्रख्याने । प्रख्यानं प्रसिद्धिः । प्रथते पप्रथे प्रथिता । णौ घटादित्वाद्ध्रस्वे प्रथयति । णौ ङे सन्वद्भावापवादे स्मृदृत्वरेति पूर्वस्यात्वे अप- प्रथत् । ञिणम्परे तु वा दीर्घे अप्राथि अप्रथि प्राथं प्राथम् प्रथं प्रथम् । षित्त्वादङि प्रथा । उणादौ सृणीकास्तीकेतीके निपातनात् पृथ्वीकैला [५०] । सृपृप्रथीत्यमे प्रथम- ३४७ । प्रथेरिवद् पृथ् च पृथिवी ५२१ । प्रथेर्लुक् च वेति तौ प्राति चाति प्रत्तिः प्रथनम् ६४७ । रभिप्रथिभ्यामृच रस्येत्यौ पृथुः ७३० । कुत्सितादौ कापि पृथुकः ॥

अथ दान्ताः पञ्च ॥

1004. म्रदिष् मर्दने । म्रदते मम्रदे म्रदिता । णौ घटादित्वाद्ध्रस्वे म्रदयति । स्मृदृत्वरेति सन्वद्भावापवादे पूर्वस्यात्वे अमम्रदत् । षित्त्वादङि म्रदा । उणादौ मृद्वीका मृदीका चेति मृदेर्वोऽन्तश्च वेतीके मृद्वीका: ४१ । एवं मृदुः ७२१ ॥

1005. स्खदिष् खदने । खदनं विदारणम् । स्खदते चस्खदे स्खदिता । षित्त्वादङि स्खदा । णौ घटादित्वाद्ध्रस्वे स्खदयति ॥

1006. कदुङ् 1007 क्रदुङ् 1008 क्लदुङ् वैक्लव्ये । विक्लवः कातर- स्तस्य भावः कर्म वा वैक्लव्यम् । वैकल्ये इति चन्द्रः । उदित्त्वान्ने कन्दते क्रन्दते क्लन्दते । कोट इत्य' कन्दा क्रन्दा क्लन्दा । णौ कन्दयति । ञिणम्परे तु वा दीर्घः अकान्दि अकन्दि कान्दं कान्दम् कन्दं कन्दम् । एवं शेषयोरपि । क्रन्देर्नन्द्यादिने संक्रन्दनः । इडित इत्यने आक्रन्दनः । घञि आक्रन्दः । त्रयोऽप्येतेनुदितः वित- श्चेति मन्दी । कदते क्रदते क्लदते कदा क्रदा क्लदा । कदु क्रदु क्लदु रोदनाह्वानयोः । कन्दति क्रन्दति क्लन्दति ॥

अथ पान्तः ॥

1009. क्रपि कृपायाम् । क्रपते चक्रपे क्रपिता । णौ घटादित्वाद्ध्रस्वे क्रपयति । मृगयेच्छेति निपातनादङि कृपा । कृपण इति तु कृपूमिति क्लियते कृपेः [ उणादौ १८८ ] ॥

अथ रान्तः ॥

1010. ञित्वरिष् संभ्रमे । संभ्रमोऽत्राशुकारिता । त्वरते तत्वरे त्वरिता । यङि तात्वर्यते । यङ्लुपि तात्वरीति । मव्यवीति वस्योपान्त्येन सहोटि तातूर्ति । षित्त्वादङि त्वरा । णौ घटादित्वाद्ध्रस्वे त्वरयति । ङे सन्वद्भावापवादे स्मृदृत्वरेति पूर्वस्यात्वे अतत्वरत् । ञीत्त्वाज्ज्ञानेच्छेति सति क्ते श्वसजपेति वा नेटि त्वरितः । पक्षे मव्यवीति वस्योपान्त्येन सहोटि तूर्णः । तूर्णिरिति तु तूरेः कावावीति णौ [ उणादौ ६३४ ] ॥

अथ सान्तः ॥

1011. प्रसिष् विस्तारे । प्रसवे इत्यन्ये । प्रसते पप्रसे प्रसिता । षित्त्वादङि प्रसा । णौ घटादित्वाद्ध्रस्वे प्रसयति ॥

अथ क्षान्तः ॥

1012. दक्षि हिंसागत्योः । दक्षते ददक्षे दक्षिता । क्वोट इत्यः दक्षा । दक्षि शैघ्र्ये चेत्यस्यैवार्थभेदात् । घटादिकार्यार्थं पुनः पाठः । णौ दक्षयति । ञिणम्परे तु वा दीर्घः अदाक्षि अदक्षि दाक्षं दाक्षम् दक्षं दक्षम् ॥

अथ परस्मैपदिनः ॥

1013. श्रां पाके । श्रै पाके । श्रांक् पाके इत्यस्य चेह घटादिकार्यार्थं पाठः । श्रायति श्राति वा कश्चित् । तमन्यः प्रयुङ्क्ते श्रपयति । श्रायति श्राति वा हविः स्वयमेव । तदन्येन प्रयुज्यमेति णौ घटादित्वाद्ध्रस्वे क्ते श्रपेः प्रयोक्त्रैक्ये इति शृतादेशे शृतं हविः क्षीरं वा चैत्रेण । अन्यत्र श्रापयति घर्मः स्वेदयतीत्यर्थः ॥ अत एव ज्ञापकादनेकार्थत्वं धातूनां सिद्धम् ॥

अथ ऋदन्तः ॥

1014. स्मृं आध्याने । आध्यानमुत्क वा स्मरति । घटादित्वाद्ध्रस्वे स्मरयति । आध्यानादन्यत्र मित्रं स्मारयति विस्मारयति । अन्यत्रोक्तस्यार्थविशेषे घटादिकार्यार्थमिह पाठः ॥

अथ ॠदन्तौ ॥

1015 दृ भये । दरति युवर्णेत्यलि दरः । णौ घटादित्वाद्ध्रस्वे दरयति बलम् । भयादन्यत्र काष्ठं दारयति । उणादौ भृमृत्र्यादि दरदाद्या जनपदः ८९४ । दॄश् विदारणे । दृणाति दारयति काष्ठम् । अस्यैव घटादिकार्यार्थमिह पाठ इत्यन्ये । दीर्यते इति कर्मकर्तरि दिवादावप्ययमन्यैः पठ्यते । तन्मते कर्तर्यपि दीर्यते ॥

1016. नॄ नये । क्र्यादेर्घटादिकार्यार्थं भिन्नोऽस्य पाठः । नृणन्तं प्रयुङ्क्ते नरयति ॥

अथ कान्ताश्चत्वारः सेटश्च ॥

1017. ष्टक 1018 स्तक प्रतीघाते । षः स इति सत्वे स्तकति । णौ घटादित्वाद्ध्रस्वे सनि षोपदेशत्वात्षत्वे तिष्टकयिषति ॥

1018. स्तक । स्तकति । णौ घटादित्वाद्ध्रस्वेषोपदेशत्वात्षत्वाभावे तिस्तकयिषति ॥

1019. चक तृप्तौ च । चकारात्प्रतीघाते । चकति । णौ घटादित्वाद्ध्रस्वे चकयति । क्ते चकितः । उणादौ कठिचकीभ्यामोरे चकोरः ४२३ । चकि तृप्तिप्रतीघातयोः । चकते ॥

1020. अक कुटिलायां गतौ । अकति । णौ घटादित्वाद्ध्रस्वे अकयति । अनोकह इति स्वनिर्देशोकहे [ उणादौ ९१९ ] ॥

अथ खान्तः ॥

1021. कखे हसने । कखति । एदित्वाद्व्यञ्जनादेरिति वा वृद्धेर्न श्विजागृणीति प्रतिषेधे अकखीत् । णौ घटादित्वाद्ध्रस्वे कखयति । किखिरिति तु कोर्डिखिरिति कीतेः [ उणादौ ६२६ ] ॥

अथ गान्ता नव सेटश्च ॥

1022. अग अकवत् । अक कुटिलायां गतौ पठितोयमपि तदर्थो लाघवार्थं तथा निर्दिश्यते । अगति । णौ घटादित्वाद्ध्रस्वे अगयति । उणादौ भीवृधीति रे अग्रम् ३८७ । वीयुसुवहीति नौ अग्निः ६७७ ॥

1023. रगे शङ्कायाम् । रगति । एदित्वाद्व्यञ्जनादेरिति वा वृद्धेर्न श्विजागृणीति प्रतिषेधे अरगीत् । णौ घटादित्वाद्ध्रस्वे रगयति ॥

1024. लगे सङ्गे । लगति । एदित्वाद्व्यञ्जनादेरिति वा वृद्धेर्न श्विजागृणीति प्रतिषेधे अलगीत् । णौ घटादित्वाद्ध्रस्वे लगयति । क्षुब्धविरिब्धेति क्ते निपातनात् लग्नः सक्तः । लगितोन्यः ॥

1025. ह्गे 1026 ह्लगे 1027 षगे 1028 सगे 1029 ष्टगे 1030 स्थगे संवरणे । संवरणमाच्छादनम् । ह्गति । एदित्वाद्व्यञ्जनादेरिति वा वृद्धेर्न श्विजागृणीति प्रतिषेधे अह्गीत् । णौ घटादित्वाद्ध्रस्वे ह्गयति ॥

1026. ह्लगे । ह्लगति अह्लगीत् ह्लगयति ॥

1027. षगे । षः स इति सत्वे सगति असगीत् सगयति । षोपदेशत्वात्षत्वे सिषगयिषति ॥

1028. सगे । सगति असगीत् सगयति सिसगयिषति ॥

1029. ष्ठगे । षः स इति सत्वे स्थगति अस्थगीत् स्थगयति । षोपदेशत्वा-त्षत्वे तिष्ठगयिषति ॥

1030. स्थगे । स्थगति अस्थगीत् स्थगयति । षत्वाभावे तिस्थगयिषति ॥

अथ टान्तास्त्रयः सेटश्च ॥

1031. वट 1032 भट परिभाषणे । वटति वटयति । भटति भटयति । वट वेष्टने । वाटयति । भट भृतौ । भाटयति ॥

1033. णट नतौ । नटति । घटादित्वाद्ध्रस्वे नटयति शास्त्रम् । नृतौ तु नाट-यति । नटण् अवस्यन्दने । चौरस्योन्नाटयति ॥

अथ डान्तास्त्रयः सेटश्च ॥

1034. गड सेचने । गडति । लत्वे गलति । णौ घटादित्वाद्ध्रस्वे गडयति । अपि गडयतीति गडः ।

सुखं स्यापिति गौर्गडी ॥

उणादौ मृजिभूषदीत्यन्ते गडयन्तः गडयन्ती २२१ । कडार इति तु कडते-रग्यङ्गीत्यारे ४०९। कडत्रम् कलत्रमित्यपि वृभक्षीत्यत्रैस्यैव ४५६ ॥

1035 हेड वेष्टने । हेडति जिहेड हेडिता । णौ घटादित्वाद्ध्रस्वे हिडयति । ह्रस्वविधानबलादेव गुणो नास्ति । ञिणम्परे तु वा दीर्घे अहीडि अहिडि हीडं हीडम् हिडं हिडम् । ये तु णौ ञिणम्परे ह्रस्वमेव विकल्पयन्ति तन्मते अहिडि अहेडि हिडं हिडम् हेडं हेडम् ॥

1036. लड जिह्वोन्मन्थने । जिह्वाया उन्मन्थनं जिह्वोन्मन्थनम् । णौ घटा-दित्वाद्ध्रस्वे लडयति जिह्वां कुक्कुरः । लत्वे ।

जिह्वाग्रतान्युल्ललयत्यभीक्ष्णम् ॥

अन्यत्र लाडयति चित्रम् । लालयति बालम् । लालितः । लालितकः सेवकः । लालना लाला । जिह्वोन्मन्थनयोरित्येके । तन्मते संयमार्थं जिह्वा च जिह्वाविषया क्रियोन्मन्थनं चेति समाहारः । लडयति जिह्वाम् । ललयति दधि । लडण् उपसे-वायाम् । लाडयति । लड विलासे इत्यस्यैवार्थविशेषे घटादिकार्यार्थमिह पाठः ॥

अथ णान्ताः षट् सेटश्च ॥

1037. फण 1038 कण 1039 रण गतौ । कणति । णौ घटादित्वाद्ध्रस्वे फणयति । जृभ्रमेति वेत्वे हित्वाभावे च फेणतुः पफणतुः फेणुः पफणुः । यमि स्यमृषिर्णादि फेणिथ पफणिथ । सुप्रतिविदित्येति क्ते निपातनादनायामे फाण्टाभि-रिड्दरावामेदिति कतुन्त्वाभिरित्यनायामो गम्यते । आयामे तु फणितम् ॥

**1038.** **कण** । कणति । णौ घटादित्वाद्ध्रस्वे कणयति । णावचि कणयतीति कणः । कणेमनस्तृप्ताविति सूत्रनिर्देशादेत्वे कणेहत्य पयः पिबति श्रद्धाघातं कृत्वेत्यर्थः । तृप्तेरन्यत्र गतित्वाभावे कणे हत्वा मूषिकां गतः ॥

**1039.** **रण** । रणति । णौ घटादित्वाद्ध्रस्वे रणयति । गतेरन्यत्र फाणयति घटं निःस्नेहयतीत्यर्थः । काणयति राणयति शब्दयतीत्यर्थः । काणिरणी पूर्वाधीतौ घटादिकार्यार्थमिह पठितौ ॥

**1040.** **चण** हिंसादानयोश्च । हिंसायां दाने चकाराद्गतौ । चणति । णौ घटादित्वाद्ध्रस्वे चणयति । शब्दे तु चाणयति । उणादौ तृकृन्त्रियके चणकः २७ ॥

**1041.** **शण** **1042** **श्रण** दाने । शणति । घटादित्वाद्ध्रस्वे शणयति । घञि शाणः ॥

**1042.** **श्रण** । श्रणति । णौ ह्रस्वे श्रणयति । दानादन्यत्र शाणयति श्राणयति । श्रणण् दाने । विश्राणयति ॥

अथ थान्ताश्चत्वारः सेटश्च ॥

**1043.** **स्नथ** **1044** **क्नथ** **1045** **क्रथ** **1046** **क्लथ** हिंसार्थाः । स्नथति स्नथयति । क्नथति क्नथयति । क्रथति क्रथयति । चौरस्योत्क्राथयतीति तु यौजादिकस्य घञन्ताद्वा णिचि जासनाटक्राथेति निर्देशाद्वा ह्रस्वाभावे ॥

**1046.** **क्लथ** । क्लथति क्लथयति ॥

अथ दान्तौ सेटौ च ॥

**1047.** **छद** ऊर्जने । ऊर्जनं प्राणनं बलं च । छदण् संवरणे इति पठिष्यमाणोऽप्यूर्जने घटादिकार्यार्थमिह पठितः । छदयत्यग्निः स्वार्थे णिच् । छादयन्तमयुङ्क्त इति णिग्वा । ऊर्जनादन्यत्र छादयति गृहं तृणैः ॥

**1048.** **मदै** हर्षग्लपनयोः । मदैच् हर्षे इत्ययमनयोरर्थयोर्घटादिकार्यार्थमिह पठितः । मदयति गुरुं शिष्यः । मदयति सुरा चैत्रम् हर्षयतीत्यर्थः । अन्यत्र मदयति शत्रुम् विमदयति शत्रुम् ग्लपयतीत्यर्थः । अन्यत्रानेकार्थत्वादुन्मादयति प्रमादयति ॥

अथ नान्ताः पञ्च सेटश्च ॥

**1049.** **ष्टन** **1050** **स्तन** **1051** **ध्वन** शब्दे । पः स इति सत्वे स्तनति । स्तनयति । षोपदेशत्वान्नाम्यन्तस्थेति षत्वे तिष्टनयिषति ॥

**1050.** **स्तन** । स्तनति स्तनयति । अषोपदेशत्वात्षत्वाभावे तिस्तनयिषति ॥

**1051.** **ध्वन** । ध्वनति ध्वनयति दध्वान ध्वनयन्त्याशाः । अन्यौ पूर्वपठितावप्यर्थविशेषे घटादिकार्यार्थमिहाधीतौ । अनेकार्थत्वादर्थान्तरे स्तानयति । शब्देऽपि स्तानयतीत्यन्ये । ध्वानयति ॥

1052. स्वन अवतंसने । स्वनति । णौ ह्रस्वे स्वनयति अवतंसयतीत्यर्थः । जृभ्रमेति वैत्वे द्वित्वाभावे च स्वेनतुः सस्वनतुः स्वेनुः सस्वनुः । पूर्वपठितस्याप्यस्यार्थविशेषे घटादिकार्यार्थमिह पाठः । शब्दे तु स्वानयति ॥

1053. चन हिंसायाम् । चनति । णौ ह्रस्वे चनयति । शब्दे तु चानयति । पूर्वपठितोप्ययमर्थविशेषे घटादिकार्यार्थमिहाधीतः ॥

अथ रान्तः सेट् च ॥

1054. ज्वर रोगे । ज्वरति । णौ ह्रस्वे ज्वरयति । ञिणम्परे तु वा दीर्घे अज्वारि अज्वरि ज्वारं ज्वारम् ज्वरं ज्वरम् । रुजार्थस्येत्यत्र ज्वरेर्वर्जनाद्वा कर्मत्वाभावे द्वितीयैव न तु षष्ठी चौरं ज्वरयति ज्वरः । यङि जाज्वर्यते । यङ्लुपि जाज्वरीति जाजूर्ति । क्ते ज्वरितः । क्विपि मव्यवीति वस्योटि जूः । क्तौ जूर्तिः । समः पृचैचिति घिनणि संज्वरणशीलः संज्वारी । उणादौ कावावीति णौ जूर्णिर्ज्वरः ६३४ ॥

अथ लान्ताश्चत्वारः सेटश्च ॥

1055. चल कम्पने । चलति । णौ ह्रस्वे चलयति शाखाम् । कम्पनादन्यत्र चालयति सूत्रम् पर्यनुयुङ्क्ते । चालयति शीलम् हरतीत्यर्थः । ज्वलादौ पठितोप्ययं घटादिकार्यार्थमिह पठ्यते ॥

1056. ह्मल 1057 ह्मल चलने । ह्मलति ह्मलिता । णौ ह्रस्वे विह्मलयति प्रह्मलयति । अचि विह्मलः ॥

1057. ह्मल । ह्मलति ह्मलिता । णौ ह्रस्वे प्रह्मलयति । ज्वलह्वलेत्यनुपसर्गस्य वा ह्रस्वे ह्मलयति ह्मालयति ह्मलयति ह्मालयति ॥

1058. ज्वल दीप्तौ च । चकाराच्चलने । प्रज्वलयति संज्वलयति । ज्वलह्वलेत्यनुपसर्गस्य वा ह्रस्वे ज्वलयति ज्वालयति । ज्वलादौ पठितोप्ययं घटादिकार्यार्थमिहाधीतः । केचित्तु टलिचलिस्खलिक्षपित्रपीणामपि घटादित्वमिच्छन्ति । तन्मते टलयति चलयति स्खलयति क्षपयति त्रपयतीत्यपि भवति ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञशब्दानुशासनधातुपारायणे श्रीतस्गिङ्कः प्रक्रियाकरणो निरनुबन्धो भ्वादिगणः संपूर्णः ॥

1 अद 2 प्साक्ट भक्षणे । इहाविकरणेषु वर्णक्रमेण धातुषु पठितेषु पूर्वाचार्यप्रसिद्ध्यनुसरणेनादेरादावुपन्यास । क्लिकरणमदादिज्ञापनार्थं सर्वत्र ज्ञेयम् । शेषात्परस्मायैति परस्मैपदे कर्तर्यनञ्च इत्यदादिवर्जनाच्छवभावे च अत्ति । शतरि अदन् । ऋदुदित इति घुटि नकार ।अदती । क्रियाव्यतिहारे इत्यात्मनपदे व्यत्यत्ते । घस्ल सनीति घस्लादेशे जिघत्सति । लृदित्त्वादङि अघसत् । परोक्षाया न वा जघास जक्षतु जक्षु । अत्र गमहनेत्युपान्त्यलुक्यघोषे इति घस्य कत्वे नाम्यन्तस्थेति षत्वम् । थवि स्क्रसृवृतीटि जघसिथ । पक्षे आद आदतु आदु । थवि सृजिदृशीति विकल्पापवादे ऋवृव्येद इतीटि आदिथ । अदश्चाडिति दिस्योरादिरट् आदत् आद । अनुस्वारेत्त्वान्नेट् अत्ता अत्स्यति । णौ गतिबोधेत्यत्रादेर्वर्जनादणिकर्तु कर्मत्वाभावे आदयते पिण्डी चैत्रेण । अत्र चल्याहारार्थेति फलवत्कर्तर्यपि परस्मैपदापवाद परिमुहायमेत्यात्मनेपदम् । यपि चाद इति जग्धादेशे क्ति जग्ध्वा प्रजग्ध्य गत । क्तौ जग्धि । अद्यर्थाच्चेति वाधारे क्ते इदमेषा जग्धम् । पक्षे कर्मणि क्ते जग्धमन्नम् । भावे जग्धमनेन । अन्नमिति त्वदोनन्नादिति निर्देशादनेर्वा व्याधेति ने रूपम् [ उणादौ २९८ ] । अचि प्रघस । अदोनन्नादिति क्विपि आमात् । कर्मणोणि अन्नाद । क्रव्यात्क्रव्यादावामपक्वादौ क्रव्यादाममासादौ । क्रव्याद पक्वमासादौ । सघस्थद इति मरकि अदनशीलोद्मर । भृश्यदोल विघस । उपसर्गाभावे घञि घास । न्यादो न वा न्याद निघस । नन्द्यादित्वादने काकादन । गौरादित्वाड्ङ्याम् काकादनी । तत्रैव पाठात् गवादन । उणादौ ताड्विवड्वीति रि अद्रि ६१२ । राशादीति त्रि अत्त्रि ६९६ । अदेस्त्रिन् अत्त्यृपि अत्त्रिणी ९२१ । अदेरन्ध च वेत्यसि अन्ध कूरम् । पक्षे अद असौ ९६३ । अधेति त्वमेर्धनेति क्वनिप्यतते ९०९ । अत्रुरित्यपि जनिहनिशयनेर्स्त चेति रुमत्ययेर्ते ८०९ । क्षीरमित्यपि घसिवद्वीति कितीरे घसते ४१९ ॥

अथादन्ताश्चतुर्दशानिट्श्च ॥

2 प्साक् । प्साति । नेर्ङ्मादेति नेर्णत्वे प्रणिप्साति । पप्सौ । अनुस्वारेत्त्वान्नेट् प्साता प्सातुम् । य एधात इति ये प्सेयम् । उपसर्गादात इति डे प्रप्स । तन्व्यधीति णे प्साय । उणादौ श्वन्मातरिश्वनित्यनि निपातनात् विश्वप्सानि कालश्च ९०२ ॥

3 भाक् दीप्तौ । भाति बभौ । अनुस्वारेत्त्वान्नेट् भाता भातुम् । अनटि न ख्यापूगिति प्रतिषेधात्स्वरादिति णेर्वेति च णत्वाभावे प्रभानम् प्रभापना । शतरि

श्यामवर्णादश्च इति वान्त इत्यादेशे भाती भान्ती स्त्री । स्थापवाद उपसर्गादात इत्यङि प्रभा विभा । मृगयेच्छेति निपातनादङि भा । भा भासावीति तु भासे क्विपि । उणादौ दाभाभ्या नु भानु ७८६ । भातेर्डवतु भवान् । स्त्रियामुदित्त्वाद् ङ्याम् भवती ८८६ ॥

4 याक् प्रापणे । याति । नेर्ङ्गदेति नेर्णत्वे प्रणियाति । ययौ । वा द्विषेति शिटनो वा पुसि इडेदित्याप्लुकि अयु । पक्षे अयान् । यमिरमीतीडि सेन्ते च अयासीत् अयासिष्टाम् । अवर्णादश्न इति वान्तादेशे याती यान्ती स्त्री कुले वा । अनुस्वारेत्त्वादिट् याता यातुम् । यायावर इति निपातनाद्यङन्ताद्वरे यायायनशीलो यायावर । गत्यर्थेति वा कर्तरि क्ते सयात उपयात वियात । अजाते शीले इति णिनि प्रयायी । गम्यादिरित्याद्भत्स्यर्थेति साधु । णिन् चावश्यकेति णिनि यायी । उणादौ हुयामेति त्रे यात्रा ४५१ । यापाभ्या द्वे चेति किदी ययी रवि ७१४ । हनियेति किल्यौ द्विते च ययुश्च ७३३ । पीमृगमित्रदेवकुमारलोकधर्मविश्वसुखादमायेभ्यो य इति किल्यौ पीयुरलूक । मृगयुर्याध इत्यादि ७४१ । कृसिकमीति तुनि यातु राभस ७७३ । अर्त्तीरीति मे याम ३३८ । मनिति मनि यामा ९११ । बहुव्रीहौ सुयामा नाम कश्चित् ॥

5 वाक् गतिगन्धनयोः । वाति ववौ । अनुस्वारेत्त्वादिट् वाता वातुम् । णौ वो विधूनने इति जे पक्षेणोपवाजयति । विधूननादन्यत्रार्त्तिरीति पौ वापयति केशान् । निर्वाणमवाते इति निपातनात् क्तस्य नत्वे निर्वाणो भिक्षु । वाते तु निर्वातो वात निर्वात वातेन । अवर्णादश्न इति वान्तादेशे वाती वान्ती स्त्री कुले वा । उणादौ कृवापाजीत्युणि वायु १ । दम्यमीति ते वात २०० । अर्त्तीरीति मे वाम ३३८ । मनिति मनि वामा ९११ । मत्वर्थीये ने वामन ॥

6 ष्णाक् शौचे । ष स इति स्नत्वे स्नाति सस्नौ । षोपदेशत्वाण्णाम्यन्तस्थेति षत्वे निष्णाति । अनुस्वारेत्त्वादिट् स्नाता स्नातुम् । णौ ग्लास्नेत्यनुपसर्गस्य वा ह्रस्वे स्नपयति स्नापयति । सोपसर्गस्य तु ह्रस्वाभावे प्रस्नापयति । णके प्रस्नापक कर्मजा तृचा चेति प्रतिषिद्धोऽपि याजकादिभ्यस्त्विति समास राजस्नापक । निनद्या इति षत्वे निष्णात निष्ण नदीष्णात नदीष्ण । कौशलादन्यत्र षत्वाभावे नदीस्न । स्थादिभ्यः के प्रस्नाति नक्षेति प्रस्न । ष्णः प्रतिस्न । कुशलादिष्वपि प्रतिस्नाता दित्वात्षत्वे प्रतिष्णिका । प्रने स्नानस्येति षत्वे प्रतिष्णात सूत्रम् । स्नानस्य नाडि

प्रतिष्णानं सूत्रम्। उणादौ स्नामदीति वनि स्नावा सिरा नदी च १०४। ष्णैं वेष्टने। स्नायति। कृवापेत्युणि स्नायुः १॥

7. श्रांक् पाके। श्राति पच्यते स्वयमेवेत्यर्थः। शश्रौ। अनुस्वारेत्त्वान्नेट् श्राता श्रातुम्। श्रः शृतं हविः क्षीरे शृतं हविः क्षीरं वा। अन्यत्र व्यञ्जनान्तस्थेति क्तस्य नत्वे श्राणा यवागूः। पाके घटादित्वाण्णौ ह्रस्वे श्रपयति। श्रपेः प्रयोक्त्रैक्ये निपातनात् शृतं क्षीरं हविर्वा। पाकादन्यत्र ह्रस्वाभावे श्रापयति॥

8. द्रांक् कुत्सितगतौ। कुत्सिता गतिः पलायनं स्वप्नश्च। द्राति। नेर्ङ्गदेति नेर्णत्वे प्रणिद्राति। अनुस्वारेत्त्वान्नेट् द्राता द्रातुम्। व्यञ्जनान्तस्थेति क्तयोस्तस्य नत्वे विद्राणः द्राणः द्राणवान्। तृनि द्राणशीलो द्राता। शीङ्श्रद्धेत्यालौ निद्राणशीलो निद्रालुः। द्रायतेरेवालुर्न तु द्रातेरित्यन्ये। द्रैं स्वप्ने। द्रायति॥

9. पांक् रक्षणे। पाति पपौ। ईर्व्यञ्जने इत्यत्र गास्थासहचरितस्य पिबतेर्ग्रहणात्क्ये ईत्वाभावे पायते। णौ पातेरिति ले पालयति। अनुस्वारेत्त्वान्नेट् पाता पातुम्। आतो ड इति डे नृपः। स्थापेति के अधिपः। शतरि नखादित्वादद्भावे नपात्। उणादौ भीण्शलीति के पाको बालः २१। स्त्रियां वयस्यनन्त्ये इति क्ष्यपवादेजादेरित्यापि पाका। आपेति पे पान्ति तस्मादात्मानमिति पापम् २९६। भीमादित्वादपादाने साधुः। त्रटि पात्रम् ४४६। पातेर्येति वा कित्यतौ पतिः पातिः ६५९। पातेरिश्चेति तृः पिता ८५८। खुरक्षुरेति निपातनात् विप्रः ३९६। मनिति मनि पामा ९११। मत्वर्थीये ने पामनः। पातेर्जस्यसौ पाजो बलम्। पाथो जलम् ९७७। पातेर्डुम्सुः पुमान् १००१। पां पाने। पिबति। पैं शोषणे। पायति॥

10. लांक् आदाने। लाति ललौ। अनुस्वारेत्त्वान्नेट् लाता लातुम्। आतो ड इति डे बहुलः। णौ लो ल इति वाले घृतं विलालयति। पक्षे अर्तिरीति पौ घृतं विलापयति। क्ते विलातः॥

11. रांक् दाने। राति ररौ। अनुस्वारेत्त्वान्नेट् राता रातुम्। आदानेपीति कश्चित् रातुं वारणमागतः। उणादौ भीण्शलीति के राका पूर्णिमा २१। राशदीति त्रौ रात्रिः ६९६। रातेर्डैः राः धनम् ८६६॥

12. दांव्क् लवने। वकारोवौ दाधी देति विशेषणार्थः। दाति क्षेत्रम्। दायन्ते व्रीहयः। अत्रावाचित्यत्र वितो वर्जनाद्दासंज्ञाया अभावे ईर्व्यञ्जने इति ईर्न भवति। अनुस्वारेत्त्वान्नेट् दाता दातुम्। नीदाविति करणे त्रटि दात्रम्॥

13. ख्यांक् प्रथने । प्रकथने इत्यन्ये । ख्याति आचख्यौ । शास्त्यसूवक्ती-ख्यडि आख्यत् । समः ख्य इति डे अश्वसंख्यः । दश्चाङ इति डे व्याख्यः । व्यञ्जनान्तस्थेत्यत्र ख्यावर्जनात् क्तस्य नत्वाभावे ख्यातः । सखेति तु सनेर्डखिरिति डखौ [ उणादौ ६२९ ] । अनुस्वारेत्त्वान्नेट् आख्याता आख्यातुम् ॥

14. प्रांक् पूरणे । प्राति पप्रौ । अनुस्वारेत्त्वान्नेट् प्राता । क्ते व्यञ्जनान्तस्थेति तस्य नत्वे प्राणः । आतो ड इति डे गोष्पदप्रं वृष्टो देवः । एकेन गोष्पदप्रेण ॥

15. मांक् माने । मानं वर्तनम् । माति पात्रे । नेर्ङ्गदेत्यत्र ङोपलक्षितस्य मो ग्रहणान्नेर्णत्वाभावे प्रनिमाति । अत्रापीच्छन्त्येके प्रणिमाति । क्ये ईर्व्यञ्जने इतीत्वे मीयते । मातेरीत्वं नेच्छन्त्येके । तन्मते मायते । ममौ । अनुस्वारेत्त्वान्नेट् माता मातुम् । सनि मिमीति स्वरस्येति मित्सति । ये त्वस्येत्वं नेच्छन्ति तन्मते मिमासति । दोसो मेतीति मितः मितवान् । मातेरित्वं नेच्छन्त्येके । तन्मते मातः मातवान् । शतर्यवर्णादश्च इति वान्तादेशे माती मान्ती स्त्री कुले वा । उणादौ स्याछेति ये माया २६७ । हुयामेति त्रे मात्रा ४५१ । शामेति ले माला ४६२ । मावावदीति से मासः ५६४ । मेरारिति तु मीनातेर्धिनीपीति रौ ८०६ । चन्द्रमा इत्यपि चन्द्रो रमसि ९८६ ॥

अथेडन्तावनिटौ च ॥

16. इंक् स्मरणे । स्मृत्यर्थेति वा कर्मणः कर्मत्वे शेषे इति षष्ठ्याम् मातुरध्येति मातुरमध्येति । इको वेति वा यत्वे अधियन्ति । पक्षे इयादेशे अधीयन्ति । इणिकोर्गेति गादेशे पिबैतीति सिज्लुपि च अध्यगात् । क्रियाव्यतिहारे इत्यात्मनेपदे व्यत्यध्यगास्त । भावकर्मणोरिति ञिचि अध्यगायि । अधीयाय अधीयतुः । अनुस्वारेत्त्वान्नेट् अध्येता अध्येतुम् । सनीङश्चेति गमुः अधिजिगमिषति । णावज्ञाने गमुः अधिगमयति । क्त्वि अधीत्य । कित्करणमिको वेत्यादौ विशेषणार्थं गणज्ञापनार्थं च । इङिकावधिनैव प्रयुज्येते ॥

17. इंण्क् गतौ । णिस्त्रमिण इत्यादौ विशेषणार्थम् । एति । उपसर्गस्यानिणित्यत्रेणो वर्जनादुपसर्गान्तस्य लुगभावे उपैति परैति । इणोऽगिति यत्वे यन्ति यन्तु । इणिकोर्गेति गादेशे पिबैतीति सिज्लुपि च अगात् । सिज्विद इत्यनः पुसि इटेदित्यातो लुकि च अगुः । योऽनेकस्वरस्येति यत्वापवादे इण इतीयादेशे ईयतुः ईयुः । आशिषीण इति ह्रस्वे समियात् । णावज्ञाने गमुः गमयति ग्रामम् । ज्ञाने तु शब्दोऽर्थं प्रत्याययति । सनीङश्च जिगमिषति ग्रामम् । ज्ञाने तु अर्थान् प्रतीषिषति ।

अनुस्वारेत्त्वान्नेट् एता एतुम् । क्ये दीर्घश्च्वियङिति दीर्घे ईयते । थवि सृजिदृशीति वेटि इयेथ इययिथ । दृवृगिति यापवादे क्यपि इत्यः । तन्व्यधीति णे अत्यायः प्रत्यायः । लिहादयचि अयः समयः प्रत्ययः । गत्यर्थेति वा कर्तरि क्ते मार्गमतीतः । वेयिवदिति निपातनाद्भूतमात्रे क्वसौ नित्यत्वाद्द्वित्वात्प्रागेव घसे-कस्वरेतीट् ईयिवान् समीयिवान् उपेयिवान् । जीण्दृक्षीति निन् अत्ययनशीलोत्ययी। सृजीणिति द्वुरपि इत्वरः इत्वरी । मनि स्वेमा । वनि स्वेवा । क्वनिपि स्वित्वा। विचि स्वेः । क्विप्येतीति इत् । युवर्णेत्यलि अयः अन्वयः समयः । इणोभ्रेषे इत्यलपवादे घञि न्यायः । परेः क्रमे पर्यायः । क्रमादन्यत्रालि विपर्ययो मतेः । समजेति क्यपि इत्या । न्यायावायेति निपातनात्करणे घञि न्यायः । उणादौ कृवापेत्युणि आयुर्नरः पुरूरवः पुत्रो जीवनं च । जरायुर्गर्भवेष्टनम् । जटायुः पक्षी १ । भीण्शलीति के एकः २१ । इणुर्विशेति गे एणः १८२ । दम्यमीति ते एतो वर्णः २०० । अयभ्रिति किति ये समियः संगमः २२९ । जीण्शीति किति ने इनः २६१ । इणः किदिति भे इभः ३२८ । इण्धागृभ्यां वेति वा किति रे इरा सुरा मुक्ष । ऐरेडका ३८९ । क्षुरक्षुरेति रे निपातनादुः पूर्वस्य दूरम् ३९६ । समिणिल्याः समया गिरिम् ५९८ । असित्यसि अयो लोहम् ९६२ । इणो णिदित्युसि आयुः आयुषी ९९८ । अर्तीण्भ्यां नस् एनः पापम् ९७१ । आग इति त्वगेर्वस्त्यगिभ्यां णिदित्यसि ९७० ॥

अथेदन्तोनिट् च ॥

18. वींक् प्रजनकान्त्यसनखादने च । चकारादगतौ । प्रजनः प्रथमगर्भग्रहणम् । असनं क्षेपः । अदाने तृप्तिरित्येके । वेति वीतः वियन्ति विवाय विव्यतुः विव्युः । अथासिद्ध बहिरङ्गमन्तरङ्गे इति यत्वस्यासिद्धत्वाद् भ्वादेरिति पूर्वस्य दीर्घाभावः । अनुस्वारेत्त्वान्नेट् वेता वेतुम् । वियः प्रजने इति वात्वे पुरोवातो गाः प्रवापयति । पक्षे नामिन इति वृद्धौ प्रवाययति । क्ते वीतमसारं हस्त्यश्वम् । तिकृतौ नाम्नीति तिकि वीतिरश्वः । उणादौ वीपतिपटिभ्यस्तनः वेतन भृतिः २९२ । हुयामेति त्रे वेत्रः ४५१। नसभेति नसे वेतसः ५८० । कावावीति णौ वेणिः कबरी ६३४। वीयुस्याति नौ वेनिर्ब्बाधिर्नदी च ६७७ । वेणुरिति स्वजिस्यो नि णावजे ७६८ । असित्यसि वयः ९६२ । प्रज्ञायणि वायसः ॥

अथोदन्ता वश ॥

19. युक् अभिगमे । उत औरित्यौ यौति । युतः युवन्ति युयाव । थवि सृजिदृशीति वेटि युयोथ युयविथ । अनुस्वारेत्त्वान्नेट् योता योतुम् । यटि योयू-

यते। यङ्लुपि दोयोति दोयवीति। वनि सुद्योवा। क्वनिपि सुद्युत्वा। विनि द्यौः। य एचात इति ये य्यक्ये इत्यादि च द्यव्यः। उवर्णादिति घ्यणि द्याव्यमवश्यम्। उणादौ द्युद्रुभ्यामिति डिद्रुः द्युः ७४४। द्युसिभ्यां डोः द्यौः ८६७॥

20. षुंक् प्रसवैश्वर्ययोः। षः स इति सत्वे उत औरित्यौत्वे च सौति। सुतः सुवन्ति। षोपदेशत्वाचाम्यन्तस्येति षत्वे सुषाव। अनुस्वारेत्त्वान्नेट् सोता सोतुम्। अषोपदेशोऽयमित्येके सुसाव। उणादौ सुसितनीति ने वा दीर्घे च सुतः पुत्रः। सूतः सारथिः २०३। युसुक्कीति पे ऊत्वे च सूपः २९७। षुं प्रसवैश्वर्ययोः सवति। षुंग्ट् अभिषवे। सुनोति॥

21. तुंक् वृत्तिहिंसापूरणेषु। उत औरित्यौत्वे तौति। यङ्तुरुस्तोरितीति तवीति। तुतः तुवन्ति तुताव। अनुस्वारेत्त्वान्नेट् तोता तोतुम्। उणादौ भीण्शलीति के तोकमपत्यम् २१। धुयुहीति के दीर्घे च तूक उपस्थो गिरिश्च २४। युसुकुर्विति पे ऊत्वे च तूप आयतनविशेषः २९७॥

22. युक् मिश्रणे। यौति युतः युवन्ति युयाव। थवि स्क्रसृवितीटि युयविथ। यविता यवितुम्। सनि ग्रहगुहेतीडभावे प्राप्ते तदपवादे इवृधेति वेट्योर्जान्तस्येति पूर्वस्येत्वे यियविषति। पक्षे युयूषति। वेट्त्वात् क्तयोर्नेट् युतः युतवान्। आसुयुवीति यापवादे घ्यणि याव्यम्। नन्द्यादने यवनः। मनि सुयोमा। वनि सुयोवा। विचि सुयौः। क्विपि सुयुत्। युवर्णेत्यलि यवः। प्रज्ञादणि यावोऽलक्तकः। स्वार्थे के यावकः। युद्रुद्रोरिति संपूर्वाद्घञि संयावो गुडगोधूमः। उत्पूर्वाद्युद्रोर्घञ् उद्यावः। सातिहेतीति क्तौ निपातनात् यूतिः सघः। गोयूतिः। पृषोदरादित्वात् गव्यूतिः। क्त्वि उवर्णादितीडभावे युत्वा। उणादौ धुयुहीति के दीर्घे च युका २४। पथयूथेति निपातनात् यूथः २३१। युसुकीति पे ऊत्वे च यूपः २९७। योक्त्र चेति दे यूपः पेयविशेषः। यूषा छाया। योषा स्त्री ५४१। युजलेरावः यवावो दुरालभा ५४५। वल्युभ्यां वेति वा णित्यसे यावसं भक्तं तृणं च। यवसं घासोन्नं च ५७१। युवलिभ्यामासः यवासो दुरालभा ५७४। योः किदित्यनौ युवनिः ६५८। वीयुसुवहीति नौ योनिः ६७७। नीसेनि मौ योमिः शकुनिः ६८७। तृपृभ्विति कित्यनि युवा ९०१। अयुनमिश्रणामित्यादिदर्शनादमिश्रणे युरित्यन्ये। युंग्श् बन्धने। युनीते युनाति योता। युणि जुगुप्सायाम्। यावयते। अर्थविशेषे चुरादिन्वाज्जुगुप्साया अन्यत्र यौति॥

23. णुक् स्तुतौ। पाठे इति णस्य नत्वे नौति नुतः नुवन्ति। णोपदेशत्वाददुरुपसर्गेति णत्वे प्रणौति परिणौति। नुप्रच्छ इत्यादृपूर्वादात्मनेपदे आनुते सृगालः।

सनि ग्रहगुहेति नेट् नुनूषति । नुनाव नविता नवितुम् । उवर्णादिति आपवादे घ्यणि नाव्यमवश्यम् । अचि नवः प्रणवः । क्तियुवर्णादिति नेट् नुत्वा नुतः नुतवान् नुतिः । उक्षितक्षीत्यानि नव पदार्थाः [ उणादौ ९०० ] ॥

24. क्ष्णुक् तेजने । क्ष्णौति क्ष्णुतः क्ष्णुवन्ति । समः क्ष्णोरित्यात्मनेपदे संक्ष्णुते शस्त्रम् । क्ष्णविता । यङि चोक्ष्णूयते । यङ्लुपि चोक्ष्णोति । सनि ग्रहगुहेति नेट् चुक्ष्णूषति ॥

25. स्नुक् प्रस्रवने । प्रस्रवनं क्षरणम् । स्नौति स्नुतः स्नुवन्ति । क्ये दीर्घश्च्वीति दीर्घे स्नूयते । प्रस्नविता । स्नोरित्यात्मनेपदाभाव एवेड्नियमादात्मनेपदे नेट् प्रस्नो-ष्यते । कर्मकर्तर्येकधाताविति ञिक्यात्मनेपदेषु प्राप्तेषु भूषार्थेति ञिक्ययोः प्रतिषेधात् प्रास्नोष्ट गौः स्वयमेव प्रस्नुते गौः स्वयमेव । सुस्नाव सुस्नुवतुः सुस्नुवुः । यङि सोस्नूयते । यङ्लुपि सोस्नोति सोस्नवीति । सनि ग्रहगुहेति नेट् सुस्नूषति । उणादौ स्नुपूस्विति किति पे स्नुषा ५४२ ॥

26. टुक्षु 27 रु 28 कुंङ् शब्दे । क्षौति क्षुतः क्षुवन्ति चुक्षाव क्षविता क्षवितुम् । यङि चोक्षूयते । यङ्लुपि चोक्षोति चोक्षवीति । य एचेति ये क्षव्यम् । उवर्णादावश्यके इति घ्यणि क्षाव्यमवश्यम् । सनि ग्रहगुहेति नेट् चुक्षूषति । क्तियुव-र्णादिति नेट् क्षुत्वा क्षुतम् क्षुतः क्षुतवान् । युवर्णेत्यलि क्षवः । विपूर्वात् क्षुश्रोरिति घञि विक्षावः । ट्वितोऽथुरित्यथुः क्षवथुः । क्रुत्संपदेति क्विपि क्षुत् । उणादौ स्याक्षुतोरूक्षेति णे क्षुणमपराधः १८९ ॥

27. रु । रौति । यङ्तुरुस्तोरितीति रवीति । रुतः रुवन्ति रविता रुराव । सनि ग्रहगुहेति नेट् रुरूषति । यङि रोरूयते । यङ्लुपि रोरवीति रोरोति । क्तियुव-र्णादिति नेट् रुत्वा रुतम् रुतः रुतवान् । युवर्णेत्यलि रवः । अलघ्यादे रौरप-सर्गादिति घञि संरावः । आङो रुप्लोरिति वा घञि आरावः आरवः । चाल्शब्दार्थेत्यने रवणशीलो रवणः । क्वचिदिति डे मयां रौति मयूरः पृषोदरादित्वात् । उणादौ तृकृभित्यगे रवणः करभः १८७ । रोर्वेति वा कित्यथे रुवथः शकुनिः । रवथ आक्रन्दः २३५ । स्वरेभ्य इः रविः ६०६ । रुभ्यां किदिति गे रुरुर्मृगः ८०७ । विहायसित्यसि निपातनात्पुरु रौति पुरूरवा राजा ९७६ । रुंङ् रेषणे च । रवते रोता ॥

28. कुं । कौति कुतः कुवन्ति चुकाव । अनुस्वारेत्त्वान्नेट् कोता कोतुम् । सनि चुकूषति । यङि न कवतेर्यङीति श्वादेशेव प्रतिषेधात्कुङश्चिति पूर्वस्य चत्वे चोकूयते । उणादौ हृकृकुनिस्यके कवकमभक्ष्यकवकम् २७ । दुकुलेन्दूले निपातनात्

कुकूलं शङ्कुमद्गर्तः ४९१ । कुंङ् शब्दे । कवते । यङि कोकूयते । कुंङ्त् शब्दे । कुवते चोकूयते । एषां शब्दार्थत्वेपि कौतिः शब्दमात्रे कुवतिरार्तस्वरे कवतिरव्यक्ते शब्दे ॥

अथान्तर्गणो रुदादिपञ्चकः ॥

29. रुदृक् अश्रुविमोचने । रुत्पञ्चकादितीटि रोदिति । रुदितः रुदन्ति । तत्र व्यञ्जनादेरित्यधिकाराद्वतेर् नास्ति । रुरोद । दिस्योरीट् अरोदीत् अरोदीः । अद्धात् अरोदत् अरोदः । ऋदिच्छ्वीति वाङि अरुदत् अरोदीत् । रोदिता रोदितुम् । रुदविदेति क्त्वासनोः कित्त्वे रुदित्वा रुरुदिषति । उणादौ ऋज्यजीति किति रे रुद्रः ३८८ । रोदयतीति वा खुरक्षुरेति निपातनात् रुद्रः ३९६ । रुधर्तीत्युसि रोदुरश्रुनिपातः ९९७ ॥

30. ञिष्वपंक् शये । रुत्पञ्चकादितीटि स्वपिति स्वपितः स्वपन्ति । भूस्वपोरिति पूर्वस्योत्वे सुष्वाप । षोपदेशस्वासाम्यन्तस्थेति षत्वे स्वपेर्यङे चेति वृति सुषुपतुः सुषुपुः । ञीत्वाज्ज्ञानेच्छार्चेति सति क्ते सुप्तः । निर्दुःसुविपूर्वस्यायः स्वपस्यायस्यापि तस्य षत्वे निःषुप्तः दुःषुप्तः सुषुप्तः विषुप्तः । अनुस्वारेत्त्वादिट् स्वप्ता स्वप्तुम् । रुदविदेति सनः कित्त्वे सुषुप्सति । यङि सोषुप्यते । णौ सनि स्वपो णावुरिति पूर्वस्योत्वे सुष्वापयिषति । ङे असूषुपत् । दिस्योरीट् अस्वपीत् अस्वपीः । अद्धेत्यटि अस्वपत् अस्वपः । अद्यतन्याम् अस्वाप्सीत् । तृषिधृषीति नजिङि स्वप्नक् । यजिस्वपीति ने स्वप्नः । असरूपत्वात्पक्षे घञि स्वापः । क्ति सुप्त्वा ॥

31. अन 32 श्वसक् प्राणने । प्राणनं जीवनम् । वर्णक्रमस्य प्रतिज्ञानात्स्वपः प्राणनेर्निर्देशे प्राप्ते लाघवार्थमित्र पाठः । रुत्पञ्चकादितीटि अनिति । हिन्स्त्यन्तेपीति णत्वे प्राणिति पराणिति प्राणिणिषति । अन्तेपीति वचनात् क्विपि हे प्राण् हे पराण् । परेस्तु वा पर्यणिति पर्यनिति । अस्यादेरिति पूर्वस्यात्वे आन आनतुः । दिस्योरितीटि प्राणीत् प्राणीः । अद्धेत्यटि प्राणत् । प्राणः प्राणिता प्राणितुम् । अचि घञि वा प्राणः । घञि आनः । उणादौ स्यमिकषीनीके अनीकम् ४६ । प्याधेति ने अन्नम् २९८ । स्याउेति ये अन्यः ३५७ । असिन्यसि अनः शकटम् ९५२ ॥

32. श्वस । वान्त्यादिर्दन्त्यान्तः । रुत्पञ्चकेनीटि श्वसिति निःश्वसिति श्वसितः श्वसन्ति । शश्वास । व्यञ्जनादेरिति वा वृद्धौ अश्वासीत् अश्वसीत् । दिस्योरितीटि अश्वसीत् अश्वसीः । अद्धेत्यटि अश्वसत् अश्वसः । श्वसिता श्वसितुम् । श्वसजपेति क्तयोर्वेट् आश्वस्तः आश्वसितः आश्वस्तवान् आश्वसितवान् । नन्द्यादिति णे श्वासः ॥

**33. जक्षक्** भक्षहसनयोः। अयं रुत्पञ्चकस्य पञ्चमो जक्षपञ्चकस्य त्वाद्य इत्युभयकार्यभाक्। रुत्पञ्चकादितीटि जक्षिति जक्षितः। द्युक्तजक्षेति शिदनः पुसि अजक्षुः। अन्तो नो लुक् जक्षति जक्षतु। शतरि जक्षत्। शौ वा जक्षति जक्षन्ति कुलानि। दिस्योरितीटि अजक्षीत् अजक्षीः। अद्श्चेत्यटि अजक्षत् अजक्षः। जक्षिता जक्षितुम् जजक्ष जजक्षतुः॥

**34. दरिद्राक्** दुर्गतौ। दरिद्राति। इर्दरिद्रः दरिद्रितः। अन्तो नो लुकि श्नश्चात इत्यालुकि च दरिद्रति। दरिद्रोऽद्यतन्यां वा अदरिद्रीत् अदरिद्रासीत्। अशित्यस्सनित्यालुकि दरिद्राते। स्सनादिवर्जनात् दिदरिद्रासति। इवृधेति वेटि दिदरिद्रिषति। सादेरेव सनो वर्जनादिहालुक्। दरिद्रायको व्रजति। अत्र क्रियायामिति णकच्। णके दरिद्रायकः। अनटि दरिद्राणम्। शतरि दरिद्रत् दरिद्रती। धातोरनेकस्वरादित्यामि दरिद्रां चकार। आतो णव इत्यत्र ओकारेणैव पपावित्यादिसिद्धौ औकारविधानं दरिद्रातेर्णव आमादेशानित्यत्वार्थम् ददरिद्रौ। क्वसौ दरिद्रां चकृवान्। शिवस्तु णवोऽन्यस्याप्यामादेशमनित्यमिच्छति ददरिद्वान्। द्युक्तजक्षेति शिदनः पुसि इडेदित्यालुकि अदरिद्रुः। णौ दरिद्रयति। णौ ङे अददरिद्रत्। णौ विषये आलुकं नेच्छन्त्यन्ये दरिद्रापयति। ङे उपान्त्यस्येति ह्रस्वत्वे अददरिद्रपत्। न त्वत्र सन्वद्भावात्पूर्वस्येत्त्वं प्राप्नोति। नैवम्। येन नाव्यवधानं तेन व्यवहितेपि स्यादित्येकवर्णव्यवहिते लघौ लघोः परेण चैकवर्णेन व्यवहिते ङपरे णौ सन्वद्भावो भवति यथा अपीपचदित्यादौ। आचिक्रजदित्यादौ तु स्मृदृत्वरेत्यत्वविधानादनेकव्यञ्जनव्यवहितेपि लघुनीष्यते। इह तु लघोरव्यवधानेपि लघोः परेण वर्णसमुदायेन णेर्व्यवधानेति न भवति। दरिद्रिता दरिद्रितुम्। वेट्त्वेप्यनेकस्वरत्वात् क्तयोरिट् दरिद्रितः दरिद्रितवान्। अचि घञि वा दरिद्रः। दर्द्रुरिति तु दृदृभ्यां द्रुरिति दृणातेः [ उणादौ ८४६ ]॥

**35. जागृक्** निद्राक्षये। जागर्ति जागृतः। अन्तो नो लुकि जाग्रति। शतरि जाग्रत् जाग्रती। द्युक्तजक्षेति शिदनः पुसि पुस्पाविति गुणे अजागरुः। जजागार। जागुः कितीति गुणे जजागरतुः जजागरुः। पक्षे जागुषेति परोक्षाया आमि जागरां चक्रतुः जागरां चक्रुः। सिचि परस्मायिति वृद्धेर्न भिजामिति प्रतिषेधे अजागरीत्। जागुर्ञिणवीति वृद्धेर्ञिणवोरेव नियमादामिन इति वृद्ध्यभावे णौ गुणे जागरयति जागरिता जागरितुम्। क्तयोः जागरितः जागरितवान्। जागुरित्यूके जागरणशीलो जागरूकः। स्त्रियां क्यपवादौ जागुरश्चेत्ययौ जागरा जागर्या। उणादौ जॄशॄस्त्रिति ङिति यौ जागृविरग्निः ७०९॥

**36.** चकासृक् दीप्तौ । चकास्ति चकास्तः । अन्तो नो लुकि चकासति । शतरि चकासत् चकासतौ । ब्युक्तजक्षेति शिदनः पुसि अचकासुः । व्यञ्जनाद्देरिति देर्लुकि सस्य दत्वे च सोऽचकात् । सेः स्द्धामिति सेर्लुकि सो वा रुत्वे न अचकास्त्वम् । पक्षे धुट इति सस्य दत्वे अचकास्त्वम् । धातोरनेकेति परोक्षाया आमि चकासां चकार । सनि चिचकासिषति । चकासिता चकासितुम् । ऋदित्वाड्डे न ह्रस्वः अचचकासत् ॥

**37.** शासूक् अनुशिष्टौ । अनुशिष्टिर्नियोगः । शास्ति । इसासः शासोऽड्व्यञ्जने नाम्यन्तस्थेति षत्वे च शिष्टः । शास्त्यस्तिव्यड़ि अशिषत् । ब्युक्तजक्षेति शिदनः पुसि अशासुः । अन्तो नो लुकि शासति । शतरि शासत् शासतौ । व्यञ्जनाद्देरिति देर्लुकि सो दत्वे च सोऽन्वशात् । सेः स्द्धामिति सेर्लुकि सो रुत्वे न अन्वशास्त्वम् अन्वशास्त्वम् । शाससिति हन्तस्य शाधौ शाधि अनुशाधि । शासिता । ऊदित्वात् क्त्वि वेट् शिष्ट्वा शासित्वा । वेट्त्वात् क्तयोर्नेट् शिष्टः शिष्टवान् । क्विपि मित्रशीः । क्तौ शिष्टिः । इकिश्तिविति श्तिवि शास्तिः । उपान्त्यस्येत्यत्र शासेर्वर्जनाड्डे ह्रस्वाभावे अशशासत् । दृवृगेति क्यपि शिष्यः । शासूयुधीत्यने दुःशासनः सुशासनः । उणादौ शासिशंसीति तृः शास्ता बुद्धः । प्रशास्ता ऋत्विक् ८९७ । तृस्वसित्यारि प्रशास्तारौ । आङः शासूकि इच्छायाम् । आशास्ते आशास्यते आशीशासत् आशीः ॥ रुजक्षपञ्चके समाप्य प्रकृतो वर्णक्रमोनुस्रियते ॥

अथ चान्तः ॥

**38.** वचंक् भाषणे । वक्ति वक्तः वचन्ति । अन्तौ वचेः प्रयोगं नेच्छन्त्येके । यजादिवशेति पूर्वस्य य्वृति उवाच । यजादिवचेरिति य्वृति ऊचतुः ऊचुः । वचे उच्यते । शास्त्यस्तिव्यड़ि श्वयतीति वोचादेशे अवोचत् । अनुस्वारेत्त्वादनिट् वक्ता वक्तुम् । प्रवचनीयेति वा कर्तर्यनीये प्रवचनीयो गुरुर्धर्मस्य । पक्षे प्रवचनीयो धर्मो गुरुणा । ऋवर्णेति घ्यणि प्रवाच्यो ग्रन्थविशेषः । अत्र त्यज्यजेति कत्वाभावः । वचोऽशब्दनाम्नि कत्वाभावे वाच्यमाह । शब्दनाम्नि तु चजेऽनिट इति कत्वे वाक्यम् । वेयिवदिति भूतमात्रे निपातनाद्वा क्वाने अनूचानः । पक्षे अन्ववोचत् । भावाकर्त्रोर्घञि अनुवाकः वाकः । दिद्युद्ददिति क्विपि निपातनात् वचनशीलो वाक् । गोचरसंचरेति निपातनाद्धे वक्तीति वकः । क्ते उक्तम् । निन्दायामिति शौकवचः । उणादौ नीनृत्मेति क्थिति ये उक्थं साम २२७ । त्रडिति त्रटि वक्त्रम् ४४६. ४६१ । कृकम्यृदिन्त्वकं नेत्युणि कृकवाकुः कुक्कुटः । स्यूरवाकुरणाल्यानि ७२८ । अमित्यामि वचः ९९२ । वचण् भाषणे । वाचयति । युजादित्वाद्वा णिजि पक्षे वचति ॥

अथ जान्तः ॥

39. मृजौक् शुद्धौ । मृजोऽस्येति वृद्धौ यजसृजेति षत्वे मार्ष्टि मृष्टः । ऋतः स्वरे वेति वा वृद्धौ परिमार्जन्ति परिमृजन्ति ममार्जतुः ममृजतुः ममार्जुः ममृजुः । औदित्वाद्वेट् मार्ष्टा मार्जिता । वेट्त्वात् क्तयोर्नेट् मृष्टः मृष्टवान् । कृवृषीति वा क्यपि परिमृज्यः । पक्षे घ्यणि क्तेनिट इति गत्वे परिमार्ग्यः । शोकापनुदेति निपातनात्के तुन्दपरिमृजोऽलसः । अन्यत्र कर्मणोऽणि तुन्दपरिमार्जः । घञि मार्गः । भिदादिपाठे मृजा शुद्धिः । अन्यत्र स्त्रियां क्तौ मृष्टिः । उणादौ अग्यङ्गीत्यारे मार्जारः ४०९ । लत्वे मार्जालः । मृजिखनीति डित्यले मलः ४७२ । मृजीण् शौचालंकारयोः । युजादित्वाद्वा णिचि मार्जयति । णिवेत्तीत्यने मार्जना । क्ते मार्जितः । मार्जिता रसालेति रूढेः । पक्षे मार्जति ॥

अथ तान्तः ॥

40. सस्तुक् स्वप्ने । उदित्वान्ने धुटो धुटि स्वे वेति तो लुकि च संस्ति संस्तः सस्तन्ति सस्तिता ॥

अथ दान्तः ॥

41. विदक् ज्ञाने । तिवां णव इति वा णवाद्यादेशे वेद विदतुः विदुः । पक्षे वेत्ति वित्तः विदन्ति । समो गमृच्छीति कर्मण्यसत्यात्मनेपदे संवित्ते संविदाते । वेत्तेर्न वेत्यन्तो वा रनि संविद्रते । पक्षेऽनतोऽन्त इत्यति संविदते । सत्याप्ये शेषादिति परस्मैपदे संवेत्ति शास्त्रम् । सिञ्विद इति शिदनः पुसि अविदुः । वेत्तेः किदिति परोक्षाया वामि विदां चकार विवेद । पञ्चम्याः कृगिति पञ्चम्या वामि कृग एव तदन्तस्यानुप्रयोगे च विदां करोतु विदां करवाणि । कित्वान्न गुणः । पक्षे वेत्तु वेदानि । व्यञ्जनाद्देरिति देर्लुकि सोवेत् । सेः स्द्धामिति सेर्लुकि दो वा रुत्वे च अवेस्त्वम् अवेत्त्वम् । वेदिता विदितः विदितवान् । क्त्वौ व्यञ्जनादेरिति विकल्पापवादे रुदविदेति क्त्वासनोः कित्वे विदित्वा विविदिषति । नाम्युपान्त्येति के विदः । णौ साहिसातीति शे वेदयः । क्विपि वित् वेदवित् । तत्र क्वस्विति क्वसौ विविद्वान् । स्क्रसभृतीट् घसेकस्वरेति नियमादत्राभावः । गमहनेति वेत्तेरपि वेडित्येके । तन्मते विविदिवान् विविद्वान् । वा वेत्तेः क्वसुः विद्वान् विदन् । वेत्तिछिदीति किति घुरे वेदनशीलो विदुरः । विन्द्विच्छू इति निपातनाद्दुः वेदनशीलो विन्दुः । घञि वेदः । स्त्रियां भावाकर्त्रोर्नाम्नि समजेति क्यपि विद्या । णिवेत्तीत्यने वेदना । करणाधारे पुंनाम्नि व्यञ्जनादिति घञि वेदः । विदृग्भ्य इति णमि अतिथिवेदं भोजयति । उणादौ विदिभिदीति कित्यये विदयो ज्ञानी २३४ ।

विदिवृतेर्वेति वा किदिः विदिः शिल्पी । वेदिरिज्यादिस्थानम् ६१०। असित्यसि नखादित्वाददभावे नवेदाः सर्ववेदाः सर्वस्वदक्षिणक्रतुयाजी [९५२]। यस्त्वोष्ठ्यादि-जलकणवाची बिन्दुः स विन्देर्भूमृत्रित्यौ ७१६। विदिंच् सत्तायाम् । विद्यते । विदॢंती लाभे । विन्दते विन्दति । विदिप् विचारणे । विन्ते । विदिण् चेतनाख्यान-निवासेषु । वेदयते ॥

अथ नान्तोनिट् च ॥

42. हनंक् हिंसागत्योः । हन्ति । नेर्ङ्गदेति नेर्णत्वे प्रणिहन्ति चौरस्य । अत्र निप्रेभ्य इति वा कर्मणः कर्मत्वे शेषे इति षष्ठी । यमिरमीति नस्य लुकि हतः । गमहनेत्युपान्त्यलुकि हनो घ्न इति घ्नि घ्नन्ति । हन इति णत्वे प्रहण्यते । वमि वेति वा णत्वे प्रहण्वः प्रहन्वः प्रहण्मि प्रहन्मि । हनो घीति णत्वप्रतिषेधे प्रघ्नन्ति । आङो यमहन इत्यात्मनेपदे कर्मण्यसति आहते । स्वाङ्गे कर्मणि आहते शिरः । नेह आहन्ति शिरः शत्रोः । क्रियाव्यतिहारे इत्यत्र गतिहिंसार्थवर्जना-च्छेषात्परस्माद्यैति परस्मैपदे व्यतिघ्नन्ति । ञ्णिति घनि जघान जघ्नतुः जघ्नुः । थवि सृजिदृशीति वेटि अडे शीति हस्य घत्वे जघनिथ जघन्थ । गमहनेति क्वसौ वेटि जघ्निवान् जघन्वान् । अनुस्वारेत्त्वान्नेट् हन्ता हतः । हनृतः स्यस्येतीटि हनि-ष्यति । शाससिति हन्तस्य जहि शत्रून् । यङ्लुप्यपि जहि । यङ्लुपि नेच्छन्त्येके । तन्मते यमिरमीति नलुकि जङ्घहि । ये तु तिवा शवेति न्यायस्य सूत्रगणनिर्दिष्टेपि प्रवृत्त्यभ्युपगमाद्यमिरमीति लुगभावं क्ङित्यहन्पञ्चमेति हन्तेरपि दीर्घत्वं चेच्छन्ति तेषां जङ्घांहि । भावकर्मणोः स्वरग्रहेति वा ञिटि घानिष्यते त्वया । पक्षे हनिष्यते । हनो वध इति वधे वध्यात् । हन्यादिति तु सप्तम्यां ञिवर्जनाञ्ञिटि वधाभावे घानिषीष्ट । अद्यतन्यां वेति वधेनुस्वारेत्स्वेप्यनेकस्वरत्वादिटि स्वरस्य परे इत्य-लुकः स्थानित्वाद्व्यञ्जनादेरिति वा वृद्ध्यभावे अवधीत् । वा त्वात्मने आवधिष्ट । पक्षे हनः सिजिति सिचः किस्त्वाद्यमिरमीति नो लुकि आहत । सनि स्वरहनेति दीर्घे जिघांसति । यङि हनो घ्नीर्वधे जेघ्नीयते । वधादन्यत्र जङ्घन्यते । चराचरे-त्यत्रि वा निपातनात् घनाघनः । पक्षे हनः ञ्णिति घात् घातयति । हत्याभूयं भावे इति निपातनात्क्यपि हत्या ब्रह्महत्या । कर्मण्यृवर्णेति घ्यणि घात्यः । आशिषीति डे शत्रु वध्यात् शत्रुहः । क्लेशादिभ्योपात् क्लेशापहः तमोपहः । कुमारशीर्षाण्णिन् कुमारघाती शीर्षघाती । अचित्ते टक् पित्तघ्नं घृतम् । वातघ्नं तैलम् । जायापते-श्चिह्नवति जायाघ्नो द्विजः पतिघ्नी कन्या । ब्रह्मादिभ्यः ब्रह्मघ्नः शत्रुघ्नः । बाहुल-कात्संप्रदानेपि गां हन्ति यस्मै दातु स गोघ्नोतिथिः । हस्तिबाहुकपाटाच्छक्तौ हस्तिघ्नः

बाहुघ्नः कपाटघ्नो मल्लः। शक्तेरन्यत्र हस्तिघातो रसदः। एवं बाहुघातः कपाटघातः। एषु कर्मणोणित्यण्। नगरादगजे नगरघ्नोऽरिः। गजे तु नगरघातः। राजघः राजानं हन्ति राजघः। पाणिघताडघौ शिल्पिनि पाणिघः ताडघः शिल्पी चेत्। अन्यत्र कर्मणोणि पाणिघातः ताडघातः। एवं दार्वाघातः चार्वाघातः वर्णसंघातः। दार्वाघाटः चार्वाघाटः वर्णसंघाट इति तु घटतेर्हन्तेरेव वा पृषोदरादित्वात्। हनो णिन् पितृघाती मातुलघाती। ब्रह्मभ्रूणेति भूते क्विपि ब्रह्महा भ्रूणहा वृत्रहा। क्वचिदिति डे यस्माद्धन्ति वराहः। पटे हन्यते पटहः। कलं हन्ति कलहः। युजभुजेति घिनणि अभ्याहननशीलोऽभ्याघाती। शृकमेत्युकणि आघातशील आघातुकः। हनोन्तर्घनान्तर्घणौ देशे अन्तर्हन्यते यस्मिन् अन्तर्घनः अन्तर्घणो वा देशः। अन्तर्घातोन्यः। प्रघणप्रघाणौ गृहांशे प्रघणः प्रघाणश्च द्वारालिन्दकः। निघोद्घसंघोद्घनापघनोपघ्नं निमितप्रशस्तगणात्याधानाङ्गासन्नम् निघा वृक्षाः निघाः शालयः। उद्घो मनुष्यः प्रशस्त इत्यर्थः। मूर्तिनिचिताभ्रे घनः दघ्नो घनः काठिन्यमित्यर्थः। घनं दधीति गुणवचनत्वात् घनं निचितम्। घनोऽभ्रम्। व्ययोद्रोः करणे विघनः अयोघनः द्रुघनः। अरीहणादिपाठाण्णत्वे द्रुघणः। स्तम्बाद् घ्नश्च स्तम्बघ्नो दण्डः स्तम्बघनः। परेर्घः परिघः। परेर्घेति लत्वे पलिघः। स्थादिभ्य इति के विहन्यतेनेनेति विघ्नः। हनो वा वध् चेति घालि वधः घातः। वध्य इति तु वधेर्घ्यणि न जनेति वृद्धिप्रतिषेधाद्वधमर्हतीति वा दण्डादेर्ये। सातिहेतीति क्तौ निपातनात् हेतिः। हनश्चेति णमि समूलघातं हन्ति। करणेभ्यः उपलघातं हन्ति। हिंसार्थादिति णमि दण्डोपघातं गाः कालयति। तृतीयोक्तं वेति वा समासः। पक्षे दण्डेनोपघातम्। णौ करणेनाटि परिघातनः परिघः। उणादौ कीचकपेचकेत्यके निपातनात् वधको हन्ता व्याधिश्च। वधकं पद्मबीजम्। बाहुलकादन्यत्रापि वधादेशः। लिहाद्यन्ति वृत्रवधः शक्रः। वधिता वध्यः वधनम् ३३। सीमन्तेत्यन्ते निपातनात् हेमन्तः २२२। नीनूरमीति किति ये हयः पन्थाः कालश्च २२७। हनेर्घतजघौ चेत्यने घतनः पापः। जघनं श्रोणिः २७२। हिमम् हेममिति तु क्षुहिभ्यां वेति वा क्विति मे हिनोतेः ३४१। कोरचोरेत्योरे निपातनात् घोरो भीमः ४३४। मावावदीति से हंसः ६६४। कमिजमीति णिदिः घातिः प्रहरणम्। बाहुलकाद्घातादेशाभावे हानिरुच्छित्तिः। तत एव वा णित्वे हनिरायुधम् ६१८। हन्तेरंह चेत्यतौ अंहतिर्व्याधिः रयश्च ६८४। कृहनेरिति तुकि हतुर्हिमम्। नुकि बाहुलकात्तुकि च हनुः कपोलाधः ७९१। अनेनेति तु नञ ईहेरेहैधौ चेत्यसि ९७९॥

-०

अथ आन्तः सेट् च ॥

43. वशक् कान्तौ । कान्तिरिच्छा । यजसृजेति षत्वे वष्टि । वशेरयङीति य्वृति उष्टः उशन्ति । शतरि उशन् उशती । ऊशतुः ऊशुः । यजादिवशेति पूर्वस्य य्वृति उवाश । यङो वर्जनाद् य्वृदभावे वावश्यते । क्ये उश्यते । वशिता । क्ते उशितः । णौ नन्द्यादने वाशनः । युवर्णेत्यलि वशः । साक्षादादीनि वा गतित्वे वशेकृत्य वशे कृत्वा गतः । गणनिर्देशात्सप्तम्यलुप् । उणादौ घसिवशीति किति ईरे उशीरं वीरणीमूलम् ४२१ । वशेः किदितीजि उशिकान्त उशीरं च ८७६ । वष्टेः कनस् उशनाः शुक्रः ९८५ । वशिघसी छान्दसावित्यन्ये भाषायामपि प्रयोगदर्शनादत्रोपात्तौ ॥

अथ सान्तौ द्वौ सेटौ च ॥

44. असक् भुवि । भवनं भूः सत्ता । अस्ति अस्ति । श्नास्त्योरित्यलुकि स्तः सन्ति । प्रादुरुपसर्गादिति सस्य षत्वे प्रादुःष्यात् प्रादुःषन्ति अभिष्यात् अभिषन्ति निषन्ति विषन्ति । क्रियाव्यतिहारे इत्यात्मनेपदेऽस्तेः सीति सो लुकि व्यतिसे । हस्त्येति व्यतिहे । धातोरनेकेत्यत्र भ्वस्त्योरेकतरानुप्रयोगेणैव साध्यस्य सिद्धेरुभयोरुपादानादस्तेर्भ्वादेशाभावे चकासामाहे चैत्रेण । शासासेति ह्यन्तस्यैधिः एधि । दिवि सः सिजस्तेरितीति आसीत् । अद्यतन्यामस्तिब्रुवोरिति भ्वादेशे पिबैतीति सिज्लुपीडभावे च भवतेरिति गुणाभावे अभूत् अभूताम् । भुवो व इत्युपान्त्यस्योत्वे सिज्विद इत्यत्र भुवो वर्जनादनः पुसभावे च अभूवन् । णवि द्वित्वे भूस्वपोरिति पूर्वस्योतोऽत्वे नामिन इति वृद्धावावादेशे भुवो व इत्युपान्त्यस्योत्वे च बभूव । किति धातोरिवर्णेत्युवि उपान्त्योत्वे च बभूवतुः बभूवुः । शतरि सन् सती । आशिष्यस्तिब्रुवोरिति भूः भविता भविष्यति । क्तयोः ऋवर्णश्र्यूर्ण्वित्याधिकृत्य उवर्णादिति नेट् भूतः भूतवान् । य एचात इति ये व्यक्त इत्यपि न भव्यम् । कृभ्वस्तिभ्यामिति च्वौ शुक्लीस्यादत्रम् । असी गत्यादानयोश्च । असते असति आस । असूच् क्षेपणे । अस्यति अपास्यत् ॥

45. षसक् स्वप्ने । षः स इति सत्वे सस्ति सस्तः ससन्ति ससास । अनादेशादेरित्येत्वे द्वित्वाभावे च सेसतुः सेसुः । ससिता ससितुम् । घोषदेशत्वाच्छाम्यन्तस्येति षत्वे सिषासयिषति । उणादौ षसेर्णिदिति ने सास्ना २९१ । स्यागमेति ये सस्यम् ३६७ ॥

यङ्लुप् च । सर्वे धातवो यङ्लुबन्ताः क्रित्करणादृदादौ परस्मैपदिनश्च कर्तर्यनद्य इत्यत्रादादिवर्जनाच्छवभावे शेषादिति परस्मैपदे यङ्लुगन्तोर्यबहुलमितीति

बोभवीति बोभोति पापचीति पापक्ति धार्दीति । वावन्ति पास्पर्धीति पास्पर्द्धि । क्रियाव्यतिहारे इत्यात्मनेपदे शीङो रदित्यत्र ङिन्निर्देशेन यङ्लुबन्तस्याग्रहणादन्तो रदादेशाभावेनन इत्याति योनेकस्वरेति यत्वे च व्यतिशेरयते । शीङ एरित्यत्रापि ङिन्निर्देशान्तिवा शयेति यङ्लुबन्तस्याग्रहणम् । तेनैनोस्ति । यङ्लुबन्तमात्मनेपदे न प्रयुज्यत इत्येके । भावकर्मणोरात्मनेपदे न प्रयुज्यत इत्यन्ये । यङ्लुबन्तस्य चर्करीतं चर्करीतञ्च पूर्वेषां संज्ञा । यङ्लुबन्तं छन्दस्येवेति केचित् ॥

अथात्मनेपदिनः ॥

46. इंङ्क् अध्ययने । इङिकोरधिनावश्यंभावी योगः । यदाह कश्चित्तमनुवर्तते । ङित्वादिङित इत्यात्मनेपदे अधीते अधीयाते अधीयते । गाः परोक्षायाम् अधिजगे । अत्र परोक्षायां विषये गास्तेन प्राक्तु स्वरे स्वरविधेरिति प्रागेव द्वित्वं न भवति । णौ सन् ङे वा अधिजिगापयिषति अध्यजीगपत् । पक्षे णौ क्रीजीङ इत्यात्वे अर्तिरीति पौ च अध्यापिपयिषति अध्यापिपत् । वाद्यतनीक्रियातिपत्त्योर्गीङ् अध्यगीष्ट अध्यगीष्यत । पक्षे स्वरादेस्तास्विति वृद्धौ अध्यैष्ट अध्यैष्यत । सनीङश्चेति गमौ स्वरहनिति दीर्घे च अधिजिगांसते । अनुस्वारेत्त्वादिट् अध्येता अध्येतुम् । गमोनात्मन इति सादेराद्रिट् अधिजिगमिषितव्यम् । य एच्चात इति ये अध्येयम् । णके अध्यायकः । ण्यन्ताण्णके अध्यापकः । कर्मजा तृचा चेति प्रतिषिद्धोपि याजकादित्वात्षष्ठीसमासः साध्वध्यापकः । क्ते अधीतम् । इष्टादेरितीनि अधीती शास्त्रे । अप व्याप्ये क्तेन इति द्वितीयापवादः सप्तमी । मनि अध्येमा । विपि अध्येः । क्विपि अधीत् । धारीङोकृच्छ्रेतृश् अधीयन्सिद्धान्तम् । अत्र तृन्नुदन्तेति प्रतिषेधात्कर्मणि कृत इति षष्ठी नास्ति । युवर्णेत्यलपवादे इङोपादाने तु टिद्वेति घञि उपाध्यायः । स्त्री चेत् उपाध्याया । टित्वपक्षेणञेयेति ङ्याम् उपाध्यायी । पुंनाम्नि घापवादे न्यायावायेति घञि अधीयतेस्मिन्नित्यध्यायः ॥

47. शीङ्क् स्वप्ने । शीङ एः शिति शेते शयाते । शीङो रदित्यन्तो रति शेरते । अधेः शीङित्याधारस्य कर्मत्वे ग्राममधिशेते । क्ङिति यि शय् शय्यते अधिशय्य गतः । याङि शाशय्यते । यङ्लुपि शेशेति शेशयीति । शिदये शयिता शयितुम् । य एच्चात इति ये शेयम् । अचि शयः । पार्श्वादिभ्यः शीङ इत्यः पार्श्वशयः । ऊर्ध्वादिभ्यः कर्तुः ऊर्ध्वशयः उत्तानशयः । आधारात् खशयः गिरिशयः । गिरिश इति तु लोमादित्वान्मत्वर्थीये शे । व्रतेति णिनि स्थण्डिलशायी । श्लिषशीङिति साप्याद्वपि वा कर्तरि क्ते न डीङ्शीङिति कित्त्वप्रतिषेधाद्गुणे उपशयितो गुरुं शिष्यः । पक्षे कर्मणि क्ते उपशयितो गुरुः शिष्येण । शीङ्श्रद्धेत्यालौ शयनशीलः

शयालुः । युवर्णेत्यलि संशयः । व्युपाच्छीङ इति घञि तव विशायः मम विशायः तव राजोपशायः मम राजोपशायः । समजेति क्यपि शेरतेऽस्यामिति शय्या आधारेऽनटि शयनम् । शवानां शयनं श्मशानमिति पृषोदरादिः । उणादौ शीभीस्यानके शयानकोऽजगरः शैलश्च ७१ । शिखा शाखेति तु श्यतेरिच्च वेति खे श्यतेः ८५ । शीरीति किति ते शीतम् २०१ । दृप्रश्रित्यते शयतो निद्रालुश्चन्द्रश्च २०७ । न्युद्भ्यां शीङ इति किति थे निशेरतेऽस्मिन्निति निशीथोऽर्धरात्रो रात्रिः प्रदोषश्च । उच्छीथः स्वप्नः टिट्टिभश्च २२८ । भृशीशपीत्यये शययोऽजगरः २३२ । जीणूशीदीति किति ने शीनः पीलुः २६१ । शीङः सन्वदिति डिति ने शिश्नं मेढ्रम् २६७ । आपेति पे शेपः पुच्छम् २९६ । रीशीभ्यां फः शेफो मेढ्रम् ३१४ । शुकशीमूभ्यः किदिति ले शीलम् ४६३ । शीङस्तलकपालबालण्वलण्वलाः शीतलमनुष्णम् । शेपालम् । जपादित्वाद्वत्वे शेवालम् । शैवालम् शैवलम् शेवलं च जलमलः ५०१ । शीङापो ह्रस्वश्च वेति वे शिवं भद्रम् । शिवा पथ्या । शेवं धनं सुखं च । शेवोऽजगरः । शेवा प्रबलानिद्राविशेषः ५०६ । मृमृचित्युः शयुरजगरः ७१६ । शीडो धुक् शीधुः ७८४ । शीङः फश्चेति फसि पसि च शेफः शेपश्च मेढ्रम् ९८२ । शेखरशिखरौ तु शाखेरिदेतौ चास्य इत्यरे शाखेः ४०० ॥

दीधीङ् दीप्तिदेवनयोः । वेवीङ् वीसमानार्थ एतावपि केचित्पठन्ति । छान्दसत्वाच्चूपेक्षितौ ॥

48. हुंङ्क् अपनयने । अपनयनमपलापः । मनवयवलेति मोगुणासिकानुस्वारयोः किन् ह्नुते किं ह्नुते । ञाघह्नुस्येति नतुर्थ्याम् नैत्राग निह्नुते । जह्नुते । थाडि जोह्नूयते । अनुस्वारेत्त्वान्नेट् ह्नोता ह्नोतव्यम् । य एघेति ये ह्नव्यम् । उवर्णादिति घ्यणि ह्नाव्यमवश्यम् । युवर्णेत्यलि अपह्नवः ॥

अतः परमूदन्तः सेट् च ॥

49. पूङौक् प्राणिगर्भविमोचने । पः स इति सत्वे सूते सुवाते सुवते । सूतेः पञ्चम्यामिति गुणाभावे धातोरिवर्णेत्युवि सुवै सुवावहै सुवामहै । षोपदेशात्वाभाम्यन्तस्येति पत्वे सुषुवे । क्ये सूयते । णौ सनि सुषावयिषति । औदित्वादिटि सोता सविता । किद्युवर्णादिति नेट् सूतः सूतवान् । युवतौ भोजसूत्योरित्यन्तस्य प्ये सूत्या । युवतेरन्यत्र कुत्सितेति कपि ध्येऽत्यन्तो वेत्वे सूतिका सूतका । क्तौ सूतिः । निर्दुःसुवेरिति षत्वे निःषूतिः दुःषूतिः सुषूतिः । सूत्वा । संचाय्येति ध्यणि निपातनात् राजसूयः क्रतुः । क्विपि सूः प्रसूः अण्डसूः दानसूः । शास्सुजोरानित्यत्र सेनोऽपि

महणामित्येके प्रसवशीलः प्रसवी । क्ते इति क्ते सूतम् । स्वार्थे के सूतकम् । उणादौ ऋज्यजीति किति रे सूरः ३८८ । सुवः किदिति नौ सूनुः ७८८ । पूङौच् प्राणिप्रसवे । सूयते । पूत् प्रेरणे । सुवति ॥

अथ चान्तः सेट् च ॥

50. पृचैङ् 51 पृजुङ् 52 पिजुकि संपर्चने । संपर्चनं मिश्रणम् । पृक्ते संपृक्ते । क्ये संपृच्यते । संपपृचे संपर्चिता संपर्चितुम् । ऐदित्वात् क्तयोर्नेट् संपृक्तः संपृक्तवान् । ऋदुपान्त्येति क्यपि संपृच्यः । घञि क्तेनिट इति कत्वे संपर्कः । संपृक्तेरपि समः पृचैचिति घिनणित्येके । तन्मते संपर्चनशीलः संपर्की । अयं पृजै- ङिति कौशिकः । पृक्ते । पृचैप् संपर्के । पृणक्ति ॥

अथ जान्ताः पञ्च सेटश्च ॥

51. पृजुङ् । उदित्वान्ने पृङ्क्ते पृञ्जाते पृञ्जते पपृञ्जे पृञ्जिता पृञ्जितुम् ॥

52. पिजुकि । उदित्वान्ने पिङ्क्ते पिञ्जाते पिञ्जते पिपिञ्जे पिञ्जिता पिञ्जितुम् । यङि पेपिञ्ज्यते । यङ्लुपि पेपिङ्क्ते पेपिञ्जीति । घञि न्यङ्क्वादित्वाद्गत्वे पिङ्गः । उणादौ ऋच्छिचटीत्यरे पिञ्जरः ३९७ । पिञ्जिमञ्जीस्थूले पिञ्जूलो हस्तिबन्धन- पाशः ४८८ । वर्णार्थोयमित्येके । अव्यक्तशब्दार्थ इति कौशिकः । पिजुण् हिंसादौ भावार्थश्च । पिञ्जयति ॥

53. वृजैकि वर्जने । वृक्ते वृजाते वृजते ववृजे वर्जिता वर्जितुम् । ऐदित्वात् क्तयोर्नेट् वृक्तः वृक्तवान् । वृजैण् वर्जने । युजादित्वाद्वा णिचि वर्जयति वर्जति ॥

54. णिजुकि शुद्धौ । पाठे इति णस्य नत्वे उदित्वान्ने च निङ्क्ते निञ्जाते । णोपदेशत्वाद्गुरुपसर्गेति णे प्रणिङ्क्ते । निनिञ्जे निञ्जिता निञ्जितुम् ॥

55. शिजुकि अव्यक्ते शब्दे । तालव्यादिः । उदित्वान्ने शिङ्क्ते शिञ्जाते शिञ्जते । आनशि शिञ्जानः । शिशिञ्जे शिञ्जिता शिञ्जितुम् । यङि शेशिञ्ज्यते । यङ्लुपि शेशिञ्जीति शेशिङ्क्ते । ग्रहादित्वाण्णिनि शिञ्जिनी । क्लीबे क्ते शिञ्जितम् ॥

अथ डान्तः सेट् च ॥

56. ईडिक् स्तुतौ । अघोषे इति डस्य प्रथमत्वे तवर्गस्येति तस्य टत्वे च ईट्टे ईडाते ईडते । ईशीड इतीटि ईडिषे ईडिध्वे ईडिष्व ईडिध्वम् । स्वसहचरि- तस्य ध्वमो ग्रहणाद्ध्यस्तनीध्वमीडभावे ऐड्ड्वम् । गुरुनाम्यादेरिति परोक्षाया आमि ईडां चक्रे । ईडिता ईडितुम् । ऋवर्णेति ण्यणि ईड्यः । क्ते ईडितः । क्तेट इत्यः

ईडा । पृषोदरादित्वाद्ध्रस्वे इडा भूः । उणादौ म्लेच्छीडिर्हस्वश्च वेलः इडः ईडश्च देवविशेषः । इडा ईडा च भूः २ ॥

अथ रान्तः सेट् च ॥

57. ईरिंक् गतिकम्पनयोः । ईर्ते ईराते ईरते । क्ये ईर्यते । गुरुनाम्यादेरित्यामि ईरां चक्रे । ईरिता ईरितुम् । ऋवर्णेति घ्यणि ईर्यः । नाम्युपान्त्येति के ईरः । अजातेरिति णिनि स्वैरस्वैरीति स्वस्यात ईरा सहैत्वे स्वैरी । उणादौ नृकृभ्यणे समीरणः १८७ । कफादीरेर्ल चेल्लूः कफेलूः श्लेष्मातकः ८३९ । ईरण् क्षेपे । युजादित्वाद्वा णिचि ईरयति ईरति ॥

अथ शान्तः सेट् च ॥

58. ईशिक् ऐश्वर्ये । स्मृत्यर्थेति वा कर्मणः कर्मत्वे शेषे इति षष्ठ्याम् भुव ईष्टे भुवमीष्टे । ईशीड इतीटि ईशिषे ईशिध्वे ईशिष्व ईशिध्वम् । स्वसाहचर्येण पञ्चमीध्वमो ग्रहणाद्ध्यस्तनीध्वमीडभावे यजसृजेति शस्य षत्वे तवर्गस्येति धस्य ढत्वे तृतीयस्तृतीयेति षस्य डत्वे स्वरादेस्तास्विति वृद्धौ ऐड्ढ्वम् । गुरुनाम्यादेरिति परोक्षाया आमि ईशां चक्रे । ईशिता ईशितुम् । नाम्युपान्त्येति के ईशः । आनशि ईशानः । स्थेशेति वरे ईष्टे इत्येवंशील ईश्वरः । स्त्रियामपि ईश्वरा । ईश्वरीति त्वश्नोरीच्यादेरिति वरटि ङ्याम् [ उणादौ ४४२ ] । क्ते ईशितः । क्तेट इत्यः ईशा । उणादौ युयुजीति किस्थाने ईशानः २७७ ॥

अथ सान्ताः पञ्च सेटश्च ॥

59. वसिक् आच्छादने । वस्ते पटम् । क्ये वस्यते । अनादेशादेरित्येत्वस्य हित्वाभावस्य च न शसेति प्रतिषेधे ववसे ववसाते ववसिरे । वसितः वसितवान् । आनशि वसानः । करणेऽनटि वसनम् । इडिन इत्यने वसनशीलो वसनः । वसित्वा । उणादौ मुञ्जेति नौ वासिर्मूत्राधारचर्मपुटः ६४६ । प्रडिनि नटि वसनम् ४४६. ४६१ । वस्याभिभ्यां णिदित्यसि वासः ९७० । वसं निवासे । वसति वस्ता उषितः उषित्वा ॥

60. आङः शासूकि इच्छायाम् । आङ इत्याङ्पूर्व एवायं प्रयोज्यो न केवलो नाप्यन्योपसर्गपूर्व इत्येवमर्थम् । कानित्येव सिद्धे आङ इति वचनं कानेवाङ्पूर्वस्य शास्तेराम इससिति नियमार्थम् । तेनेमासः शाम इतीमभावे आशास्ते । क्ये आशास्यते । शास्यसुवक्तीत्यत्र, शासेरेव ग्रहणादङभावे आशासिष्ट । उपान्त्यस्येत्यत्रापि

शास्तेरेव प्रतिषेधाण्णौ ङे ह्रस्वे आशीशसत् । अस्यापि ह्रस्वप्रतिषेध इत्यन्ये । तन्मते आशशासत् । आशासिता आशासितुम् । ऊदित्त्वात् क्त्वि वेट् अत एव गौत्तरपदान्तस्यापि क्त्वो यबभावः । यपीहिस्वाद्यशिदमावादिट् प्राप्तिरेव नास्ति आशास्त्वा आशासित्वा । यपमेवेच्छन्त्येके आशास्य । अनूदिदयमित्यन्ये । वेट्त्वात् क्तयोर्नेट् आशास्तः आशास्तवान् । येषां नोदित्तन्मते वेट्त्वाभावादिटि आशासितः आशासितवान् । इडित इत्यने आशासनशील आशासनः । क्रुत्सपदिति क्विपि आशीः । श्वादिभ्य इति क्तौ आशास्तिः । शासूक् अनुशिष्टौ । शास्ति शिष्यते अशशासत् ॥

61. आसिक् उपवेशने । आस्ते । कालाध्वेति कर्मत्वे मासमास्ते । अधेः शीङित्याधारस्य कर्मत्वे ग्राममध्यास्ते । दयायेत्यामि आसां चक्रे । गत्यर्थाकर्मकेति वा कर्तरि क्ते आसितश्चैत्र । पक्षे भावे आसितं चैत्रेण । सात्यात् श्लिषशीङिति वा कर्तरि क्ते उपासितो गुरुं शिष्यः । पक्षे कर्मणि उपासितो गुरुः शिष्येण । आसिता आसितुम् । आनशि निपातनात् आसीनः । आस्यटीति क्यपि आस्या । णिवेत्त्यन्ने आसना उपासना । श्वादिभ्य इति क्तौ उपास्तिः ॥

62. कसुकि गतिशातनयोः । उदित्त्वाद्ने कस्ते चकंसे कसिता । यङि चाकस्यते । यङ्लुपि चाकसीति । भावे घञि वा कसः । क्तेट इत्य कस्ता ॥

63 णिसुकि चुम्बने । उदित्त्वाद्ने पाठे इति नत्वे च निस्ते । णोपदेशत्वाददुरुपसर्गेति णत्वे प्रणिंस्ते परिणिंस्ते । नाम्यन्तस्येत्यत्र शिटा नकारेण वान्तरेपीति प्रत्येक वाक्यसमाप्तेरिष्टत्वाद्व्यवधाने षत्वाभावे निंस्से । निनिंसे निंसिता निंसितुम् । यङि नेनिंस्यते । यङ्लुपि नेनिंसीति नेनिंस्ति । ऋवर्णेति घ्यणि निंस्यम् । अचि घञि च निंस । निंसनिक्षनिन्दः कृति वेति वा णत्वे प्रणिंसनीयम् प्रनिंसनीयम् प्रणिंसनम् प्रनिंसनम् । कृतोन्यत्रापि णत्वाविकल्प इत्यन्ये । तन्मते प्रणिंस्ते प्रनिंस्ते प्रणिंसाते प्रनिंसाते प्रणिनिंसे प्रनिनिंसे ॥

अथ क्षान्तः सेट् च ॥

64. चक्षिक् व्यक्तायां वाचि । सयोगस्यादाविति कस्य लुकि आचष्टे । न वा परोक्षायामिति वा ख्शांगुरुयांगोर्गित्वात्फलवत्कर्तर्यात्मनेपदे आचख्शे आचख्ये । फलवतोन्यत्र शेषादिति परस्मैपदे आचख्शौ आचख्यौ । पक्षे आचचक्षे ।

अशिति चक्षो वाचीति क्शांग्ख्यांगौ । अनुस्वारेत्त्वान्नेट् आक्शास्यते । शिद्वा-घस्येति वा द्वितीये आख्शास्यते आख्यास्यते आक्शास्यति आख्शास्यति आख्यास्यति । शास्त्यसूवक्तीत्यङि आख्यत् । य एचेति ये आख्येयम् । उपसर्गादात इति डे आख्यः प्रख्यः । तन्व्यधीति णे ख्यायः । समः ख्य इति डे गोसंख्यः । व्यञ्जनान्तस्थेत्यत्र ख्यावर्जनात् क्तयोस्तस्य नत्वाभावे ख्यातः ख्यातवान् । पुमोऽशिटीत्यत्र ख्यागो वर्जनान्मोऽनुस्वारानुनासिकपूर्वरेफाभावे पुंख्यानं पुंख्यातिः । वागर्थस्यैव क्शांग्ख्यांगौ तेन वर्जनार्थाद् घ्याणि संचक्ष्या दुर्जना वर्जनीया इत्यर्थः । भक्षणार्थादनटि चक्षणम् । चक्षिता । स्वरात्किति कृतो नस्य क्षुभ्नादीनामिति णत्वप्रतिषेधे प्रख्यानम् प्रख्यापनीयम् । उणादौ तृकृभ्रित्यणे विचक्षणः । ज्ञानार्थत्वादत्र क्शांग्ख्यांगभावः १८७ । चक्षः शिच्चेत्यसि चक्षाः नृचक्षाः ख्याश्च राक्षसः । अवचक्षाः ९६९ । चक्षेः शिच्चेति किदुसि चक्षुः परिचक्षुः अवचक्षुः अवसंचक्षुः अवख्युः । बाहुलकाच्छित्त्वे संचचक्षुः विचख्युः १००१ ॥

अथोभयपदिनस्तत्राप्युदन्तौ ॥

65. ऊर्णुंग्क् आच्छादने । वोर्णोरिति वौत्वे प्रोर्णोति प्रोर्णौति । न दिस्योरित्यौत्वप्रतिषेधे प्रौर्णोत् प्रौर्णोः । परस्मैपदे सिचि वोर्णुग इति वा वृद्धौ प्रौर्णावीत् । पक्षे प्रौर्णवीत् । वोर्णोरितीटो वा ङित्त्वे प्रौर्णुवीत् । गुरुनाम्यादेरित्यत्रोर्णोर्वर्जनात्परोक्षाया आमभावे प्रोर्णुनाव । गिल्याल्कलवत्कर्तर्यात्मनेपदे प्रोर्णुते प्रोर्णुवे । अट्यर्तीति यङि प्रोर्णोनूयते । प्रोर्णविता प्रोर्णुविता प्रोर्णवितुम् प्रोर्णुवितुम् । सनि इवृधेति वेटि प्रोर्णुनविषति प्रोर्णुनुविषति । पक्षे प्रोर्णुनूषति । किति ऋवर्णश्रीति नेट् प्रोर्णुतः प्रोर्णुतवान् । ऊर्णोति त्विणुर्विंशेति णे ऊर्णतेः [ उणादौ १८२ ] ऊर्णुः उररित्यूर्णोतेरौ [ उणादौ ७३६. ७३७ ] ॥

66. ष्टुंग्क् स्तुतौ । षः स इति सत्वे स्तुते । उत औरित्यौत्वे स्तौति । यङ्तुरुस्तोरितीति स्तवीति । उपसर्गात्सुगिति षत्वे अभिष्टौति निष्टौति । नाम्यन्तस्थेति षत्वे तुष्टाव । यङि तोष्टूयते । यङ्लुपि तोष्टोति तोष्टवीति । सनि तुष्टूषति । अनुस्वारेत्त्वान्नेट् स्तोता प्रस्तोता । सिचि परस्मैपदे धूग्सुस्तोरितीटि अस्तावीत् अस्ताविष्टाम् । स्क्रसृव्रित्यत्र स्तोर्वर्जनात्परोक्षायामिडभावे तुष्टोथ । उत औरित्यत्रा-देशिति वचनाड्डित्त्वे औत्वाभावः तुष्टुव तुष्टुम । परिनिविपूर्वस्य स्तुस्वञ्जश्चेत्यद्व्यवाये

वा पक्षे पर्यष्टौत् पर्यस्तौत् । ह्वृग्वेति क्यपि स्तुत्यः । दियुद्दृददिति क्विपि निपातनात् आयतस्तवनशील आयतस्तूः । एवं ग्रावस्तुत् । नीदावेति त्रटि स्तोत्रम् । क्विप्युपसर्गादिति षत्वे परिष्टुत् । समासेभेः स्तुतः अभिष्टुत् । मास्तुद्रुस्तोरिति घञि प्रस्तावः । संस्तोः समेत्य स्तुवन्त्यत्र संस्तावः । यज्ञविषयादन्यत्र युवर्णेत्यलि संस्तवः । एवं स्तवः । श्वादिभ्य इत्यनडपवादे करणे क्तौ स्तुतिः । उणादौ भीण्शलीति के स्तोकम् २१ । ह्वृक्रिव्यके स्तवको गुच्छः २७ । युग्रकिति पे ऊत्वे च स्तूपो वेधिसस्वभयनम् २९७ । अर्तीरीति मे स्तोमः समूहो यज्ञः स्तोत्रं च ३३८ । ष्टुभुङ् स्तम्भे इत्यस्य तु स्तोभोऽनर्थकं श्रुतिपूर्णं वचः ॥

अथोदन्तोऽनिट् च ॥

67. ब्रूंग्क् व्यक्तायां वाचि । ब्रूते । किरादित्वाण्ञिक्ययोरभावे कर्मकर्तरि अवोचत कथा स्वयमेव ब्रूते कथा स्वयमेव । ब्रूतः परादितीति ब्रवीति । ब्रूगः पञ्चानामिति ब्रूग आहादेशो तिवां णवादौ च आह आहतुः आहुः आत्थ आहथुः । अशित्यस्तिब्रुवोरिति वचादेशे यजादिवशिति पूर्वस्य य्वृति उवाच । यजादिवनेरिति य्वृति ऊचे । क्ये उच्यते । शास्त्यसूवक्तीत्यङि अवोचत् । अनुस्वारेत्त्वादेट् वक्ता वक्तुम् । प्रवचनीयादय इति वा कर्तर्यनीये प्रवचनीयो गुरुर्धर्मस्य । पक्षे कर्मणि प्रवचनीयो धर्मो गुरुणा । घ्यणि वचोऽशब्दनाम्नीति कत्वप्रतिषेधे वाच्यम् । शब्दसंज्ञायां तु वाक्यम् । त्यज्यजेति कत्वाभावे प्रवाच्यो ग्रन्थविशेषः । अचि ब्रुव इति निपातनात् ब्राह्मणमात्मानं ब्रूते ब्राह्मणब्रुवः । वेयिवदिति निपातनाद्भूतमात्रे कानः अनूचानः । तत्र क्वसाविति कसौ ऊचिवान् । दियुदिति क्विपि निपातनात् वचनशीला वाक् । उणादौ नीनुरमीति किति थे उक्थं साम २२७ ॥

अथ पान्तोऽनिट् च ॥

68. द्विषींक् अप्रीतौ । द्विष्टे द्वेष्टि । वा द्विषेति शिदन्ते वा पुंसि अद्विषुः अद्विषन् । दृशिट इति सकि अद्विक्षत् । अनुस्वारेत्त्वादेट् द्वेष्टा द्वेष्टुम् । ऋवर्णेति घ्यणि द्वेष्यः । नाम्युपान्त्येति के द्विषः । क्विपि सुहृद् मित्रद्विट् ब्रह्मद्विट् । सुग्द्विषेत्यतृशि द्विषो वातृश इति वा कर्मणि षष्ठ्याम् चौरस्य द्विषन् चौरं द्विषन् । युजभुजेति घिनणि द्वेषणशीलो द्वेषी । घञि द्वेषः ॥

अथ हान्तास्त्रयोऽनिटश्च ॥

69. दुहींक् क्षरणे । दुग्धे गौः दोग्धि । कर्मकर्तर्येकधातावित्ति ञिक्यात्मनेपदेषु प्राप्तेषु भूषार्थेति किरादित्वात्क्यनिषेधे दुग्धे गौः स्वयमेव । स्वरदुहो वेति

वा त्रिज्णिदये अदुग्ध गौः स्वयमेव अदोहि गौः स्वयमेव । हशिट इति सकि अधुक्षत् । वतवर्गादावात्मनेपदे दुहदिहेति सको वा लुकि अदुहहि अधुक्षावहि अदुग्ध अधुक्षत अदुग्धाः अधुक्षथाः । अनुस्वारेत्त्वान्नेट् दोग्धा दोग्धुम् । कृवृषीति वा क्यपि दुह्या गौः । पक्षे ऋवर्णेति ध्यणि दोह्या । क्विपि गोधुक् । दुहेर्डुधः कामदुघो धर्मः । युजभुजेति घिनणि दोही । बाहुलकात्खलपवादेने सुदोहनः । घञि दोहः । उणादौ कुमुदेत्यदे निपातनात् दोहदोऽभिलाषविशेषः २४४ । त्वदृिति तृप्रत्यये निपातनात् दुहिता ८६५ ॥

70. दिहींक् लेपे । दिग्धे देग्धि । नेर्ङ्गदेति णत्वे प्रणिदेग्धि । हशिट इति सकि अधिक्षत् । यतवर्गादावात्मनेपदे वा सको लुकि अधिक्षावहि अदिहहि अधिक्षत अदिग्ध । संदिदेहे संदिदेह । यङि देदिह्यते । यङ्लुपि देदिहीति देदेग्धि । अनुस्वारेत्त्वान्नेट् देग्धा दिग्धः संदिग्धः । उणादौ मृदिकन्दीत्यले देहली द्वाराधोदारु ४६९ ॥

71. लिहींक् आस्वादने । लीढे लेढि । हशिट इति सकि अलिक्षत् । यतवर्गादावात्मनेपदे वा सको लुकि अलिह्वहि अलिक्षावहि अलीढ अलिक्षत । लिलिहे लिलेह । यङि लेलिह्यते । यङ्लुपि लेलिहीति लेलेढि । अनुस्वारेत्त्वान्नेट् लेढा लेढुम् । ऋवर्णेति ध्यणि लेह्यम् । लिहादिभ्यो लेहः आलेहः । बाहुलकादप्युपान्त्येति के लिहः । उणादौ लिहेर्गित् येति ये लिह्या ५१३ ॥

अथादाद्यन्तर्गणो ह्वादयः ॥

1. हुंक् दानादनयोः । दानमत्र हविष्प्रक्षेपः । अदनं भक्षणम् । हवः शितीति द्वित्वे उत औरित्यत्रोरित्युक्तेरौत्वाभावे जुहोति । जुहुतः । हिनोतेरिति धात्वेनो णो लुगिति नलुकि च जुह्वति । श्रुव्येति शित्वनः पुसि पुस्पाविति गुणे अजुहवुः । भीह्रीति परोक्षाया वामि जुहवांचकार । अथामान्निष्प्रत्ययाद्यः शितीति द्वित्वम् । पक्षे जुहाव । हुधुटो हेर्धिः जुहुधि । अनुस्वारेत्त्वान्नेट् होता होतुम् । [illegible] एयेति ये हव्यम् । उवर्णादावश्यके ध्यणि हाव्यमवश्यम् । अलि हवः । भावाद्यकम् हवकः । दिद्युद्ददिति क्विपि निपातनात् हवनशीलो जुहूः । सुपर्णेत्यलि हवः । उणादौ अर्तीरीति मे होम आहुतिः ३३८ । हुयामेति त्रे होत्रं हवनम् । होभा कृशः ४६१ । तन्यणीनीति तनिः पुरोडाशादिः १८९ । हुपूनीति तृः होता ऋत्विक् ८६३ ॥

अथाह्नोणिद् च ॥

2 ओंहांक् त्यागे । [illegible] न भवेते सुपीत्यादौ [illegible] । जहाति । हाक इति वेति जहिनः । पक्षे [illegible] जहीतः । आ च [illegible]

जहाहि जहिहि । पक्षे जहीहि । यि लुकि जह्यात् जह्याताम् । यये ईर्व्यञ्जने इतीत्वे हीयते । आतो णव औ जहौ । गापास्थेत्याशिष्येः हेयात् । यङि जेहीयते । यङ्लुपि न हाक इति पूर्वस्यात्वाभावे जहाति । पक्षे यङ्तुरुस्तोरितीति जहेति । ललाटवातेति खशि शर्धंजहा माषाः । अनुस्वारेत्त्वान्नेट् हाता हातुम् । ओदित्त्वा-रसूयत्यादीति क्तयोस्तस्य नत्वे हीनः हीनवान् । हः कालेति टनणि जहाति भावानिति हायनः संवत्सरः । जहत्युदकमिति हायना व्रीहयः । आतो ड इति डे कलां जहाति कलहः । ङ्यापो बहुलं नाम्नीति पूर्वस्य ह्रस्वः । हाको हिः क्त्वि हित्वा । ग्लाहेत्यनी हानिः । अहीयरुह इत्यत्र हाको वर्जनात्पञ्चम्यास्तस्व-भावे सार्थाद्धीनः । पापहीयमानेनेति तृतीयायास्तसौ वियातो हीयते । उणादौ भीण्शलीति के निहाको निःस्नेहः । निहाका गोधा २१ । पाहाभ्यां पयसौ चेत्यसि योनन्तरातीतदिनम् ९६३ । अहरिति तु श्वन्मातरिश्वन्नित्यनि निपातनादहतेः ९०२ ॥

अथेदन्तावनिटौ च ॥

3. ञिभीक् भये । बुद्धिससर्गपूर्वकेपायेवाधित्वादपादानत्वे पञ्चम्यपादाने इति पञ्चम्याम् चौराद्बिभेति । भियो न वेति वेत्वे बिभितः । पक्षे बिभीतः । बिभ्यति । हृयुक्तेति शिदनः पुसि पुस्याविति गुणे अबिभयुः । भीहीति परोक्षाया यामि बिभयांचकार बिभाय । हेतुकर्तृतो भये वर्तमानस्य णौ बिभेतेर्भीष् चेत्यात्वे भीपादेशे आत्मनेपदे च मुण्डो भापयते मुण्डो भीषयते । करणाद्भये तु कुञ्चिकयैनं भाययति । भियो रुरुकलुकम् भयशीलो भीरुः भीरुकः भीलुकः । क्त्विवादत्र न गुणः । वर्षादयः क्लीबे इत्यलि भयम् । भ्यादिभ्यो वेति वा क्तिपि भी । पक्षे क्तौ भीतिः । उणादौ भीण्शलीति के भेको मण्डूकः कातरश्च २१ । शीभीस्यानके भयानकः ७१ । भियः षोन्तश्च वेति किति मे भीमः भीष्मः ३४४ । भीवृधीति रे भेरो दुन्दुभिः कातरश्च । कफिडादित्वाल्लत्वे भेलश्चिकित्साग्रन्थकारोभाश्च ३८७ ॥

4. ह्रींक् लज्जायाम् । जिह्रेति जिह्रीतः । योनेकस्वरस्येति यापवादे संयोगा-दितीयि जिह्रियति । ह्रयुक्तेति शिदनः पुसि पुस्याविति गुणे अजिह्रयुः । भीह्रीति परोक्षाया यामि जिह्रयांचकार जिह्राय । यङि जेह्रीयते । णौ अर्तिरीति पौ पुस्पा-विति गुणे ह्रेपयति । अनुस्वारेत्त्वान्नेट् ह्रेता ह्रेतुम् । ऋह्रीघ्रेति क्तयोस्तस्य वा नत्वे ह्रीणः ह्रीतः ह्रीणवान् ह्रीतवान् । य एचेति ये ह्रेयम् । क्रुत्संपदेति क्विपि ह्रीः । उणादौ ह्रियो रश्च लो वेति किति के ह्रीकः ह्लीकश्च सलज्जः २९ । ह्रियः किद्रो लश्च वेति कौ ह्रीकु ह्लीकुश्च त्रपु जतुनी लज्जावांश्च ७६० ॥

अथ ऋदन्तावनिटौ च ॥

5. पृंक् पालनपूरणयोः । पृभृमेति पूर्वस्येत्वे पिपर्ति पिपृतः पिप्रति पपार पप्रतुः । थवि ऋत इति नेट् पपर्थ । वे स्क्रसृवृभृस्तुद्रुस्रुश्रुवो व्यञ्जनादेरिति पप्रिव । ऋदन्तोऽयं सेट् नैत्येके । तन्मते तस्योष्ठ्यादित्युरि भ्वादेरिति दीर्घे च पिपूर्तः । अन्तौ पिपुरति । परोक्षायां ऋः शॄदृप्र इति वा ऋः निपप्रतुः निपप्रुः । पक्षे स्कृच्छ्रृत इति गुणे निपपरतुः निपपरुः । थवि स्क्रसृवृभृस्तुद्रुस्रुश्रुवो व्यञ्जनादेरितीटि निपपरिथ । वे निपप्रिव निपपरिव । अनुस्वारेत्त्वान्नेट् पर्ता पर्तुम् । हनृत इतीटि परिष्यति । क्तयोः व्यापृतः व्यापृतवान् । येषां तु दीर्घोन्तस्तन्मते ऋवर्णेतीडभावे ऋल्वादेरित्यत्र प्रो वर्जनात् क्तयोस्तस्य नत्वाभावे पूर्तः पूर्तवान् । णौ साहिसातीति ञो पारयः । घञि पारः । णौ दान्तशान्तेति क्ते वा पूर्णेति निपातनमस्यापीत्येके । तन्मते णौ क्ते पूर्णः पारितः । पुरित इति तु पुरैचेर्ण्यन्तात् क्ते ॥

6. ऋंप् गतौ । ह्वः शिनीति द्वित्वे पृभृमेति पूर्वस्येत्वे पूर्वस्यास्वे इतीयि नामिन इति गुणे इयर्ति । इयृतः इयति । श्रौतीत्यत्रात्यादावित्यधिकारादत्र ऋच्छाभावः । संपूर्नात्समो गमृच्छीत्यात्मनेपदे समियृते । आष्वे तु सति शेषात्परस्मैपति परस्मैपदे समियर्ति मित्रम् । अस्यादेरिति पूर्वस्यात्वे ऋदादित्वाभावादनात इति नन्ताभावे आर । आरतुः आरुः । इन्ध्यसंयोगेत्यवित्परोक्षायाः कित्त्वेऽप्यत्र संयोगादिति गुणः । यत्रयदेति गुणे अर्यते । अत्यर्तीति यङि अरार्यते । आशीर्ये अर्यात् । समस्याम् ह्यृगात् । अद्यतन्यां सर्त्यर्तेरिति चाङि आरत् आर्यात् । थवि ऋवृव्येद इतीटि आरिथ । सनि ऋस्मिपूङ्ज्वशौ स्वरस्य कार्यित्वाद्वित्वं प्रति निमित्तस्याभाव इति पूर्वं स्वरादेशो गुणे पश्चात्स्वरादेरिति द्वितीयांशस्य द्वित्वे अरिरिषति । अनुस्वारेत्त्वान्नेट् अर्ता अर्तुम् । ऋहीति क्तयोर्नस्य वा नत्वे ऋणम् ऋतम् । णौ अर्तिरीति पौ अर्पयति । उणादौ ऋकृभिल्युगे अरणः १९६ । कामिगुगेति थे अर्थः २२५ । गुदूरमीति भे अर्भः शिशुः ३२७ । अर्तीरीति मे अर्मोऽक्षिरोगः ३३८ । धापाजीत्यन्ये अरण्यम् ३७१ । ऋच्छिचटीत्यरे अररं कपाटः ३९७ । ऋहाजित्यगौ अरणिः ६३८ । अर्तेरत्निः अरत्निरल्परनिष्ठो हस्तः ६८२ । अर्तेरुः स्यात इति मो ऊर्मिः ६८९ । नदिवर्धीत्यवौ अरविः कपाटः ६९८ । अङ्गेः किदिति तुनि ऋतुर्वसन्तादिः स्त्रीरजस्कालश्च ७७७ । वहियुटीत्यपौ अरयुर आयुधं च ८१२ । अर्तेर्भुजिनक् ऋभुक्षा इन्द्रः ९२८ । यामर्दीति यनि अर्वाश्वः ९०४ । अर्तेरत्यौ वेन्त्वसि उरो वक्षः । अर्णो गुरुवर्णः ९६७ । अर्तीण्भ्यामिति नसि अर्णो जलम् ९७१ । स्वर्णोत्युमि अर्यमा ९९७ । ऋं प्रापणे च । ऋच्छति ॥

अथात्मनेपदिनावादन्तावनिटौ च ॥

7. ओंहांङ्क् गतौ। ङित्त्वादिङित इत्यात्मनेपदे हवः शिताति द्वित्वे पृभृमेति पूर्वस्येत्वे एषामीतीत्वे च जिहीते। जिहाते जिहते। ईर्व्यञ्जने इत्यत्र हाकोनुवृत्तेः क्ये ईत्वाभावे हायते। संजहे। अनुस्वारेत्त्वान्नेट् हाता हातव्यम्। य एचेति ये हेयम्। हः कालेति टनणि हायनो वर्षं व्रीहिश्च। ओदित्त्वात्सूयत्यादीति क्तयोस्तस्य नत्वे हानः हानवान्। अदुरुपसर्गान्तपूर्वस्य स्वरादिति नस्य णत्वे प्रहाणः प्रहाणवान्। ओहांक् त्यागे। जहाति हीयते ॥

8. मांङ्क् मानशब्दयोः। हवः शितीति द्वित्वे पृभृमेति पूर्वस्येत्वे एषामीतीत्वे च मिमीते। ईर्व्यञ्जने इतीत्वे मीयते। ममे। नेर्ङ्गदेति नेर्णत्वे प्रणिममे। आशिषि क्ङित्त्वाभावाद्गापास्थेत्येत्वाभावे मासीष्ट। सनि मिमीमेति स्वरस्येति द्वित्वाभावे च प्रमित्सते। अनुस्वारेत्त्वान्नेट् माता मातव्यम्। य एचेति ये मेयम् प्रमेयम्। क्तिमि मादौ दोसोमास्थ इः प्रमितः प्रमितवान्। श्वादिभ्य इति क्तौ प्रमितिः उपसर्गादिव्याङि प्रमा। करणेऽनटि प्रमाणम् ॥

अथोभयपदिनः षडनिटश्च। तत्रादन्तौ ॥

9. डुदांग्क् दाने। गित्त्वात्फलवत्कर्तरीगित इत्यात्मनेपदे हव इति द्वित्वे श्नभेत्याल्लुकि च दत्ते। नेर्ङ्गदेति नेर्णत्वे प्रणिदत्ते। फलवतोन्यत्र शेषादिति परस्मैपदे ददाति प्रणिददाति दत्तः। आङ्पूर्वाद्दागोस्वास्येत्यात्मनेपदे विद्यामादत्ते। एषामीत्यत्र दो वर्जनाद्त्रेत्वाभावः। अन्तो नो लुक् ददति ददतु। शतरि ददत्। शौ वा ददति ददन्ति कुलानि। ही द इति स्वरस्यैत्वे द्वित्वाभावे च देहि। द्युक्तेति शिदनः पुसि अददुः। पिबैतीति सिचो लुपि अदात्। अद्यतन्यामात्मनेपदे इश्च स्थाद इति क्त्वे द इत्वे च अदित। आतो णव औ ददौ। आददे। आशिषि गापास्थेत्येः देयात्। क्ङितोन्यत्र दासीष्ट। सनि मिमीति स्वरस्येति द्वित्वाभावे च दित्सते। अत्र फलवत्कर्तरि प्राग्वदित्यात्मनेपदम्। अन्यत्र शेषादिति परस्मैपदे दित्सति। अनुस्वारेत्त्वान्नेट् दाता दातव्यम्। य एचेति ये देयम्। तन्व्यधीति णे दायः। दद इति तु ददतेरचि। आतो ड इत्यणपवादे डे गोदः। दश्चाङः दायादः। प्राज्ज्ञश्च धर्मप्रदः। प्रादागेति वा त्ते दातुमारब्धं प्रत्तम्। पक्षे ददिति दति प्रदत्तम्। निविस्वन्ववादिति वा त्ते दस्तीति दीर्घे च नीत्तम् वीत्तम्, सूत्तम् अनूत्तम् अवत्तम्। पक्षे ददिति दति निदत्तमित्यादि। स्वरादुपसर्गादिति त्ते आत्तः उपात्तः। ददिति दति ड्वित्वात्त्रिमकि दानेन निर्वृत्तं दत्त्रिमम्। दाधे-

सीति रौ दानशीलो दारुः । भावाकर्त्रोर्घञि दायः । उपसर्गाद्दः किः आदिः । उपसर्गादात इत्यङि उपदा । खलपवादे शासूयुधीत्यने सुदानः ॥

10. डुधांग्क् धारणे च । चकाराद्दाने । धत्ते । अत्र धागस्तयोर्धेति पूर्वस्य चतुर्थः । चतुर्थान्तत्वाभावे तु पूर्वस्य न चतुर्थः दधाति । नेर्ङ्गादेति नेर्णत्वे प्रणिदधाति । अधश्चतुर्थादित्यत्र धो वर्जनात्तयोर्धत्वाभावे धत्तः धत्थः । अन्तो नो लुक् दधति । शतरि दधत् । शौ वा दधति दधन्ति कुलानि । हौ द इति स्वरस्यैत्वे द्वित्वाभावे च धेहि । द्युक्तेति शिदनः पुंसि अदधुः । अवाविति दासंज्ञत्वात्पिबैतीति सिचो लुपि अधात् । सिज्विद इत्यनः पुसि इडेदित्याल्लुकि अधुः । अद्यतन्यात्मनेपदे इश्च स्थाद इतीत्वे किंत्त्वे च अधित । क्ये ईर्व्यञ्जने इतीत्वे धीयते । दधे दधौ । आशिषि गापेत्येति धेयात् । किडतोन्यत्र धासीष्ट । सनि मिमीमेतीति द्वित्वाभावे च धित्सति । अनुस्वारेत्त्वाच्चेट् धाता धातव्यम् । धाय्यापाय्येति य्यणि निपातनात् धाय्या सामिधेनी । ऋचोन्यत्र य एच्चेति ये धेयम् । तन्व्यधीति णे धायः । दध इति तु दधतेरचि । क्तिति तादौ धाग इति हिः विहितः विहितवान् । समस्ततेति वा मो लुकि संहितम् सहितम् । वावाप्योस्तनीति वा प्यादेशे पिहितम् अपिहितम् पिधानम् अपिधानम् । आतो ड इति डे गोधा । शीङ्श्रद्धेत्याली श्रद्धालुः । सत्त्विणकीति निपातनाड्डौ धानशीलो दधिः । द्वित्त्वाचिमकि विधानेन निर्वृत्तं विहितिमम् । उपसर्गाद्दः किः प्रधिः विधिः संधिः । निर्दुःसोः सेधेति षत्वे निःषंधिः दुःषंधिः सुषंधिः । व्याप्यादाधारे यालधिः ओपधिः । अन्तर्धिरन्तर्धानम् अन्तर्धिः । स्थादिभ्यः कः विधः । उपसर्गादात इत्यङि विधा उपधा संधा । मृगयेति निपातनादङि श्रद्धा । खलपवादे शासूयुधीत्यने सुधानः । उणादौ भीण्शलीति के धाक ओदनः स्तम्भश्च २१ । धाल्विल्याणके धाणको दीनारद्वादशभागः ७० । शीभीत्यानके धानका हैमादिपरिमाणम् ७१ । प्याधेति ने धाना भृष्टयवोङ्कुरश्च २९८ । लुदादिवृञीति क्तिवने निधनम् २७३ । अर्तीरीति मे धामं निलयस्तेजश्च ३३८ । धामाजीत्यन्ये धान्यम् ३७१ । संध्येति तु सञ्झेर्य चेति ये ३९१ । इण्धाग्भ्यां वेति वा किति रे धीरः धारा ३८९ । कृसिकमीति तुनि धातुः ७७३ । धृषेस्तु धृषेर्दिधिषदिधीषौ चेत्युः दिधिषूर्ज्यायस्याः पूर्वमूढा लघ्वी पुंश्चली च । दिधीषूस्त्वायाः कनिष्ठाया ज्येष्ठानूढा ८४२ । मनिनि मनि धाम ९११ । वयः पयः पुरोरेनोभ्य इत्यसि वयोधा युवा । पयोधाः पर्जन्यः । पुरोधाः पुरोहितः । रेतोधा जनकः ९७४ । विधाः वेधा इति तु विधेर्वेति वा कित्यसि विधनेः ९७२ ॥

अथ ऋदन्तः ॥

11. डुभृंग्क् पोषणे च। चकाराद्धारणे। हवः शितीति द्वित्वे पृभृमेति पूर्वस्येत्वे बिभृते बिभर्ति। श्युक्तेति शिदनः पुसि पुस्पाविति गुणे च अबिभरुः। भीह्रीति परोक्षाया वामि तिव्वद्भावाद्द्वित्वेत्वयोः बिभरां चकार बभार। अनुस्वारेत्त्वान्नेट् भर्ता भर्तुम्। भृगोऽसंज्ञायामिति क्यपि भृत्यः। संज्ञायां तु ऋवर्णेति घ्यणि भार्यो नाम क्षत्रियविशेषः। भार्या वधूः। समो वा संभृत्यः संभार्यः। लिहादिभ्य इत्यणपवादेऽचि जारभरा कन्या। क्ते भृतः। कुत्सितेति कपि भृतकः। भावाकर्त्रोर्घञि भारः। भर इति तु भृणातेरलि। कुक्ष्यात्मोदरेति खौ कुक्षिंभरिः आत्मंभरिः उदरंभरिः। भृवृजीति खे विश्वंभरा भूः। भृगो नाम्नीति स्त्रियां भावे क्यपि कुमारभृत्या। संज्ञाया अन्यत्र भृतिः। ड्वित्वादथुः भरथुः। ड्वित्त्वात्त्रिमक् भृत्रिमम्। उणादौ द्वारशृङ्गारेत्यारे निपातनात् भृङ्गारः ४११। दृमुपीति किति तौ प्रभृतिरादिः ६६१। भृंग् भरणे। भरते भरति ॥

अथ जान्तौ ॥

12. णिजृंकी शौचे च। चकारात्पोषणे। पाठे इति नत्वे हवः शितीति द्वित्वे निजां शित्येदिति पूर्वस्यैत्वे च नेनिक्ते नेनिजाते नेनिजते नेनेक्ति नेनिक्तः नेनिजति। णोपदेशत्वाददुरुपसर्गेति प्रणेनेक्ति। श्युक्तेति शिदनः पुसि अनेनिजुः। श्युक्तोपान्त्यस्येति गुणनिषेधे नेनिजानि अनेनिजम्। ऋदित्त्वादृदिच्छ्वीति वाडि अनिजत्। पक्षे सिचि व्यञ्जनानामिति वृद्धौ अनैक्षीत्। निनिजे निनेज। अनुस्वारेत्त्वान्नेट् नेक्ता नेक्तुम्। नाम्युपान्त्येति के निजः। शतरि अन्तो नो लुकि नेनिजत् नेनिजती। घञि क्तेनिट इति गत्वे नेगः ॥

13. विजृंकी पृथग्भावे। निजां शितीति पूर्वस्यैत्वे वेविक्ते वेविजाते वेविजते वेवेक्ति वेविक्तः वेविजति। दिवि अवेवेक्। श्युक्तेति शिदनः पुसि अवेविजुः। श्युक्तोपान्त्येति गुणाभावे वेविजानि अवेविजम्। ऋदित्त्वाद्वाडि अविजत् अवैक्षीत्। विविजे विवेज। अनुस्वारेत्त्वान्नेट् वेक्ता वेक्तुम्। नाम्युपान्त्येति के विजः। घञि क्तेनिट इति गत्वे वेगः। चान्तोऽयमिति सभ्याः। विवेचनम् वेविचति वेविचते अविचत् विवेकः ॥

अथ षान्तः ॥

14. विष्लृंकी व्याप्तौ। निजामिति पूर्वस्यैत्वे वेविष्टे वेविषाते वेविषते वेवेष्टि वेविष्टः वेविषति। श्युक्तेति शिदनः पुसि अवेविषुः। लृदित्त्वादङि अविषत्।

आत्मनेपदे त्वडभावे हशिट इति सकि अविक्षत । स्वरेत इत्यड्लुकि अविक्षाताम् । स्वरस्य परे इत्यड्लुकः स्थानित्वादनतोन्त इत्यदभावे अविक्षन्त । नायमूदिदूदिदित्येके । तन्मते हशिट इति सकि अविक्षत् । ऊदित्त्वात् क्त्वि वेटि विष्ट्वा वेपित्वा । अनुस्वारेत्त्वान्नेट् वेटा वेष्टुम् विष्टः विष्टवान् । नाम्युपान्त्येति के विपः विपम् । णके परिवेपकः । कर्मजेति प्रतिषिद्धोपि याजकादित्वात्षष्ठीसमासः साधुपरिवेपकः । घ्यणि वेप्यः । घञि वेषः परिवेषः । उणादौ विपेः किदिति णौ विष्णुः ७६९ ॥

अत्रान्यैरन्येप्येकादशाधीयन्ते । घृ क्षरणदीप्त्योः । ह्व प्रसह्यकरणे । सृ गतौ । भस भर्त्सनदीप्त्योः । किकितौ ज्ञाने । तुर त्वरणे । धिष शब्दे । धन धान्ये । जन जनने । गा स्तुताविति । ते त्वलौकिकत्वादस्माभिरुपेक्षिताः ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणेपिकरणः किद्वदादिगणः संपूर्णः ॥

---

अथ श्यविकरणा दिवादयो वर्णक्रमेण निर्दिश्यन्ते। तत्रापि पूर्वाचार्यप्रसिद्ध्यनुरोधेनादौ

1. दिवूच् क्रीडाजयेच्छापणिद्युतिस्तुतिगतिषु। जयेच्छा विजिगीषा। पणिर्व्यवहारः क्रयादिः। दिवादेरिति श्ये भ्वादेरिति दीर्घे च दीव्यति। उपसर्गाद्दिव इति विनिमेयद्यूतपणयोः कर्मणो वा कर्मत्वे शेषे इति षष्ठ्याम् शतस्य प्रदीव्यति शतं प्रदीव्यति। अनुपसर्गस्य नेति कर्मत्वाभावे शतस्य दीव्यति। करणं चेति करणस्य कर्मत्वकरणत्वयोः अक्षान् दीव्यति अक्षैर्दीव्यति। चेत्यनुक्त्वा करणं चेत्यत्र चकारकरणं संज्ञाद्वयसमावेशार्थम्। तेन करणत्वात्तृतीया कर्मत्वाद्यानाप्यलक्षणमणिकर्तुर्णौ कर्मत्वमणिगि प्राणिकर्तृकेति परस्मैपदं च न भवति अक्षैर्देवयते मैत्रश्चैत्रेण। त्रिदेव देविता। सनि इवृधेति वेटि इडभावेनुनासिके चेति वस्योटि दुद्यूषति दिदेविषति। ऊदित्वात् क्त्वि वेट् द्यूत्वा देवित्वा। क्त्वेति कित्वाभावादत्र गुणः। वेट्त्वात् क्तयोर्नेट् द्यूतः द्यूतवान्। द्यूतादन्यत्र दिव्यद्व्यर्थेरिति क्तयोस्तस्य नत्वे आद्यूनः आद्यूनवान्। लिहादयचि देवः। गौरादित्वाङ् ङ्याम् देवी। णके देवकः देविका नदी। क्विपि अक्षद्यूः। ण्यन्तात्क्विपि द्यूः। उपसर्गाद्देवीति णके आदेवयतीत्येवंशील आदेवकः। एवं परिदेवकः। उणादौ दिव्यवीत्यटे देवटो देवकुलविशेषः शिल्पी च १४२। देवर इति तु देवतेर्क्लछिचटीत्यरे २९७। देवल इत्यप्यस्यैव मृदिकन्दीत्यले ४६५। छविछिवीति क्विति वौ निपातनात् दीविः कितवः कालश्च। दिदिविः स्वर्गः। दीदिविरन्नं स्वर्गश्च। किकीति कुर्वन्दीव्यति किकिदीविश्चाषः ७०६। दिव ऋः देवा देवरः पितृव्यस्त्री च ८९२। लुपृध्विति क्विन्यनि दिवा दिवानी। प्रतिदीव्नः प्रतिदीवा ९०१। दिवोर्डिविति डिवि वौ दिवौ ९४९। चित्करणं दिवादिज्ञापनार्थम्। एवं सर्वत्र ॥

अथ ऋदन्तौ सेटौ च ॥

2. जॄष् 3 झॄष्च् जरसि। जरा वयोहानिः। दिवादेः श्यः जीर्यति। जजार। जॄभ्रमेत्यतो वैत्वे द्वित्वाभावे स्कृच्छृन इति गुणे च जेरतुः जजरतुः। ऋदिच्छ्वीत्यङि ऋवर्णेति गुणे अजरत्। पक्षे सिचि सिचि परस्मायिति वृद्धौ अजारीत्। वृतो नवेनीटो वा दीर्घे जरीता जरिता। सनि इवृधेति वेटि जिजरिषति जिजरीषति जिजीर्षति। इट् सिजाशिषोरिति वेटि अजरिष्ट अजरीष्ट स्वयमेव। पक्षे ऋवर्णादिति सिचः कित्त्वे अजीर्ष्ट स्वयमेव। एष्वेकधाताविति कर्मकर्तर्यात्मनेपदं किरादित्वात्र भूषार्थेति ञिङ् नास्ति जरिषीष्ट जरीषीष्ट जीर्षीष्ट। णौ कगे इति ह्रस्वे

जरयति। क्तेति ऋवर्णश्रीति नेट् गत्यर्थाकर्मकेति वा कर्तरि क्ते जीर्णश्चैत्रः। पक्षे भावे जीर्णं चैत्रेण। साप्यादपि श्लिषशीङिति वा कर्तरि क्ते अनुजीर्णो वृषलीं चैत्रः। पक्षे कर्मणि अनुजीर्णा वृषली चैत्रेण। अकर्मका अपि हि सोपसर्गाः सकर्मका भवन्ति। क्त्वि जॄव्रश्च इतीटि जरित्वा जरीत्वा। संगतेजर्यं न जीर्यत्यजर्यमार्यसंगतम्। अचि जरः। पृषोदरादित्वात् कुञ्जरः। भूते जॄषोऽतृः जरन् जरती। षित्त्वादङि ऋवर्णेति गुणे जरा। करणाधारे न्यायावायेति घापवादे घञि जारः। उणादौ ऋतटिदित्यः सरूपे च द्वे रूपे जर्जरो वृद्धः। जर्जरी स्त्री ९। जॄविशिभ्यामन्तः जरन्तो वृद्धः २११। जॄश् वयोहानौ। जृणाति। जॄण् वयोहानौ। युजादित्वाद्वा णिचि जारयति जरति॥

3. झॄष्। झीर्यति जझार। स्कृच्छ्रृत इति गुणे जझरतुः। झरिता। अच्यालि च झरः निर्झरः। षित्त्वादङि ऋवर्णेति गुणे झरा। अनिदयमित्यन्ये। उणादौ ऋतटिदित्यः सरूपे च द्वे रूपे झर्झरो वाद्यविशेषः। झर्झरी झल्लरिका ९। सृणीकास्तीकेतीके निपातनात् झर्झरीको देहः। झर्झरीका वादित्रभाण्डम् ५० ॥

अथौदन्ताश्चत्वारोनिटश्च ॥

4. शोंच् तक्षणे। तक्षणं तनूकरणम्। न शितीत्यात्वप्रतिषेधादोतः श्ये इति लुकि श्यति। आत्सन्ध्यक्षरस्येत्यात्वे शशौ। ट्धेशाशेति सिचो वा लुपि अशात्। पक्षे यमिरमीतीटि सेन्ते च अशासीत्। णौ पाशेति ये निशाययति। अनुस्वारेत्त्वादेट् शाता शातुम्। क्तेति ते छाशोर्वेति वेत्वे निशितः निशातः निशितवान् निशातवान् शित्वा शात्वा शितिः शातिः। शो व्रते संशितव्रतः साधुः। तन्व्यधीति णे शायः। स्त्रियां भावाकर्त्रोरुपसर्गादित्यङि निशा। उणादौ शाशपीति दे शादः पङ्कः २३७। शामेति ले शाला ४६२। शः सन्वच्चेति डौ शिशुः ७४७॥

5. दों [illegible] छोंच् छेदने। ओतः श्ये इति लुकि द्यति। पिबैतीति सिज्लुपि अदात्। ददौ। क्तेति ते दोसोमेस्तीत्वे दितः दितवान्। स्वरान्तोपसर्गादुदस्य तु स्वरादिति तान्ते अवत्तम्। दस्तीति नामिनो दीर्घे परीत्तम्। क्ये ईर्व्यञ्जने इतीत्वे दीयते। अनुस्वारेत्त्वादेट् दाता दातुम्। तन्व्यधीति णे दायः। य एचेति ये देयम्। दिनमिति तु दीप्यतेर्दिननमेति निपातनात् [ उणादौ २६८ ] ॥

6. छों। अवच्छ्यति। ट्धेशेति वा सिज्लुपि अच्छात् अच्छासीत्। अपच्छौ। क्तेति ते छाशोर्वेति वेत्वे छितः छातः छितवान् छातवान् छित्वा छात्वा। अनुस्वारेत्त्वादेट् छाता छातुम्। णौ पाशेति ये छाययति। उणादौ गम्यमीति गे

छागः ९२। स्याछामेति ये छाया ३५७। ञो डग्गादिर्वेति कित्यले छगलश्छागः। छागल ऋषिः। छलमसदुत्तरम् ४७१॥

7. षोंच् अन्तकर्मणि। अन्तकर्म विनाशः। षः स इति सत्वे अवस्यति। उपसर्गात्सुगिति षत्वे नेर्ङ्गदेति नेर्णत्वे प्रणिष्यति। अड्व्यवायेपि अभ्यष्यत् व्यष्यत्। योपदेशत्वान्नाम्यन्तस्थेति षत्वे सिषासति। ट्धेघेति वा सिज्लुपि अवासात् अवासासीत्। अवससौ। क्ये ईर्व्यञ्जने इतीत्वे अवसीयते। दोसोमास्थ इतीत्वे अवसितः अवसितवान् सित्वा। अवसाय व्यवसाय। कथमध्यवस्य व्यवस्येति। अत्र केचित्पारायणिका ओतः श्ये इति योगं विभज्य यप्यपि लुकमिच्छन्ति। तदन्ये न मन्यन्ते इति याचकवार्त्तिकम्। अनुस्वारेत्त्वान्नेट् साता सातुम्। णौ पाशेति ये अवसाययति। अवहसेति णे अवसायः। स्यातिहेतीति क्तौ निपातनात् सातिः। अनटि अवसानम्। उणादौ स्याग्रमेति ये सायम् ३५७। सात्मनिति मनि निपातनात् सात्मास्यन्नाभ्यस्तं प्रकृतिभूतम् ९१६। सात्मनो भावः सात्म्यम्॥

अथ डान्तः सेट् च॥

8. व्रीडच् लज्जायाम्। व्रीड्यति विव्रीड व्रीडितः। क्लेट इत्यः व्रीडा। ऋफिडादित्वाल्लत्वे व्रील्यति व्रीला। पुंभावे घञि व्रीडः॥

अथ तान्तः सेट् च॥

9. नृतैच् नर्तने। नर्तनं नाट्यम्। नृत्यति ननर्त नर्तिता नर्तितुम्। अणोपदेशत्वादकुरुपसर्गेति णत्वाभावे प्रनृत्यति। कृतचृतेत्यसिचः सादेरादिर्वेट् नर्तिष्यति नर्त्स्यति निनर्तिषति निनृत्सति। सिचि तु विल्यमिटि अनर्तीत्। येट्त्वादेव क्वयोरिडभावे सिद्धे ऐदित्करणं यङ्लुबन्तादनेकस्वरादपीडभावार्थम्। नृत्तः नृत्तवान् नरीनृत्तः नरीनृत्तवान्। नृतेर्यङीति णत्वप्रतिषेधे नरीनृत्यते। णाधीगित इति फलवत्कर्तर्यात्मनेपदेणिगि प्राणिकर्तृकादिति परस्मैपदेनापोदिते परिमुहायमेति पुनर्विहिते नृत्यति नटः नर्तयते नटं चैत्रः। ऋदुपान्त्यादिति क्यपि नृत्यम्। लिहादिघञि वा नर्तः। नृतखनित्यकटि नर्तकः। अनटि पूर्वपदस्थादिति णत्वस्य क्षुभ्रादित्वादभावे प्रनर्तनम्। क्लीबे क्ते नृत्तम्॥

अथ यान्तौ सेटौ च॥

10. कुथच् पूतिभावे। पूतिभावो दुर्गन्धः क्लेदः। कुथ्यति चुकोथ कोथिता कुथितम्। घञि कोथः। उणादौ उद्दटिकुलीति कुमे कुथुम ऋषिः। कुथुमं मृगाजिनम् ३९१। कुथिगुपेभ्यः कोथुमथरणऋषिः ३९३॥

11. पुथच् हिंसायाम् । पुथ्यति पुपोथ पोथिता पोथितुम् पुथितः । पुथण् भासार्थः । पोथयति ॥

अथ धान्तास्त्रयः ॥

12. गुधच् परिवेष्टने । गुध्यति जुगोध गोधिता गोधितुम् । क्षुधक्लिशेति क्त्वः कित्त्वे गुधित्वा । गुधितः । लिहादयचि भिदाद्यङि वा गोधा । उणादौ कुथिगुधेरूमः गोधूमः ३५३ । गुधिगृधेस्त चेति किति से गुत्सस्तृणजातिः ५६८ । गुच्छ इति तु गमतेस्तुदिमदीति छकि १२४ ॥

13. राधंच् वृद्धौ । स्वादिषु पठिष्यमाणस्याप्यस्येह पाठो वृद्धावेव श्यविकरणार्थः । राध्यति वर्धते इत्यर्थः । वृद्धेरन्यत्र श्नुरेव राध्नोत्योदनं पचतीत्यर्थः । मैत्राय राध्नोति मैत्रस्य शुभाशुभं पर्यालोचयतीत्यर्थः । कथं तर्हि मैत्राय राध्यतीत्यत्र श्यः । अत्रापि मैत्रस्य वृद्धिविषयं शुभाशुभपर्यालोचनमिति विवक्षायां वृद्ध्यर्थत्वेनेति श्यादेव । अनुस्वारेत्त्वान्नेट् राद्धा राद्धुम् । चुरादेराकृतिगणत्वात् राधयति । कश्चित्तु राध साध संसिद्धाविति पठन् वृद्धेरन्यत्रापि राधेः श्यं साधिं च धात्वन्तरमिच्छति । राध्यत्यन्नं साध्यति ॥

14. व्यधंच् ताडने । शिदविदिति श्यस्य ङित्त्वाज्ज्याव्यधः क्ङितीति य्वृति विध्यति । ज्याव्येव्यधीति पूर्वस्येत्वे विव्याध । अनुस्वारेत्त्वान्नेट् व्यद्धा व्यद्धुम् विद्धः । तन्व्यधीति णे व्याधः । क्विपि गतिकारकस्येति दीर्घे मर्माविन् श्वावित् । अनुपसर्गाद्व्यधजपेत्यलि व्यधः । उपसर्गात्तु घञि आव्याधः । स्थादिभ्यः कः विध्यन्त्यनेनेति विधः शस्त्रोपकरणम् । आविधम् । उणादौ पृकेति किदुः विधुश्चन्द्रः ७२९ ॥

अथ पान्तौ ॥

15. क्षिपंच् प्रेरणे । क्षिप्यति निक्षेप । अनुस्वारेत्त्वान्नेट् क्षेप्ता क्षिप्तः । त्रसि-गृधीति क्नौ क्षेपशीलः क्षिप्नुः । क्षिपींत् प्रेरणे । क्षिपते क्षिपति ॥

16. पुष्पच् विकसने । पुष्प्यति पुपुष्प पुष्पिता पुष्पितः । अचि पुष्पम् ॥

अथ मान्ताश्चत्वारः सेटश्च ॥

17. तिम 18 तीम 19 ष्टिम 20 ष्टीमच् आर्द्रभावे । तिम्यति तितेम तेमिता तिमितः । अनटि तेमनम् । उणादौ कृशीशीति किरे तिमिरम् ४१६ । नाम्युपान्त्येति किदिः तिमिर्मत्स्यः ६०९. ६१३ ॥

18. तीम । तीम्यति तितीम तीमिता ॥

19. ष्टिम । षः स इति सत्वे स्तिम्यति । षोपदेशत्वात्साम्यन्तस्येति षत्वे तिष्टेम । स्तेमिता स्तिमितः ॥

20. ष्टीम । षः स इति सत्वे स्तीम्यति । षोपदेशत्वात्साम्यन्तस्येति षत्वे तिष्टीम । स्तीमिता स्तीमितः ॥

अथ वान्ताश्चत्वारः सेटश्च ॥

21. षिवूच् उतौ । उतिर्वानं तन्तुसंतान इत्यर्थः । षः स इति सत्वे सीव्यति । षोपदेशत्वात्साम्यन्तस्येति षत्वे सिषेव । परिनिविपूर्वस्यासोडसिवूसहेति षत्वे परिषीव्यति निषीव्यति विषीव्यति । अड्व्यवाये सुस्वञ्जश्चेति वा षत्वे पर्यषीव्यत् पर्यसीव्यत् न्यषीव्यत् न्यसीव्यत् व्यषीव्यत् व्यसीव्यत् । सेविता सेवितुम् । ऊदित्वात् क्त्वि वेट् अनुनासिके चेति वस्योटि स्यूत्वा । इटि क्त्वेति कित्त्वाभावाद्गुणे सेवित्वा । वेट्त्वात् क्तयोर्नेट् स्यूतः स्यूतवान् । ष्ठिवूसिवोनटि वेति वा दीर्घे सेवनम् सीवनम् । लिहादयचि स्वार्थे के च प्रसेवकः । मनि स्योमा । उणादौ सिवेर्डिदित्यूचटि सूचः सूची १२१ । सूत्रमिति तु सूमूखनीति किति त्रटि सूतेः ४४१ ॥

22. श्रिवूच् गतिशोषणयोः । श्रीव्यति शिश्रेव श्रेविता । ऊदित्वात् क्त्वि वेट् मव्यवीति वस्योपान्त्येन सहोटि श्रूत्वा । इटि श्रेवित्वा । वेट्त्वात् क्तयोर्नेट् श्रूतः श्रूतवान् । क्विपि श्रूः अणुश्रूः ॥

23. ष्ठिवू 24 क्षिवूच् निरसने । षः स इत्यत्र ष्ठिवो वर्जनात्सत्वाभावे भ्वादेरिति दीर्घे ष्ठीव्यति । अघोषे शिट इति पूर्वस्य षस्य लुकि तिर्वेति वा तौ टिष्ठेव तिष्ठेव । ष्ठेविता । ऊदित्वात् क्त्वि वेट् ष्ठ्यूत्वा ष्ठेवित्वा । वेट्त्वात् क्तयोर्नेट् निष्ठ्यूतः निष्ठ्यूतवान् । ष्ठिवूसिवोनटि वेति वा दीर्घे निष्ठीवनम् निष्ठेवनम् ॥

24. क्षिवू । क्षीव्यति चिक्षेव क्षेविता । ऊदित्वात् क्त्वि वेट् क्ष्यूत्वा क्षेवित्वा । वेट्त्वात् क्तयोर्नेट् क्ष्यूतः क्ष्यूतवान् । ष्ठिवु क्षिवु निरसने । ष्ठीवति क्षेवति ॥

अथ षान्तः सेट् च ॥

25. इषच् गतौ । इष्यति इयेष एषिता एषित्वा । ऊदिदयमित्यन्ये । तन्मते क्त्वि वेट् इष्ट्वा एषित्वा । वेट्त्वात् क्तयोर्नेट् इष्टः इष्टवान् ।

यत्रायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥

अन्विष्यः प्रेषितः । अवर्णेति ध्यणि एष्यः । घञि एषः । प्रस्यैषैष्य इत्यैत्वे प्रैष्यः प्रैषः । उपसर्गस्यानिणित्यमुकि प्रेषणम् । इषोनिच्छायामित्यने एषणा अन्वे-

पणा। पर्यधेर्या पर्येषणा परीष्टिः। अध्येषणा अधीष्टिः। श्वादिभ्य इति क्तौ इष्टिः। उणादौ इष्यशीति तककि इष्टका ७७। मस्जीषीति सुकि इक्षुः ८२६। इषत् इच्छायाम्। इच्छति एष्टा एषिता। इषश् आभीक्ष्ण्ये। इष्णाति ॥

अथ सान्ताश्चत्वारः सेटश्च ॥

26. ष्णसूच् निरसने। षः स इति सत्वे निमित्ताभावाण्णस्य नत्वे स्नस्यति सस्नास स्नसिता। ऊदित्त्वात् क्त्वि वेट् स्नस्त्वा स्नसित्वा। वेट्त्वात् क्तयोर्नेट् स्नस्तः स्नस्तवान्। षोपदेशत्वात्साम्यन्तस्येति षत्वे सिष्णासयिषति। घटादिरयमित्येके। तन्मते णौ ह्रस्वे सिष्णसयिषति। ष्णुस अदने इति द्रमिलाः। स्नुस्यति सुष्णोस ॥

27. क्नसूच् ह्रुतिदीप्त्योः। ह्रुतिः कौटिल्यम्। क्नस्यति चक्नास क्नसिता। ऊदित्त्वात् क्त्वि वेट् क्नसित्वा क्नस्त्वा। वेट्त्वात् क्तयोर्नेट् क्नस्तः क्नस्तवान्। अपि चिक्निदेति निपातनात् चक्नसः ॥

28. त्रसैच् भये। भ्रासभ्लासेति वा श्ये त्रस्यति। पक्षे कर्तर्यनद्भ्य इति शवि त्रसति तत्रास। जृभ्रमेति वैत्वे द्वित्वाभावे च त्रेसतुः त्रेसुः। थवि स्क्रसृवृभृस्तुद्रुस्रुश्रुवः इति त्रेसिथ। पक्षे तत्रसतुः तत्रसुः तत्रसिथ। त्रसिता त्रसित्वा। ऐदित्त्वात् क्तयोर्नेट् त्रस्तः त्रस्तवान्। त्रसिगृधीति क्नुः त्रसनशीलस्त्रस्नुः। त्रसण् वारणे। त्रासयति ॥

29. प्युसच् दाहे। प्युस्यति पुप्योस प्योसिता प्युसितः ॥

अथ हान्तौ सेटौ च ॥

30. षह 31 षुहच् शक्तौ। षः स इति सत्वे सह्यति। परिनिविपूर्वत्यासोढेति षत्वे परिषह्यति निषह्यति विषह्यति। ससाह। अनादेशादेरित्येत्वे द्वित्वाभावे च सेहतुः सेहुः। सहिष्यति ॥

31. षुह। षः स इति सत्वे सुह्यति। षोपदेशत्वात्साम्यन्तस्येति षत्वे सुषोह। सोहिता सुहितः सुहितवान्। तृप्तार्थेति षष्ठीसमासप्रतिषेधात् फलानां सुहितः। तृप्तार्थमित्येके ॥

अथ दिवाद्यन्तर्गणः पुषादिः परस्मैपदेत्र। तत्रापि प्रसिद्धयनुरोधादादौ

32. पुषंच् पुष्टौ। अकर्मकोयम् पुष्यति। पुष्यादित्वादङि अपुषत्। पुपोष। अनुस्वारेत्त्वान्नेट् पोष्टा पुष्टः पुष्ट्वा। कुप्यभिद्योद्ध्येति निपातनात् यपि पुष्यन्त्यस्मिन्नर्था इति पुष्यः। स्वपोषणेनेति णमि स्वपोषं पुष्टः। एवं गोपोषम्। पुष पुष्टौ। पोषति। पुषश् पुष्टौ। पुष्णाति। पुषण् धारणे। पोषयति ॥

अथ चान्तः सेट् च ॥

33. उचच् समवाये । समवाय ऐक्यम् । उच्यति उवोच । पुष्याद्यङि औचत् । उचिता उचितः उचित्वा । घञि न्यङ्क्वादित्वात्कत्वे ओकः । उणादौ क्षुशिपिशीति किती उचितम् २१२ । उच्यन्त्येः क चेत्यसि ओकः ओकसी ९६५ । द्यौरोको येषां ते पृषोदरादित्वाद्दिवौकसः । दिवशब्दो वाकारान्तः ॥

अथ टान्तः सेट् च ॥

34. लुटच् विलोटने । लुट्यति लुलोट । पुष्याद्यङि अलुटत् । लोटिता लुटितः । लुट विलोटने । लोटति अलोटीत् । लुटण् भासार्थः । लोटयति ॥

अथ दान्ताश्चत्वारः ॥

35. ञिष्विदांच् गात्रप्रक्षरणे । गात्रप्रक्षरणं घर्मस्रुतिः । षः स इति सत्वे स्विद्यति । षोपदेशात्याचाम्यन्तस्येति षत्वे सिष्वेद । पुष्याद्यङि अस्विदत् । आदित्वात् क्तयोर्नेट् स्विन्नः स्विन्नवान् । न वा भावारम्भे इति वा नेटि स्विन्नमनेन प्रस्विन्नः। पक्षे इटि न डीडिति किस्वाभावाद्गुणे स्वेदितमनेन प्रस्वेदितः । अनुस्वारेत्त्वान्नेट् स्वेत्ता स्विस्वा । ञिष्विदाङ् मोचने च । स्वेदते स्वेदिता ॥

36. क्लिदौच् आर्द्रभावे । क्लिद्यति चिक्लेद । पुष्याद्यङि अक्लिदत् । औदित्वाद्वेट् सनि चिक्लित्सति क्लित्वा । पक्षे इटि वौ व्यञ्जनादेरिति वा किस्वे चिक्लिदिषति चिक्लेदिषति क्लिदित्वा क्लेदित्वा । वेट्त्वात् क्तयोर्नेट् क्लिन्नः क्लिन्नवान् । नाम्युपान्त्येति के चिक्लिदेति निपातनात् चिक्लिदः । उणादौ भृमृचिल्युः क्लेदुर्योनिः ७१६ ॥

37. ञिमिदाच् स्नेहने । मिदः श्ये इति गुणे मेद्यति । मिमेद । पुष्याद्यङि अमिदत् । मेदिता । ञीत्वाज्ज्ञानेच्छेति सति क्ते आदित इति नेटि मिन्नः मिन्नवान् । न वा भावारम्भे इति वा नेट् मिन्नमनेन प्रमिन्नः । पक्षे इटि न डीडिति किस्वाभावाद्गुणे मेदितमनेन प्रमेदितः । लिहाद्यचि मेदः मेदाख्यो देशः । भञ्जिभासीति घुरे मेदनशीलो मेदुरः । णिन् चावश्यक इति णिनि मेदिनी । उणादौ असित्यसि मेदो वपा ९६२ । ञिमिदाङ् स्नेहने । मेदते अमेदिष्ट । मिदुण् स्नेहने । मिन्दयति ॥

38. ञिक्ष्विदाच् मोचने च । चकारात्स्नेहने । क्ष्विद्यति चिक्ष्वेद । पुष्याद्यङि अक्ष्विदत् । क्ष्वेदिता । आदित इति क्तयोर्नेट् ञीत्वाज्ज्ञानेच्छेति सति क्ते क्ष्विण्णः क्ष्विण्णवान् । न वा भावारम्भे इति वा नेट् क्ष्विण्णमनेन प्रक्ष्विण्णः। पक्षे इटि न डीडिति किस्वाभावाद्गुणे क्ष्वेदितमनेन प्रक्ष्वेदितः । ञिक्ष्विदा अव्यक्ते शब्दे । क्ष्वेदति । ञिक्ष्विदाङ् मोचने च । क्ष्वेदते अक्ष्वेदिष्ट ॥

अथ धान्ताः सप्त ॥

39. क्षुधंच् बुभुक्षायाम् । क्षुध्यति चुक्षोध । पुष्याद्यङि अक्षुधत् । अनुस्वारेत्त्वान्नेट् क्षोद्धा । क्त्वाक्तेषु क्षुधवसस्तेषामितीटि क्षुधक्लिशेति किन्त्वे क्षुधित्वा क्षुधितः क्षुधितवान् । ये तु क्षुधेः क्त्वः कित्त्वं नेच्छन्ति तन्मते वौ व्यञ्जनादेरिति वा कित्त्वे क्षुधित्वा क्षोधित्वा । क्रुत्संपदेति क्विपि क्षुत् । बाहुलकादुकणि क्षौधुकः । उणादौ पिशिमिथीति कित्युने क्षुधुनः कीटः २९० ॥

40. शुधंच् शौचे । शौचं नैर्मल्यम् । शुध्यति शुशोध । पुष्याद्यङि अशुधत् । अनुस्वारेत्त्वान्नेट् शोद्धा शुद्धः ॥

41. क्रुधंच् कोपे । क्रुधद्रुहेति संप्रदानत्वे चैत्राय क्रुध्यति । चुक्रोध । पुष्याद्यङि अक्रुधत् । अनुस्वारेत्त्वान्नेट् क्रोद्धा क्रुद्धः । भूषाक्रोधेत्यने क्रोधशीलः क्रोधनः । क्रुत्संपदेति क्विपि क्रुत् ॥

42. षिधूंच् संराद्धौ । संराद्धिर्निष्पत्तिः । षः स इति सत्वे सिध्यति । षोपदेशत्वान्नाम्यन्तस्थेति षत्वे सिषेध । पुष्याद्यङि असिधत् । णौ सिध्यतेराज्ञाने इत्यात्वे अन्नं साधयति दातुम् । ज्ञाने तु आचारः कुलं सेधयति ज्ञापयतीत्यर्थः । अनुस्वारेत्त्वान्नेट् सेद्धा सेद्धुम् सिद्धः । ऊदित्त्वात् क्त्वि वेट् सिद्ध्वा सेधित्वा सिधित्वा । षिधू गत्याम् । षिधौ शास्त्रमाङ्गल्ययोः । सेधति ॥

43. ऋधूच् वृद्धौ । ऋध्यति समृध्यति । अनात इति पूर्वस्यात्वे ने च आनर्ध आनृधतुः । पुष्याद्यङि आर्धत् । अमाङेत्यधिकारात् स्वरादेरिति वृद्ध्यभावे मा ऋधत् । अर्धिता अर्धितुम् । सनि इवृधेति वेटि अयि र इति रस्य द्वित्वाभावे स्वरादेरिति द्वितीयांशस्य धेरेव द्वित्वे अर्दिधिषति । पक्षे इडभावे सादौ सनि ऋध ईर्त् न च द्विः ईर्त्सति । ऊदित्त्वात् क्त्वि वेट् ऋद्ध्वा अर्धित्वा । वेट्त्वात् क्तयोर्नेट् ऋद्धः ऋद्धवान् । णौ अर्धयति । ङे आर्दिधत् । ऋदुपान्त्यादिति क्यपि ऋध्यम् । घञि अर्धः । ऋधूट् वृद्धौ । समृध्नोति ॥

44. गृधूच् अभिकाङ्क्षायाम् । गृध्यति जगर्ध । पुष्याद्यङि अगृधत् । यङ्लुपि सिनि गुणे सेः स्द्धामिति सेर्लुकि धस्य दत्वे आदिचतुर्थत्वे रो रे इति रस्य लुक्यतो दीर्घे च अजगाः । दिवि यङ्लुरुतोरितीति व्युक्तोपान्त्येति गुणाभावे अजर्गृधीत् । गर्धिता गर्धितुम् । ऊदित्त्वात् क्त्वि वेट् गृद्ध्वा गर्धित्वा । क्त्वेति कित्त्वाभावाद्गुणः । वेट्त्वात् क्तयोर्नेट् गृद्धः गृद्धवान् । णौ फलवत्कर्तर्यणिगि प्राणिकर्तृकेत्यकर्तर्यपि तु दोषात्परस्मायिति परस्मैपदे प्राप्ते प्रलम्भे गृधीत्यात्मनेपदे श्वानं गर्धयते । प्रतिगृधीति

क्रुः गृधुः । भूषाक्रोधेत्यने गर्धनः । घञि गर्धः । स्त्रियां क्तौ गृद्धिः । उणादौ ऋज्यजीति किति रे गृध्रः ३८८ । केचित्तु गृधिं चुरादिमभ्युपगम्य णिगि प्रलम्भे गृधीत्यात्मनेपदमिच्छन्ति । गर्धयते ॥

45. रधौच् हिंसासंराद्ध्योः । संराद्धिः पाकः । रध्यति । रध इटीति ने ररन्ध । संयोगान्तत्वात्परोक्षायाः कित्त्वाभावे ररन्धतुः । स्क्रसृवृतीटि ररन्धिव ररान्धिम । क्वसावनादेशादेरित्येत्वे कृते एकस्वरत्वाद्घसेकस्वरादितीटि रध इटीति नागमे कित्त्वान्नलुकि च रेधिवान् । पुष्यादिङि नो व्यञ्जनेति नलुकि अरधत् । औदित्त्वाद्वेट् इटि तु परोक्षायामेवेति नियमाभावे रधिता अरधिष्यत् । पक्षे रद्धा अरत्स्यत् । वेट्त्वात् क्तयोर्नेट् रद्धः रद्धवान् । णौ रन्धयति । षिधूंच् संराद्धौ । रधौच् हिंसायां चेत्यकृत्वास्यात्र निर्देशः संराद्धिभेदज्ञापनार्थः ॥

अथ पान्ता नव सेटश्च ॥

46. तृपौच् प्रीतौ । प्रीतिः सौहित्यम् । तृप्यति ततर्प । पुष्यादिङि अतृपत् । स्पृशमृशेति वा सिचि अतार्प्सीत् । स्पृशादीति स्वरात्परे वाति अत्राप्सीत् । इटि अतर्पीत् । औदित्त्वाद्वेट् तर्पिता तर्प्ता त्रप्ता । वेट्त्वात् क्तयोर्नेट् तृप्तः तृप्तवान् । उणादौ ऋज्यजीति किति रे तृप्रं दुःखम् ३८८ । तृपट् प्रीणने । तृप्नोति ॥

47. दृपौच् हर्षमोहनयोः । मोहनं गर्वः । दृप्यति ददर्प । पुष्यादिङि अदृपत् । स्पृशमृशेति वा सिचि अदार्प्सीत् । स्पृशादीति स्वरात्परे वाति अद्राप्सीत् । इटि अदर्पीत् । औदित्त्वाद्वेट् दर्पिता दर्प्ता द्रप्ता । वेट्त्वात् क्तयोर्नेट् दृप्तः दृप्तवान् । उणादौ ऋज्यजीति किति रे दृप्रं बलम् । दृप्रा बुद्धिः ३८८ ॥

48. कुपच् क्रोधे । कुप्यति चुकोप । पुष्यादित्वादङि अकुपत् । कोपिता कोपितुम् कुपितः । भूषाक्रोधेत्यने कोपशीलः कोपनः । लिहादयचि घञि च कोपः ॥

49. गुपच् व्याकुलत्वे । गुप्यति जुगोप । पुष्यादिङि अगुपत् । गोपिता । कुप्याभिद्येति निपातनात् क्यपि कुप्यं सुवर्णरजताभ्यामन्यत् । शकितकीति ये गोप्यमन्यत् । गुपौ रक्षणे । गोपायति । गुपि गोपनकुत्सनयोः । जुगुप्सते । गुपण् भासार्थः । गोपयति ॥

50. युप 51 रुप 52 लुपच् विमोहने । युप्यति रुप्यति लुप्यति । पुष्यादिङि अयुपत् अरुपत् अलुपत् । णौ व्यञ्जनादेर्णिनि क्तासनोर्वा कित्त्वे युपित्वा योपित्वा युयुपिषति युयोपिषति । एवं रुपलुपोरपि । घञि रोपः शरः । उणादौ

शिक्यास्याढ्येति ये निपातनात् रुप्यतीति रूप्यं रजतम् [ ३६४ ] । लुप्लृंती छेदने । लुम्पते लुम्पति ॥

53. डिपच् क्षेपे । डिप्यति डिडेप । पुष्यादयडि अडिपत् । डेपिता । शकितकीति ये डेप्यम् । डिपत् क्षेपे । डिपति । डिपण् क्षेपे । डेपयति ॥

54. ष्टूपच् समुच्छ्राये । षः स इति सत्वे स्तूप्यति । षोपदेशत्वान्नाम्यन्तस्थेति षत्वे तुष्टूप । पुष्याद्यडि अस्तूपत् । णौ सनि णिस्तोरेवेति षत्वे तुष्टूपयिषति । स्तूपिता स्तूपितुम् । ष्टुपण् समुच्छ्राये । स्तूपयति । आलि स्तूपः ॥

अथ भान्ताश्चत्वारः सेटश्च ॥

55. लुभच् गार्द्ध्ये । गार्द्ध्यमभिकाङ्क्षा । लुभ्यति लुलोभ । पुष्याद्यडि अलुभत् । लोभिष्यति । तादौ सहलुभेति वेटि लोब्धा लोभिता । वेट्त्वात् क्तयोर्नेट् लुब्धः लुब्धवान् । लुभत् विमोहने । लुभति । विलुभिताः केशाः ॥

56. क्षुभच् सचलने । संचलनं स्वभावान्यथात्वम् । क्षुभ्यति चुक्षोभ । पुष्याद्यडि अक्षुभत् । क्षोभिता । क्षुब्धविरिब्धेति क्तौ निपातनात् क्षुब्धो मन्थः । क्षुभितोऽन्यः । क्षुभि संचलने । क्षोभते । क्षुभश् संचलने । क्षुभ्नाति । चुरादिपठितेनैवाक्षुभदिति सिद्धं श्यविकरणार्थं तु दिवादावयमवश्य पठितव्य इति पुष्यादावपि पठितः ॥

57. णभ 58 तुभच् हिंसायाम् । पाठे इति नत्वे नभ्यति । णोपदेशत्वाददुरुपसर्गेति णत्वे प्रणभ्यति । ननाभ । पुष्याद्यडि अनभत् । नभिता । शकितकीति ये नभ्यम् ॥

58. तुभ । तुभ्यति तुतोभ । पुष्याद्यडि अतुभत् । तोभिता । णभि, तुभि हिंसायाम् । नभते तोभते । णभ तुभश् हिंसायाम् । नभ्नाति तुभ्नाति ॥

अथ शान्ताः षट् सेटश्च ॥

59. नशौच् अदर्शने । अदर्शनमनुपलब्धिः । नश्यति । नशः श इति नस्य णत्वे प्रणश्यति । ननाश नेशतुः । पुष्याद्यडि नशेर्नेशेति वा नेशादेशे अनेशत् अनशत् । औदित्त्वाद्वेट् नशो धुटीति ने नंष्टा नशिता । नशः श इति षान्तस्य न णत्वम् प्रनङ्क्ष्यति । शान्तस्य णत्वे प्रणशिष्यति । जनशो नीति वा क्त्वि नष्ट्वा नंष्ट्वा नशित्वा । वेट्त्वात् क्तयोर्नेट् नष्टः नष्टवान् । णत्वाभावे प्रनष्टः । क्विपि नशो वेति वा णत्वे नश्यतीति नक् । पक्षे यजसृजेति षत्वे नट् । क्रुत्संपदेति क्विपि जीवनक् जीवनट् । णौ फलवत्कर्तर्यपि चल्याहारार्थेति परस्मैपदे नाशयति । नश्याधने नाशयतीति नाशनः । निन्दहिंसेति णके विनशनशीलो विनाशकः ।

सृजीणिति द्वरपि नश्वरः नश्वरी । कर्तुर्जीवेति णमि जीवनाशं नष्टः । उणादौ जिभृक्षिति वदि वृद्धौ च नांष्ट्रा यातुधानाः ४४७ ॥

60. कुशाच् श्लेषणे । कुश्यति चुकोश । पुष्यादयडि अकुशत् । कोशिता । नाम्युपान्त्येति के कुशः । भाजगोणेति ङ्याम् कुशी आयसी चेत् । कुशान्या । घञि कोशः । गौरादित्वाङ् ङ्याम् कोशी । उणादौ तृपिवपीति कित्यले कुशलम् ४३८ । कुशिकमिभ्यां कुलकुमौ चेति मलकि कुल्मलं छेदनम् ५०३ ॥

61. भृशू 62 भ्रंशूच् अधःपतने । भृश्यति बभर्श । पुष्याद्यडि अभृशत् । भर्शिता । ऊदित्वात् क्त्वि वेट् भृष्ट्वा । क्त्वेति किच्चाभावे भर्शित्वा । वेट्त्वात् क्तयोर्नेट् भृष्टः भृष्टवान् । नाम्युपान्त्येति के भृशः ॥

62. भ्रंशूच् । भ्रश्यति बभ्रंश । पुष्याद्यडि अभ्रशत् । भ्रंशिता । ऊदित्वात् क्त्वि वेट् भ्रष्ट्वा भ्रंशित्वा । वेट्त्वात् क्तयोर्नेट् भ्रष्टः भ्रष्टवान् । वञ्चस्रंसेत्यत्र ध्वंसि-सहचरितस्य भ्वादेरेव भ्रंशेर्ग्रहणाद्यभावे यङि बाभ्रश्यते । भ्रंशुङ् अवस्रंसने । भ्रंशते अभ्रंशिष्ट बनीभ्रश्यते । क्विपि घञ्युपसर्गस्येति बाहुलकाद्दीर्घे वशाभ्रट् ॥

63. वृशाच् वरणे । वृश्यति ववर्श । पुष्याद्यडि अवृशत् । वर्शिता वृशितः । नाम्युपान्त्येति के वृशः । घञि वर्शः ॥

64. कृशाच् तनुत्वे । कृश्यति चकर्श । पुष्याद्यडि अकृशत् । कर्शिता । नाम्युपान्त्येति के कृशः । अनुपसर्गाः क्षीबेति क्तयोर्निपातनात्कृशः कृशवान् परि-कृशः परिकृशवान् । सोपसर्गस्य तु प्रकृशितः । ऋत्तृषमृषेति सेटः क्त्वो वा किच्वे कृशित्वा कर्शित्वा । उणादौ कृशेरानुक् कृशानुः ७९४ ॥

अथ षान्ता नव ॥

65. शुषंच् शोषणे । शुष्यति शुशोष । पुष्याद्यडि अशुषत् । अनुस्वारे-त्त्वान्नेट् शोष्टा । क्षैशुषीति क्तयोस्तस्य कत्वे शुष्कः शुष्कवान् । ऊर्ध्वात्पूरिति णमि ऊर्ध्वशोषं शुष्कः । उणादौ विलिभिलीति किति मे शुष्मं बलम् ३४० । शुषीषीति किर्तीरे शुषिरम् ४१६ । नाम्युपान्त्येति किदिः शुषिश्छिद्रम् ६०९ । सात्मनिति मनि निपातनात् शुष्मा वह्निःशुष्मा ९१६ ॥

66. दुषंच् वैकृत्ये । वैकृत्यं स्वभङ्गः । दुष्यति दुदोष । पुष्याद्यडि अदुषत् । अनुस्वारेत्त्वान्नेट् दोष्टा दुष्टः । णावुषु इत्युपान्त्यस्योति दूषयति । चित्ते वा चित्तं दूषयति चित्तं दोषयति प्रज्ञां दूषयति प्रज्ञां दोषयति । नन्द्याद्यने दूषणः । उणादौ कीकलीतीके दूषिका नेत्रमलः ३८ । स्यमिकषीति के दूषीका स एव ४६ ॥

67. श्लिषंच् आलिङ्गने । श्लिष्यति शिश्लेष । श्लिष इति पुष्याद्यङपवादे सकि आश्लिक्षत्कन्यां चैत्रः । क्रियाव्यतिहारे इत्यात्मनेपदे हशिट इति सकि व्यत्याश्लिक्षत कन्याम् । असत्त्वाश्लेषे तु नासत्त्वेति सको निषेधात्पुष्याद्यङि समाश्लिषज्जतु च काष्ठं चाश्लिषत् । आत्मनेपदे सिचि व्यत्यश्लिष्ट । अनुस्वारेत्त्वान्नेट् श्लेष्टा । गत्यर्थाकर्मकेति वा कर्तरि क्ते श्लिष्टो मैत्रः । पक्षे भावे श्लिष्टं मैत्रेण । साप्यादपि श्लिषशीङिति वा कर्तरि क्ते आश्लिष्टो मैत्रः कन्याम् । पक्षे कर्मणि क्ते आश्लिष्टा कन्या मैत्रेण । लिहाद्यचि श्लेषः । उणादौ भ्रूणतृणेति णे निपातनात् श्लक्ष्णः १८६ । मनिनि मनि श्लेष्मा ९११ । श्लिषू दाहे । श्लेषति अश्लेषीत् । श्लिषण् श्लेषणे । श्लेषयति ॥

68. प्रुषूच् दाहे । प्रुष्यति पुप्रोष । पुष्याद्यङि अप्रुषत् । प्रोषिता । ऊदित्वात् क्त्वि वेट् प्रुष्ट्वा । *धौ व्यञ्जनादेरिति सेटो वा कित्त्वे प्रुषित्वा प्रोषित्वा ।* वेट्त्वात् क्तयोर्नेट् प्रुष्टः प्रुष्टवान् । अनुदित्वमित्येके । उणादौ प्रुषेः प्लष् नेति से प्लक्षः ५६६ । प्रुषू दाहे । प्रोषति । प्रुष प्लुषश् स्नेहसेचनपूरणेषु । प्रुष्णाति ॥

69. ञितृषच् पिपासायाम् । तृष्यति ततर्ष । पुष्याद्यङि अतृषत् । तर्षिता । ञीच्छ्वाद्यज्ञानेच्छेति सति क्ते तृषितः तृषितवान् । मृषमृषेति सेटः क्त्वो वा कित्त्वे तृषित्वा तर्षित्वा । तृषिधृषीति नजिङि तर्षणशीलस्तृष्णक् । घञि तर्षः । कुत्संपदेति क्विपि तृट् । भिदाद्यङि तृषेत्येके । कालेनेति णमि तृतीयोक्तं वेति वा समासे द्व्यहतर्षम् द्व्यहे तर्षं गाः पाययति । उणादौ पृषीदिति किति णे तृष्णा १८७ । गृणयेष्टेति निपातनाद्वा ॥

70. तुष 71 हृषच् तुष्टौ । तुष्टिः प्रीतिः । तुष्यति तुतोष । पुष्याद्यङि अतुषत् । अनुस्वारेत्त्वान्नेट् तोष्टा तुष्ट्वा । प्रीत्यादित्वात्कर्तरि क्ते तुष्टः । तुष्टिः । नाम्युपान्त्येति के तुषः । उणादौ तुषितुदिभ्यां कित्यारे तुषारः ४०८ ॥

क्तः । रुष्टवान् रुषितवान् । भूषाक्रोधेत्यने रोषणशीलो रोषणः । कुत्संपदेति क्विपि रुट् । रुष हिंसायाम् । रोषति ॥

**73.** प्युष **74** प्युस **75** पुसच् विभागे । प्युष्यति पुप्योष । पुष्याद्यङि अप्युषत् । प्योषिता प्युषितः । वौ व्यञ्जनादेरिति क्त्वो वा कित्त्वे प्युषित्वा प्योषित्वा ॥

अथ सान्तास्त्रयोदश सेटश्च ॥

**74.** प्युस । प्युस्यति पुप्योस । पुष्याद्यङि अप्युसत् । प्योसिता प्युसितः प्युसित्वा प्योसित्वा ॥

**75.** पुस । पुस्यति पुपोस । पुष्याद्यङि अपुसत् । पोसिता पुसितः पुसित्वा पोसित्वा । उणादौ शीरीति किति ते पुस्तं लेप्यादिकर्म २०१ । स्वार्थे के पुस्तकम् ॥

**76.** विसच् प्रेरणे । विस्यति विवेस । पुष्याद्यङि अविसत् । वेसिता । नाम्युपान्त्येति के विसम् । उणादौ शीरीति किति ते विस्तं परिमाणम् २०१ ॥

**77.** कुसच् श्लेषे । कुस्यति चुकोस । पुष्याद्यङि अकुसत् । कोसिता कुसितः । उणादौ कुशिपिशीति कितीते कुसित ऋषिः २१२ । तस्य भार्या पूतक्रत्वित्यैकारादेशे च कुसितायी । उद्दटिकुल्यलीति कुमे कुसुमम् ३६१ ॥

**78.** असूच् क्षेपणे । अस्यति । उपसर्गादस्येति वात्मनेपदे निरस्यति निरस्यते । अकखादीति वा णत्वे प्रण्यस्यते प्रन्यस्यते प्रण्यस्यति प्रन्यस्यति । अस्यादेरिति पूर्वस्यात्वे आस आसतुः । पुष्याद्यङि श्वयतीत्यस्थादेशे आस्थत् । आत्मनेपदे तु शास्त्यसूवक्तीत्यङि उदास्थत उदास्थेताम् । असिता असितुम् । ऊदित्त्वात् क्त्वि वेट् अस्त्वा असित्वा । वेट्त्वात् क्तयोर्नेट् अस्तः अस्तवान् । श्रवर्णेति ण्यणि आस्यम् । कालेन तृप्तीति णमि तृतीयोक्तं वेति वा समासे अहरस्यासम् अहमस्यासं गाः पाययति । उणादौ शिक्यास्येति ये निपातनात् आस्यम् ३६४ । वाश्यसीत्युरे असुरः ४२३ । पदिपठीति इः असिः ६०७ । वीसञ्जीति थिकि अस्थि ६६१ । मस्यसीत्युरौ असुरिः रणः ६९९ । भृमृविस्युः असवः प्राणाः ७१६ । सोरसेरित्यृः स्वसा ८५३ ॥

**79.** यसूच् प्रयत्ने । प्रयस्यति आयस्यति । संपूर्वस्यानुपसर्गस्य च भ्रासभ्लासेति वा श्ये संयस्यति यस्यति । पक्षे शवि संयसति यसति । ययास । पुष्याद्यङि अयसत् । यसिता यसितुम् । ऊदित्त्वात् क्त्वि वेट् यस्त्वा यसित्वा । वेट्त्वात् क्तयोर्नेट् आयस्तः आयस्तवान् । णौ फलवत्कर्तरीणिग इत्यात्मनेपदे णिगि प्राणिक-

तृंकेति परस्मैपदेनापोदिते परिमुहायमायमेति पुनर्विहिते आयासयते शत्रुं मैत्रः। प्राच यमेति घिनणि प्रयासशीलः प्रयासी ॥

80. जसूच् मोक्षणे। जस्यति जजास। पुष्याद्यङि अजसत्। जसिता। ऊदित्त्वात् क्त्वि वेट् जस्त्वा जसित्वा। वेट्त्वात् क्तयोर्नेट् जस्तः जस्तवान्। णौ हिंसार्थत्वाभावाज्जासनाटेति कर्मणो वा न कर्मत्वम्। तेन द्वितीयैव चौरं बन्धनाज्जासयति मोचयतीत्यर्थः। हिंसार्थोपीत्येके। तन्मते वा कर्मत्वे शेषषष्ठ्याम् चौरस्योज्जासयति चौरमुज्जासयति। स्म्यजसेति रे अजासशीलमजस्रं पचति ॥ अजस्रः पाकः। धात्वर्थविशेषणत्वाद्धात्वर्थकर्तृक एवायं प्रयोज्यः। तेनाजस्रो घट इति प्रयोगोसाधुः। जसण् हिंसायाम्। चौरस्योज्जासयति ॥

81. तसू 82 दसूच् उपक्षये। तस्यति ततास। पुष्याद्यङि अतसत्। तसिता ऊदित्त्वात् क्त्वि वेट् तस्त्वा तसित्वा। वेट्त्वात् क्तयोर्नेट् तस्तः तस्तवान्। तिक्कृताविति तिकि वितस्तिः। उणादौ दम्यमीति ते वितस्ता नदी २००। भ्रुशेति तौ वितस्तिः ६४६ ॥

82. दसू। दस्यति ददास। पुष्याद्यङि अदसत्। दसिता। ऊदित्त्वात् क्त्वि वेट् दस्त्वा दसित्वा। वेट्त्वात् क्तयोर्नेट् दस्तः दस्तवान्। ण्यन्तस्य क्ते णौ दान्तशान्तेति वा निपातनात् दस्तः दासितः। उणादौ भीवृधीति रे दस्रौ देववैद्यौ ३८७। यजिशुन्धीति युः दस्युश्चौरः ८०१ ॥

83. वसूच् स्तम्भे। वस्यति ववास। पुष्याद्यङि अवसत्। वसिता। ऊदित्त्वात् क्त्वि वेट् वस्त्वा वसित्वा। वेट्त्वात् क्तयोर्नेट् वस्तः वस्तवान्। उणादौ दम्यमीति ते वस्तश्छागः २००। भ्रुशेति तौ वस्तिर्नाभेरधः ६४६। वसं निवासे। वसति वस्ता। वसिक् आच्छादने। वस्ते। वसण् स्नेहच्छेदावहरणेषु। वासयति ॥

84. वुसच् उत्सर्गे। उत्सर्गस्त्यागः। वुस्यति वुवोस। पुष्याद्यङि अवुसत्। वोसिता वुसितः। नाम्युपान्त्येति के वुसम् ॥

85. मुसच् खण्डने। मुस्यति मुमोस। पुष्याद्यङि अमुसत्। मोसिता मुसितः। उणादौ शीरीति किति ते मुस्ता २०१। तृपिवपीति कित्यले मुसलम् ४६८। पान्तोयमित्यन्ये ॥

86. मसैच् परिणामे। परिणामो विकारः। परिमाणे इत्यन्ये। मस्यति ममास। पुष्याद्यङि अमसत्। मसित्वा। ऐदित्त्वात् क्तयोर्नेट् मस्तः मस्तवान्। घञि मासः। मासिति प्रकृत्यन्तरं चन्द्राभिधायि। पूर्णमासा युक्ता माम्य पौर्णमासीति निर्देशा-

दणि पौर्णमासी । उणादौ दम्यमीति ते मस्तः २०० । स्वार्थे के मस्तकः । मदिपटीति इः मसिः शस्त्री ६०७ । कृसिकमीति तुनि मस्तु दधिमण्डः ७७३ ॥

अथ शमादीनां सेटां समकं श्ये दीर्घार्थं मदैच्पर्यन्तं क्रुमूपर्यन्तं चाटकं घिनणर्थं प्रदर्श्यते । तत्र च बहुत्वान्मान्ताः पडादौ ।

87. शमु 88 दमूच् उपशमे । शम्सप्तकस्येति श्ये दीर्घे शाम्यति । नेर्ङ्गादेति नेर्णत्वे प्रणिशाम्यति । शशाम शेमतुः । पुष्याद्यङि अशमत् । णौ शमोऽदर्शने इति ह्रस्वे शमयति रोगम् । दर्शने तु निशामयति रूपम् । शमिता शमितुम् । ऊदित्त्वात् क्त्वि वेट् शान्त्वा शमित्वा । वेट्त्वात् क्तयोर्नेट् शान्तः शान्तवान् । णौ क्ते णौ दान्तशान्तेति वा निपातनात् शान्तः । पक्षे सेट्क्तयोरिति णेर्लुकि शमितः । शकितकीति ये शम्यम् । क्विप्यहन्पञ्चमेति दीर्घे मो न इति मस्य नत्वे तस्य च परेऽसत्वाज्ज्ञो न इति लुगभावे नोमशान इत्यत्र प्रशानो वर्जनादनुस्वारानुनासिकपूर्वस्य शस्याभावे तवर्गस्येति नस्य ञत्वे प्रशाञ् चरति । शमष्टकाद्घिनण् मोकमीति वृद्ध्यभावे शमशीलः शमी । घञि शमः । गौरादित्वाङ्ङ्याम् शमी । क्तौ शान्तिः । उणादौ शमिमनिभ्यां खः शङ्खः ८४ । कमितमीति डित्युद्गे शुङ्गाः कन्दल्यः १०७ । पञ्चमाड्डः शण्ड उत्सृष्टः पशुः १६८ । शमिषणिभ्यां ढः शण्ढः क्लीबम् १७९ । कैशीशमीति कौ शङ्कुः ७४९ । शक्नादिति तु शक कावित्ति शकेरुरिति ८९१ ॥

88. दमू । दाम्यति ददाम । पुष्याद्यङि अदमत् । दमिता । ऊदित्त्वात् क्त्वि वेट् दान्त्वा दमित्वा । वेट्त्वात् क्तयोर्नेट् दान्तः दान्तवान् । णायमोकम्यमीति ह्रस्वे फलवत्कर्तरीगित इत्यात्मनेपदेणिगि प्राणीति परस्मैपदेनापोदिते परिमुहायमेति पुनर्विहिते गतिबोधेत्याणिक्कर्तुः कर्मत्वे च दाम्यत्यश्वः दमयतेऽश्वं चैत्रः । अकखादीति वा नेर्णत्वे प्रणिदमयते प्रनिदमयते । शकितकीति ये दम्यः । नन्द्यादने कुलदमनः । भृवृजीति खे अरिंदमः । णौ दान्तशान्तेति क्ते वा निपातनात् दान्तः दमितः । शमष्टकादिति घिनणि दमशीलो दमी । घञि दमः । उणादौ पञ्चमाड्डः दण्डः १६८ । दम्यमीति ते दन्तः २०० । दमेरुनसूनसौ दमुनाः दमूनाश्च वह्निः ९८७ । यमिदमिभ्यां डोस् दोर्बाहुः १००५ ॥

89. तमूच् काङ्क्षायाम् । ताम्यति ततास । पुष्याद्यङि अतमत् । तमिता । ऊदित्त्वात् क्त्वि वेट् तान्त्वा तमित्वा । वेट्त्वात् क्तयोर्नेट् तान्तः नितान्तः तान्तवान् । शमष्टकाद्घिनणि मोकमीति वृद्ध्यभावे तमी । घञि तमः । गौरादित्वाङ्ङ्याम् तमी

रात्रिः। उणादौ निजिश्चिति किति रे दीर्घे न ताम्रम् ३९२। तम्यणीत्यसे तमसा नदी ५६९। क्रमितमीत्यादुपान्त्येत्वे च तिमिः ६१३। असित्यसि तमः ९५२॥

90. श्रमूच् खेदतपसोः। श्राम्यति शश्राम। पुष्यादयडि अश्रमत्। श्रमिता। ऊदित्त्वात् क्त्वि वेट् श्रान्त्वा श्रमित्वा। वेट्त्वात् क्तयोर्नेट् श्रान्तः श्रान्तवान्। शकितकीति ये श्रम्यम्। नन्द्याद्यने श्रमणः। स्त्रियामपि श्रमणा। घञि विश्रमेर्वेति वा वृद्ध्यभावे विश्रमः विश्रामः। शमष्टकादिति घिनणि श्रमी॥

91. भ्रमुच् अनवस्थाने। अनवस्थानं देशान्तरगमनम्। भ्रासभ्लासेति वा श्ये भ्राम्यति। पक्षे शवि भ्रमति। बभ्राम। पुष्यादयडि अभ्रमत्। भ्रमिता। ऊदित्त्वात् क्त्वि वेट् भ्रान्त्वा भ्रमित्वा। वेट्त्वात् क्तयोर्नेट् भ्रान्तः भ्रान्तवान्। शमष्टकादिति घिनणि भ्रमी। घञि मोकमीति वृद्ध्यभावे भ्रमः। गौरादित्वाड् ङ्याम् भ्रमी। उणादौ तृभ्रम्यदीत्यौ भूमादेशे च भूमिर्वायुः। बाहुलकाद्भूमाभावे भ्रमिर्भ्रमः ६११। भ्रमिगमीति डिद्उः भ्रूः ८४३। भ्रमू चलने। भ्रमति। भ्रासभ्लासेति वा श्ये भ्राम्यति॥

92. क्षमौच् सहने। क्षाम्यति चक्षाम। पुष्यादयडि अक्षमत्। औदित्त्वाद्वेट् क्षन्त्वा क्षमिता। वेट्त्वात् क्तयोर्नेट् क्षान्तः क्षान्तवान्। शमष्टकाद्धिनणि क्षमी। घञि मोकमीति वृद्ध्यभावे क्षमः। क्तौ क्षान्तिः। ऊदित्वमित्येके क्षान्त्वा क्षमित्वा। क्षमौषि सहने। क्षमते अक्षमिष्ट। षित्वादङि क्षमा॥

अथ दान्तः॥

93. मदैच् हर्षे। माद्यति ममाद। पुष्यादयडि अमदत्। मदिता। ऐदित्त्वात् क्तयोर्नेट् रदादित्यत्र मदेर्यर्जनान्नत्वाभावे मत्तः मत्तवान्। णौ हर्षग्लपनयोर्घटादित्वाद्ध्रस्वत्वे मदयति। अन्यत्र प्रमादयति उन्मादयति। अनुपसर्गाद्यममदेति ये मद्यम्। सोपसर्गाद् घ्यणि प्रमाद्यम्। नन्द्याद्यने मदयतीति मदनः। इरंमद इति खशि निपातनात् इरया माद्यति इरंमदो मेघज्योतिः। उदः पचीतीष्णौ उन्मादशील उन्मदिष्णुः। शमष्टकादिति घिनणि मदशीलो मादी उन्मादी। व्यधजपेत्यलि मदः। सोपसर्गात्तु घञि प्रमादः। समदप्रमदौ हर्षे संमदः कन्यानाम् प्रमदः कोकिलानाम्। उणादौ तुदिमदीति छे मच्छो मत्स्यः १२४। मदेः स्यः मत्स्यः ३८३। गौरादित्वाड् ङ्याम् मत्स्यस्य य इति यलुकि मत्सी। मदिमन्दीतीरे मदिरा ४१२। मीज्यजीति सरे मत्सरः ४३९। मदिण् तृप्तियोगे। मादयते॥

94. क्लमुच् ग्लानौ। भ्रासभ्लासेति वा श्ये ष्ठिवुक्लम्याचमीति दीर्घे क्लाम्यति।

पक्षे शवि क्लामति । चक्राम । पुष्यादयङि अक्रमत् । क्रमिता । क्त्वादिस्त्वाद्वेट् क्रान्त्वा क्रमित्वा । वेट्त्वात् क्तयोर्नेट् क्रान्तः क्रान्तवान् । शमष्टकादिति घिनणि क्रमी । घञि क्रमः ॥ अवसितं शमादीनां सप्तकमष्टकं च ॥

अथ प्रकृतवर्णक्रमेण हान्ताश्चत्वारः सेटश्च ॥

95. मुहौच् वैचित्त्ये । वैचित्त्यमविवेकः । मुह्यति मुमोह । पुष्यादयङि अमुहत् । औदित्त्वाद्वेट् धुट्प्रत्यये पदान्ते च मुहद्रुहेति वा हस्य घत्वे मोग्धा मोढा । पक्षे मोहिता । उन्मुक् उन्मुट् । वेट्त्वात् क्तयोर्नेट् मुग्धः मूढः मुग्धवान् मूढवान् । णौ फलवत्कर्तरीगित इत्यारम्भेपदेणिगि प्राणिकर्तृकेति परस्मैपदेनापोदिते परिमुहायमेति पुनर्विहिते परिमोहयते शत्रुम् । परेर्देवीति घिनणि परिमोहशीलः परिमोही । घञि मोहः । उणादौ मूमुहोः मुन्मूरौ चेति खे मूर्खः ८६ । मुहेः किदिल्युरौ मुहुरिर्गौः ७०० । मुहिमिथ्यादेः किदित्युसि मुहुः कालावृत्तिः १००० ॥

96. द्रुहौच् जिघांसायाम् । क्रुधद्रुहेति सम्प्रदानत्वे मैत्राय द्रुह्यति । दुद्रोह । पुष्यादयङि अद्रुहत् । औदित्त्वाद्वेट् मुहद्रुहेति वा हस्य घत्वे द्रोग्धा द्रोढा द्रोहिता । क्विपि मित्रध्रुक् मित्रध्रुट् । वेट्त्वात् क्तयोर्नेट् द्रुग्धः द्रूढः । युजभुजेति घिनणि द्रोहशीलो द्रोही । घञि द्रोहः । उणादौ रुद्रुहेः किदितीणे द्रुहिणो ब्रह्मा २९९ ॥

97. ष्णुहौच् उद्गिरणे । षः स इति सत्वे स्नुह्यति । षोपदेशत्वाचाम्यन्तस्थेति षत्वे सुष्णोह सुष्णोहिथेति । पुष्यादयङि अस्नुहत् । औदित्त्वाद्वेट् मुहद्रुहेति हस्य वा घत्वे स्नोग्धा स्नोढा स्नोहिता । वेट्त्वात् क्तयोर्नेट् स्नुग्धः स्नूढः स्नुग्धवान् स्नूढवान् । उणादौ नाम्युपान्त्यक्रुमिति किदिः स्नुहिर्महावृक्षः ६०९ ॥

98. ष्णिहौच् प्रीतौ । षः स इति सत्वे स्निह्यति । षोपदेशत्वाचाम्यन्तस्थेति षत्वे सिष्णेह । पुष्यादयङि अस्निहत् । औदित्त्वाद्वेट् मुहद्रुहेति हस्य वा घत्वे स्नेग्धा स्नेढा स्नेहिता । वेट्त्वात् क्तयोर्नेट् स्निग्धः स्नीढः स्निग्धवान् स्नीढवान् । क्विपि स्निक् स्निट् । ऋत्विगिति हस्य गत्वे सूत्रनिर्देशादेवोदो दलुकि सस्य षत्वे च उष्णिक् । अजादेरित्यापि उष्णिहा । घञि स्नेहः । ष्णिहण् स्नेहने । स्नेहयति ॥ केचित्तु शमू दमु तमू श्रमू भ्रमु क्षमौ मदै असु यसू जसू दसू वसू प्युस प्युस पुस ब्रुष् निस कुस कुश बुस मुस मसै लुट उच भृशू भ्रशू वृश कृश ञितृष हष रुष डिप डूप कुप गुप युप रुप लुप लुभ णभ तुभ क्लिदौ ञिमिदा ञिक्ष्विदा ऋधु गृधुनां पुष्यादित्वं नेच्छन्ति । तन्मते पुष्याद्यभावे सिचि अशमीत् अदमीत् अभमीत् अयसीत् अलो-

टीत् अक्षोपीत् अकोपीत् अलोपीत् अहर्षीदित्यादि ॥ वृत् पुषादिः ६७ । पुषादिर्दिवाद्यन्तर्गणो वर्तितः संपूर्ण इत्यर्थः ॥

अथात्मनेपदिषु सूयत्यादिर्नवकः क्तयोस्तस्य नत्वार्थं प्रदर्श्यते । तत्र लाघवार्थमादावूदन्तौ सेटौ च ॥

99. पूङीच् प्राणिप्रसवे । षः स इति सत्वे इङित इत्यात्मनेपदे सूयते । षोपदेशत्वाचास्यन्तस्येति षत्वे सुषुवे । औदित्वाद्वेट् सोता सविता । क्त्युवर्णादिति नेट् सूत्वा । सूयत्यादीति क्तयोस्तस्य नत्वे सूनः सूनवान् प्रसूनं कुसुमम् । अत एवायमप्राणिप्रसवे इत्यन्ये । सनि ग्रहगुहश्चेति नेट् णिस्तोरेवेति नियमात्षत्वाभावे सुसूषते । युवर्णस्यालि प्रसवः । पूङौक् प्राणिगर्भविमोचने । सूते । षूत् प्रेरणे । सुवति ॥

100. दूङ्च् परितापे । परितापः खेदः । दूयते दुदुवे दविता । क्त्युवर्णादिति नेट् दूत्वा । सूयत्यादीति क्तयोस्तस्य नत्वे दूनः दूनवान् । उणादौ शीरीति किति ते दूतः २०१ ॥

अथेदन्ताः सप्त डीङोऽन्येऽनिटश्च ॥

101. दीङ्च् क्षये । दीयते । दीय् दीङः क्ङिति स्वरे उपदिदीये उपदिदीयाते । दीङः सनीति वात्वे दिदासते दिदीषते । नामिनोऽनिङिति सनः कित्त्वादत्र न गुणः । यबक्ङितीत्यात्वे उपदाय । दारूपस्य यक्ङिद्वत्वाद्दासंज्ञाया अभावे इश्च स्थेति नेत्वम् उपादास्त । दाता । अक्ङिद्विषये एवात्वे । तन्व्यधीति णे दायः । घञि उपदायः । सूयत्यादीति क्तयोस्तस्य नत्वे दीनः दीनवान् । अनुस्वारेत्त्वादत्र नेट् । उणादौ जीण्शीदीति किति ने दीनः २६१ ॥

102. धीङ्च् अनादरे । धीयते दिध्ये । अनुस्वारेत्त्वान्नेट् धेता धेतुम् । सूयत्यादीति क्तयोस्तस्य नत्वे धीनः धीनवान् । आधारार्थोऽयमित्यन्ये । द्रोणो भुवं धीयते ॥

103. मीङ्च् हिंसायाम् । मीयते मिम्ये । अनुस्वारेत्त्वान्नेट् ङित्त्वान्न मिग्मीग इति नात्वम् मेता मेतुम् । अन्याप्यात्वमित्येके माता मातुम् । सनि मिमीमेति स्वरस्येति इत्वाभावे च मित्सते । सूयत्यादीति क्तयोस्तस्य नत्वे मीनः मीनवान् । उणादौ जीण्शीति किति ने मीनः २६१ । मीज्यजीति सरे मेसरी वर्णविशेषः ४३९ । निनीभ्यादिभ्यो रुः मेरुः ८०६ । मीग्श् हिंसायाम् । मीनाति मीनाति ॥

104. रींङ्च् स्रवणे। रीयते रिर्ये। अनुस्वारेत्त्वान्नेट् रेता रेतुम्। सूयत्यादीति क्तयोस्तस्य नत्वे रीणः रीणवान्। णावर्तिरीति पौ पुस्पाविति गुणे रेपयति। विचि रेः। मतौ स्त्रियाम् रेवती। उणादौ रीशीभ्यां फः रेफः ३१४। अजिस्येति णौ रेणुः ७६८। सुरीभ्यां तस् रेतः ९७८। रीवृभ्यां पस् रेपः पापम् ९८१। रींश् गतिरेषणयोः। रिणाति॥

105. लींङ्च् श्लेषणे। लीयते विलिल्ये। अनुस्वारेत्त्वान्नेट् यबक्ङितीति लीङ्लीनोर्वेति वात्वे विलाता विलेता विलास्यते विलेष्यते। यपि विलाय विलीय। अखलचलीत्यनुवृत्तेः खलि दुर्लयः। अचि निलयः। अलि प्रलयः। णौ लियो नोन्तः स्नेहद्रवे इति ने घृतं विलीनयति। लिय इति इकारप्रश्लेषादात्वे नान्ताभावे लो ल इति वा ले घृतं विलालयति। पर्त्तोर्तरीति पौ विलापयति। लीङ्लिनोर्वेत्यात्मनेपदे आत्वे च जटाभिरालापयते। श्येनो वर्तिकामपलापयते। मायावी लोकमुल्लापयते। तन्व्यधीति णे विलायः। सूयत्यादीति क्तयोस्तस्य नत्वे लीनः लीनवान्। लींश् श्लेषणे। लिनाति लेष्यति। लींण् द्रवीकरणे। युजादेर्न वेति वा णिचि विलाययति विलयति॥

106. डींङ्च् गतौ। डीयते डिड्ये डयिता। डीयश्वीति क्तयोर्नेट् सूयत्यादीति क्तयोस्तस्य नत्वे डीनः डीनवान्। अयमपि विहायसां गतावित्यन्ये। डीङ् विहायसां गतौ। डयते। क्तयोरिटि न डीङिति कित्त्वाभावाद्गुणे डयितः डयितवान्। भ्वादेरेवेह दयार्थं सूयत्यादित्वार्थं च पाठ इत्येके। तन्मते डयतेरपि डीनः डीनवान्॥

107. व्रींङ्च् वरणे। व्रीयते। योनेकस्वरस्येति यापवादे संयोगादितीयि विव्रिये। अनुस्वारेत्त्वान्नेट् व्रेता। सूयत्यादीति क्तयोस्तस्य नत्वे व्रीणः व्रीणवान्। व्रींश् वरणे। व्रीणाति॥ वृत् स्वादिः ९। सूयत्यादिर्दिवाद्यन्तर्गणो नवको वर्णितः संपूर्ण इत्यर्थः॥

अथेदन्तास्त्रयोनिटश्च॥

108. पींङ्च् पाने। चैत्रो जलं पीयते पिप्ये। अनुस्वारेत्त्वान्नेट् पेता पीतः। आपीयन्त। उणादौ पीपृडो ह्रस्वश्चेति द्वे पिप्पम् १२९। गुलुञ्चपिलिपिञ्छेति द्वे निपातनात् पिञ्छम् १२६। पीविजीति किति ठे पीठम् १६३। पीडः किदिति लौ पीलुर्गजवृक्षौ ८२१॥ मांङ्च् माने इत्यपि कश्चिदधीते। मायते मितम्। क्वे ई-

व्यञ्जने इतीत्वे मीयते। नेर्ङ्गदेति नेर्णत्वे प्रणिमायते। शित्यादत्र नेत्वम्। माङ् माने। माति। माङ्क् मानशब्दयो। मिमीते॥

109 ईङ्च् गतौ। ईयते प्रतीयते। गुरुनाम्यादेरिति परोक्षाया आमि अया चक्रे। व्यपदेशिवद्भावेन गुरुनाम्यादित्वमाम नेच्छन्त्येके। तन्मते आमभावे ईये ईयाते ईयिरे। अनुस्वारेत्त्वान्नेट् एता एतुम्। य एचेति ये उपेयम्। अति प्रत्यय॥

110 प्रीङ्च् प्रीतौ। प्रीयते। सयोगादितीयि पिप्रिये। अनुस्वारेत्त्वान्नेट् प्रेता प्रीत। णौ नामिन इति वृद्धौ प्राययति। नाम्युपान्त्येति के प्रिय। प्रीगश् तृप्ति कान्त्यो। प्रीणीते प्रीणाति। प्रीग्ण् तर्पणे। युजादेरिति वा णिचि धूग्प्रीग इति नेन्ते प्रीणयति। पक्षे प्रयते प्रयति॥

अथ जान्तावनिट्गौ च॥

111 युजिच् समाधौ। समाधिश्चित्तवृत्तिनिरोध। युज्यते युयुजे। अनुस्वारेत्त्वान्नेट् योक्ता योक्तुम्। कुप्याभिद्येति क्यपि निपातनात् युज्यतेनेनेति युग्य वाहनम्। घ्यणि योग्यमन्यत्। कर्मणोणि न्यङ्क्वादीति गत्वे गोयोग। घ्यणि नियो-युज इति गत्वाभावे नियोक्तु शक्य नियोज्यम् प्रयोज्यम। नाम्युपान्त्येति के न्यङ्क्वेति गत्वे युगम् सयुगम्। क्विपि युज इत्यत्र युजस्तेर्मत्वाभान्ताभावे युक् युजौ युज अश्वयुक्। अस्यापि नोन इत्यन्ये युङ् युञ्जौ युञ्ज। गत्यर्थाकर्मकेति कर्तरि क्ते कुशलायुक्तेति वा सप्तम्याम् आयुक्तो देवार्चायाम् देवार्चाया वा। युजभुजेति घिनणि योगशीलो योगी। नीदाम्विति करणे त्रटि योक्त्रम्। घञि योग। आधारेनटि योजनम। णौ णिवेत्तीत्यने योजना। तृत्सपदादि क्विपि युजमापन्ना मुनय। उणादौ युयुजीति किन्याने युजान सारथि २७७। निजि युजेर्ग इति किति मे युग्मम् ३४८। युजृपी योगे। युङ्क्ते युनक्ति। युजण् सपर्चने। युजादेरिति वा णिचि योजयति योजति॥

112 सृजिच् विसर्गे। शकिन इत्यात्मनेपदे सृज्यते माला दैव। कर्मकर्तरि कथातादिति क्ये सृज्यते माला स्वयमेव। ससृजे। अनुस्वारेत्त्वान्नेट् अ सृजिदृश इत्यति स्रष्टा। सृष्ट सृष्टवान। पाणिसमवाभ्यामिति स्वयपवादे ध्यणि पाणिसर्ग्या समवसर्ग्या रज्जु। सर्वविरिति निनाणि सम्मर्गशील ससर्गी विसर्गी। घञि निसर्ग। क्रुत्सपदेति कमाण क्विपि कर्मकिगिति निरपाद्दत्तो न्य स्रक्। ब्याधिभ्यति क्तौ सृष्टि। उणादौ स्यादिमजिभ्या मिध्रजौ चेन्तु रज्जु १७३। सजन् विसर्गे। सृजति॥

अथ तान्तः सेट् च ॥

**113.** वृतूंचि वरणे । वृत्यते ववृते वर्तिता । ऊदित्त्वात् क्त्वि वेट् वृत्त्वा वर्तित्वा । वेट्त्वात् क्तयोर्नेट् वृत्तः वृत्तवान् । वृतूङ् वर्तने इत्यस्यैव वरणे दिवादित्वं विधीयते । तेन वरणेऽद्युतादित्वाड्युद्भ्योऽद्यतन्यां वृद्भ्यः स्यसनोरिति वात्मनेपदं नास्ति । अवर्तिष्ट वर्तिष्यते अवर्तिष्यत विवर्तिषते । वरणादन्यत्र तु अवृतत् वर्त्स्यति अववर्त्स्यदित्यपि भवति । अन्ये तु वा वृतूचि वरणे इत्यधीयते वरणे दिवादित्वं वा प्रतिपन्नाः । तन्मते वरणेऽपि पक्षे शवि वर्तते । द्युद्भ्य इत्यद्यतन्यां वात्मनेपदे अवर्तिष्ट । पक्षे शेषात्परस्मायिति परस्मैपदे द्युताद्यङि अवृतत् । वृद्भ्यः स्यसनोरिति वात्मनेपदे वर्तिष्यते । शेषात्परस्मायिति परस्मैपदे न वृद्भ्य इतीडभावे वर्त्स्यति । सनि विवर्तिषते । पक्षे माग्वदिति परस्मैपदे विवृत्सति । केचित्तु वाशब्दादिरनेकस्वरोऽयं धातुरित्याहुः वावृत्यते ।

ततो वावृत्यमाना सा ॥

अथ दान्तास्त्रयोऽनिटश्च ॥

**114.** पदिंच् गतौ । गतिर्यानं ज्ञानं च । पद्यते । नेर्ङ्गदेति नेर्णत्वे प्रणिपद्यते । प्रपेदे । ञिच् ते पदस्तलुक् च उदपादि भैक्षम् । अनुस्वारेत्त्वादनिट् पत्ता संपन्नः । यङि वञ्चस्रंसेति पूर्वस्य नीः आपनीपद्यते । सनि रभलभेति स्वरस्येति द्वित्वाभावे च प्रपित्सते । लषपतेत्युकणि उपपादशील उपपादुकः । भूपाक्रोधेत्यने पदनो धर्मस्य । पदरुजेति कर्तरि घञि पादः । समजेति क्यपि निपद्या वर्षादयः । क्लीबे इत्यलि पदम् । क्रुत्संपदेति क्विपि सपद् प्रतिपद् । विशपतपदेति णमि गेहानुप्रपादमास्ते गेहं गेहमनुप्रपादम् । जातेः संपदा चेति स्साति सर्वं शस्त्रमग्निसात्संपद्यते । उणादौ अर्तीरीति मे पद्मम् ३३८ । भीवृधीति रे पद्रो ग्रामः ३८७ । ग्रवितिधीति वौ निपातनात् पदविः । ङ्याम् पदवी मार्गः [ ७०६ ] । मुशेति तौ पत्तिः ६४६ । कासिपदीति णिदूः पादूः ८३९ । कपि पादुका । पदणि गतौ । अदन्तः । उपपदयते ॥

**115.** विदिंच् सत्तायाम् । सत्ता भावः । विद्यते विविदे । अनुस्वारेत्त्वादनिट् वेत्ता वित्तः । किंकिलास्त्यर्थयोर्भविष्यन्ती अस्ति नाम विद्यते नाम तत्र भवान्परदारान्प्रकरिष्यते नावकल्पयामि न श्रद्दधे । शकधृषेति तुमि विद्यते भोक्तुम् । विदक् ज्ञाने । वेत्ति विदितः । विद्लृंती लाभे । विन्दते विन्दति वित्तः । वित्तं धनं प्रतीतं च । विदिंप् विचारणे । विन्ते । ऋह्रीति वा क्तयोस्तस्य नत्वे वित्तम् विन्नम् । यदाह ।

वेत्तेर्विदित विन्तेर्विन्न वित्त च विद्यतेर्विन्नम् ।

वित्त धने प्रतीते च विन्दतेर्विन्नमन्यत्र ॥

विदिण् चेतनाख्याननिवासेषु । वेदयते ॥

116 खिदिंच् दैन्ये । खिद्यते चिखिदे । अनुस्वारेत्त्वादनिट् खेत्ता खिन्न । खिदत् परिघाते । खिन्दति । खिदिंप् दैन्ये । खिन्ते ॥

अथ धान्तास्त्रयोनिटश्च ॥

117 युधिंच् सम्प्रहारे । सम्प्रहारो हननम् । युध्यते युयुधे । अनुस्वारेत्त्वादनिट् योद्धा युद्ध । णौ फलवत्कर्तरीङित इत्यात्मनेपदापवादे चल्याहारेति परस्मैपदे योधयति काष्ठ नेत्र । नाम्युपान्त्येति के युध । सहराजेति क्वनिपि सहयुद्धवान् सहयुध्वा राजयुध्वा । स्थादिभ्य इति के आयुध्यन्तेनेन आयुधम् । शासूयुधीति खलपवादेने दुर्योधन सुयोधन । आधारेनटि आयोधनम् ॥

118 अनो रुधिंच् कामे । काम इच्छा । अनुपूर्वो रुधि कामे दिवादि । अनुरुध्यते अनुरुरुधे । अनुस्वारेत्त्वादनिट् अनुरोद्धा अनुरुद्ध । समनुव्येति घिनणि अनुरोधशीलोनुरोधी । कामादन्यत्र रुधादित्वाद्रुधामिति श्ने अनुरुन्द्धे अनुरुणद्धि । णौ रोधयति ॥

119 बुधिं 120 मनिंच् ज्ञाने । बुध्यते बुबुधे । दीपजनेति कर्तर्यद्य-न्यात्मनेपदे ते वा ञिचि तलुकि च अबोधि । पक्षे धुड्ह्रस्वादिति सिचो लुकि अबुद्ध । अनुस्वारेत्त्वादनिट् बोद्धा । ज्ञानेच्छेति सति क्ते राज्ञा बुद्ध । णौ फलवत्क-र्तर्यपीङित इत्यात्मनेपदापवादे चल्याहारार्थेति परस्मैपदे बोधयति पद्म रविः । नाम्युपान्त्येति के बुध । अजातेरिति णिनि प्रतिबोधशील प्रतिबोधी । गम्यादि-न्याद्यस्त्र्येति साधु । उणादौ जीणृशीदीति किति ने बुध्नो मूल रुद्रश्च २६१ । युयुजीति कित्याने बुधान सूरि २७७ । किलिपिलीत्यौ बोधिस्तत्त्वज्ञानम् ६०८ । बुधृग् बोधने । बोधते बोधति अबुधत् । बुध अवगमने । बोधति ॥

अथ नान्तास्त्रयो मनिवर्जा सेटश्च ॥

120 मनि । मन्यते । मन्यस्येत्यनिकुत्सने कर्मणि वा चतुर्थीम् न त्वा तृणाय मन्ये न त्वा तृण मन्ये । अनुस्वारेत्त्वादनिट् मन्ता । यमिरमीति तो लुकि मत्वा । ज्ञानेच्छेति मनि क्ते राज्ञा मत । मन्याण्णिन् क्यङ्मानीति पुंवत्त्वे दर्श-नीयमानी भार्याया । कर्तु स्वस्य पटुमात्मान मन्यते पटुमन्य । परत स्त्रीति पुंस्त्वापवादे खित्यनीति ह्रस्वे पटुम्मन्या । पक्षेमक्षोपपदात्परे इनि णिनि पटुमानी । समजेति क्यपि मन्या वकाञ्चिकामिरा । मज्ञाया अन्यत्र स्त्रिया क्तौ मति ।

उणादौ कीचकपेचकेत्यके निपातनात् मेनका ३३ । मनेर्मत्मातौ चेत्यङ्गे मतङ्गः मातङ्गश्च हस्ती १०० । शाशपीति दे मन्दः २३७ । मनेरुदेतौ चास्य वेत्यौ मुनिः । मेनिः संकल्पः । मनिर्धूमवर्तिः ६१२ । भृमृत्रिल्युः मनुः ७१६ । मनिजनिभ्यां धतौ चेत्युः मधु ७२१ । कृसिकमीति तुनि मन्तुरागः ७७३ । यजिशुन्धीति युः मन्युः ८०१ । असिल्यसि मनः ९९२ । रुयर्तील्युसि मनुः प्रजापतिः ९९७ । मांसमिति तु मानेर्मोवायदीति से ९६४ । मठर इत्यपि मठतेर्ऋच्छिचटील्यरे ३९७ । मनूयि बोधने । मनुते । मनिण् स्तम्भे । मानयते । आर्लि मानः ॥

121. अनिच् प्राणने । अन्यते । अस्यादेरिति पूर्वस्यात्वे आने । अनिता अनितः । णान्तोयमित्येके अण्यते आणे । अन श्वसक् प्राणने । अनिति । द्विर्व्यन्तेपीति णत्वे प्राणिति ॥

122. जनैचि प्रादुर्भावे । प्रादुर्भाव उत्पत्तिः । जा ज्ञेति जादेशे जायते । गमहनेत्युलुकि जज्ञे । दीपजनेत्यद्यतन्याः कर्तृविहिते ते वा ञिचि न जनेति वृद्धयभावे अजनि । पक्षे सिचि अजनिष्ट । णौ कगेवन्विति ह्रस्वे जनयति । ये न वेति क्ङिति वात्वे जायते जन्यते जाजायते जञ्जन्यते । जनिता । णावीगित इति फलवत्कर्तर्यात्मनेपदापवादे चल्याहारार्थेति परस्मैपदे जनयति धर्मम् । करणे घञि अभिजनो गोत्रम् । ऐदित्वात् क्तयोर्नेट् गत्यर्थाकर्मकेति वा कर्तरि क्ते आः खनीत्यात्वे जातः जातवान् । पक्षे भावे क्ते जातं चैत्रेण । साप्यादपि श्लिषशीङिति क्ते अनुजातो माणवको माणविकाम् । पक्षे कर्मणि क्ते अनुजाता माणविका माणवकेन । भव्यगेयेति निपातनाद्वा कर्तरि घ्यणि जन्यश्चैत्रः । पक्षे भावे जन्यं चैत्रेण । अचि जनः । वन्याङ् पञ्चमस्य विजावा । अनोर्जनेर्डः अनुजः । सप्तम्याः मन्दुरे जातः मन्दुरजः । अजातेः पञ्चम्याः मुण्डजं भयम् । क्वचिदिति डे अनूजः प्रजाः पूर्वजः । भ्राज्यलमितीष्णौ प्रजनिष्णुः । क्तौ जातिः । अनटि जायतेस्यामपत्यमिति जननी । उणादौ दृकृनिनत्यके जनकः २७ । स्थानीति घे जङ्घा १०९ । नखिननीति टे नो लुकि च जटा १३९ । जनिपणीति टे दीर्घे च जाण्टः पक्षी १४० । ऋदिजनीति किति ये ये न वेति वात्वे जाया । जन्यं रणः ३६१ । जठरक्रकरेत्यरे निपातनात् जठरम् ४०३ । पादिपठीति इः जनिरुत्पादः ६०७ । कृवापाजील्युणि जानु । जानीति निर्देशाद्वृद्धिः १ । मनिजनिभ्यां धतौ चेत्युः जतु ७२१ । कृसीति तुनि जन्तुः ७७३ । हृपिपुषीति णाविल्युः जनयित्नुः पिता ७९७ । यजिशुन्धीति युः जन्युर्जन्म प्राणी च ८०१ । जनिहनीति रौ तादेशे च जत्रु प-

क्षौंससंधिः ८०९। कमिजनिभ्यां वुः जम्वूः ८४७। मनिति मनि जन्म ९११। स्यर्तार्त्युसि जनुः जनुषी जन्म ९९७ ॥

अथ पान्तौ ॥

123. दीपैचि दीप्तौ। दीप्यते। कर्तर्यनन्यास्ते दीपजनेति वा ञिनि तलुकि च अदीपि अदीपिष्ट। दिदीपे। णौ डे भ्राजभासेति वोपान्त्यह्रस्वे अदीदिपत् अदिदीपत्। दीपिता। ऐदित्त्वात् क्तयोर्नेट् दीप्तः दीप्तवान्। नाम्युपान्त्येति के दीपः प्रदीपः। स्म्यजसेति रे दीपनशीलो दीप्रः। इडित इत्यने न णिश्वेति निषिद्धे तृनि दीपिता। क्तौ दीप्तिः ॥

124. तपिंच् ऐश्वर्ये वा। तपं धूप संतापे इत्यस्यैवैश्वर्ये दिवादित्वमात्मनेपदं च वा विधीयते। तप्यते तेपे। अनुस्वारेत्त्वान्नेट् तप्ता तप्तः। पक्षे ऐश्वर्येपि भ्वादित्वात् भतपति भतताप। नन्द्याद्यने भतपनः। द्विषंतपेति खे निपातनात् परंतपः। एके तु तपिंच् ऐश्वर्ये इति धात्वन्तर दिवादिमाहुः। अन्ये तु भ्वादेरैश्वर्ये संतापे च श्यात्मनेपदे वेच्छन्ति। द्रमिलास्तु पतोर्विपर्ययेण पतिंच् ऐश्वर्ये वेति पेठुः। भ्वादेरेव पत्लृ गतावित्यस्यैश्वर्ये पक्षे दिवादित्वमात्मनेपदित्वं च समुदितं भवतीत्यर्थः। पत्यते अपतिष्ट पतिष्यते। पक्षे ऐश्वर्येपि भ्वादित्वात् पतति। लृदित्त्वात् अपप्तत्। पतिष्यति। ऐश्वर्यादन्यत्र पतति अपप्तदित्याद्येव भवति ॥

अथ रान्ता अष्टौ सेटश्च ॥

125. पूरैचि आप्यायने। आप्यायनं वृद्धिः। पूर्यते पुपूरे। दीपजनेति कर्तरि वा ञिनि अपूरि अपूरिष्ट। पूरिता। ऐदित्त्वात् क्तयोर्नेट् पूर्णः पूर्णवान्। णौ दान्तशान्तेति क्ते वा निपातनात् पूर्णः पूरितः। इडित इत्यने पूरणशीलः पूरणः। चर्मोदरादिति णमि चर्मपूरं ददाति उदरपूरं भुङ्क्ते। वृष्टिमाने ऊलुक् चास्य वा गोष्पदपूरं वृष्टो मेघः गोष्पदप्रम्। ऊर्ध्वात्पूः शुषः ऊर्ध्वपूरं पूर्णः ॥

126. घूरैङ् 127. जूरैचि जरायाम्। जरा वयोहानिः। घूर्यते जुघूरे घूरिता। ऐदित्त्वात् क्तयोर्नेट् रदादिति क्तयोस्तस्य नत्वे घूर्णः घूर्णवान् ॥

127. जूरै। जूर्यते जूरिता। ऐदित्त्वात् क्तयोर्नेट् जूर्णः जूर्णवान् ॥

128. धूरैङ् 129 गूरैचि गतौ। धूर्यते गूर्यते दुधूरे जुगूरे धूरिता गूरिता। ऐदित्त्वात् क्तयोर्नेट् धूर्णः धूर्णवान् गूर्णः गूर्णवान्। धुरसंपदेति क्विपि धूर्यते इति धुः। उणादौ धुरिगूरिभ्यां टिद्धर्जौ चान्तादित्यर्थे गुर्जरः ४०४ ॥

130. शूरैचि स्तम्भे। तालव्यादिः। शूर्यते।

शुशूरेरेशिरः शूरैः॥

शूरिता। ऐदित्त्वात् क्तयोर्नेट् शूर्णः शूर्णवान्। नाम्युपान्त्येति के शूरः॥

131. तूरैचि त्वरायाम्। गतित्वरयामित्यन्ये। तूर्यते तुतूरे तूरिता। ऐदित्त्वात् क्तयोर्नेट् तूर्णः तूर्णवान्। घ्यणि तूर्यम्। नाम्युपान्त्येति के तूरम्। इडित इत्यने तूरणशीलस्तूरणः। उणादौ कावावीति णौ तूर्णिस्त्वरा ६३४॥ घूरादयो हिंसायां च। घूरादयः षडपि हिंसायां चकाराद्यथापठमुक्तेषु जरादिषु। तान्येवोदाहरणानि॥

132. चूरैचि दाहे। चूर्यते चुचूरे चूरिता। ऐदित्त्वात् क्तयोर्नेट् चूर्णः चूर्णवान्। उणादौ कावावीति णौ चूर्णिर्वृत्तिः ६३४॥

अथ शान्ताश्चत्वारो लिशिंच्वर्जाः सेटश्च॥

133. क्लिशिच् उपतापे। क्लिश्यते।

परार्थे क्लिश्यतः सत[ः]॥

इति तु लक्ष्यम्। चिक्लिशे क्लेशिता। पूङ्क्लिशिभ्य इति क्तक्तवत्वासु वेट् क्लिष्टः क्लिशितः क्लिष्टवान् क्लिशितवान् क्लिष्ट्वा। क्षुधक्लिशेति किस्त्वे क्लिशित्वा। निन्दहिंसेति णके क्लेशकः। उणादौ क्लिशः के चेति शो केशः ५३०। कीनाश इति तु कनेरी चात इत्याशे कनतेः ५३८। किशोर इत्यपि कोरत्रोरेति निपातनात्कोरे कृशोः ४३४। क्लिशौश् विबाधने। क्लिश्नाति॥

134. लिशिंच् अल्पत्वे। लिश्यते लिलिशे। अनुस्वारेत्त्वान्नेट् लेष्टा लिष्टः। नाम्युपान्त्येति के लिशः। घञि लेशः। लिशंत् गतौ। लिशति॥

135. काशिच् दीप्तौ। काश्यते चकाशे काशिता काशितः। णौ ङे उपान्त्यस्येति ह्रस्वे अचीकशत्। ऋदिदयमित्येके। तन्मते ह्रस्वाभावे अचकाशत्। अञ्चि नामिनः काशे इति दीर्घे नीकाशः प्रतीकाशः। संकाशः। घञि अवकाशः काशः। उणादौ वनिकणीति डे काष्ठम् १६२। काशृङ् दीप्तौ। काशते॥

136. वाशिच् शब्दे। वाश्यते ववाशे वाकः। वाशिता वाशितम्। णौ ङे अवीवशत्। ऋदिदयमित्येके। तेषां ह्रस्वाभावे अववाशत्। चेट इत्यः वाशा। नाम्नि पुंसि चेति णके वाशिका। णौ नन्द्यादने वाशनः। उणादौ वाशयसीत्युरे वाशुरः ४२३॥

अथोभयपदिषु कान्तोऽनिट् च ॥

137. शकींच् मर्षणे । मर्षणं क्षमा । ईगित इति फलवत्कर्तर्यात्मनेपदे शक्यते । फलवतोऽन्यत्र शेषादिति परस्मैपदे शक्यति । शेके शशाक अशक्त अशाक्षीत् । अनुस्वारेत्त्वादनिट् शक्ता शक्तुम् शक्तः शक्तवान् । शकः कर्मणीति कर्मणि क्ते वा नेट् शकितः शक्तो वा घटः कर्तुं मैत्रेण । सनि रभलभेति स्वरस्येत्वे द्वित्वाभावे च शिक्षते शिक्षति । शकितकीति ये शक्यम् । अचि शकः । वनि शक्वा । णस्वरेति ङ्यां नो रत्वे च शक्वरी । क्तौ शक्तिः । बाहुलकाद्घञि शक्यतेऽनेनेति भोक्तुं शाकम् । शकधृषेति तुमि शक्यते भोक्तुम् । उणादौ दिव्यवीत्यटे शकटम् १४२ । कृगकृशाग्वेरोटः शकोटो बाहुः १६० । शकेरुन्तः शकुन्तः २२३ । यम्यजीत्युने शकुनः २८८ । भीवृधीति रे शक्रः ३८७ । जठरक्रकरेत्यरे करिशकरो हस्तिमल्लः [ ४०३ ] । श्यामाश्येति ले शक्लो मधुरवाक् ४६२ । मृदिकन्दीत्यले शकलम् ४६५ । शकेरुन्तिः शकुन्तिः ६६६ । शकेरुनिः शकुनिः ६८८ । कृपिशकिभ्यामटिः शकटिः ६३० । शक ऋत् शकृत् ८९१ । अनीदयं मर्षणे दयविकरणोऽर्थान्तरे तु श्नुविकरणः स्वादिपठित एवेत्येके शक्यति मृष्यते इत्यर्थः । पुष्यादित्वादङि अशकत् । मर्षणादन्यत्र श्नौ शक्नोति । ऌदित्वादङि अशकत् । अन्ये तु शक विभाषितो मर्षणे इति पठन्ति व्याचक्षते च मर्षणे शक्नोतेः परस्मैपदं श्ये विकल्पेनेटं च शक्यते शक्यति अशकीत् अशकत् शक्ता शकिता । अन्यत्र शक्नोति अशकत् शक्ता ॥

अथ पान्तोनिट् च ॥

**140.** शपींच् आक्रोशे। शप्यते शप्यति शेपे शशाप। अनुस्वारेत्त्वान्नेट् शप्ता शप्त्वा शप्तः। घञि शापः। उणादौ शाशपीति दे शब्दः २३७। शपीं आक्रोशे। शपते शपति ॥

अथ पान्तः सेट् च ॥

**141.** मृषींच् तितिक्षायाम्। तितिक्षा क्षमा। मृष्यते मृष्यति। फलवत्कर्तर्यपि परेर्मृषश्चेति परस्मैपदे परिमृष्यति। ममृषे ममर्ष मर्षिता। क्त्वृषेति क्त्वो वा किस्त्वे मृषित्वा मर्षित्वा। मृषः क्षान्ताविति क्तयोः कित्त्वाभावे मर्षितः मर्षितवान्। क्षान्तेरन्यत्र धातूनामनेकार्थत्वाद्भूषणादिषु कित्त्वे मृषितः मृषितवान्। नन्द्यादित्वे मर्षणः। शासूयुधीति खलपवादेने दुर्मर्षणः। मृषू सहने च। मर्षति। मृषण् क्षान्तावदन्तः मृषयति। मृषिण् तितिक्षायाम्। युजादेरिति वा णिचि मर्षयति मर्षते ॥

अथ हान्तोनिट् च ॥

**142.** णहींच् बन्धने। पाठे इति ने नह्यते नह्यति। णोपदेशत्वाद्दुरुपसर्गेति णत्वे प्रणह्यते। वावाप्योरिति पिर्वा अपिनह्यते पिनह्यते। नेहे ननाह। अनुस्वारेत्त्वान्नेट् नहाहोरिति हस्य धे नद्धा संनद्धः। घञि संनाहः। नीदाविति त्रटि नद्ध्री। क्रुत्संपदेति क्विपि गतिकारकस्येति दीर्घे उपनह्यते उपानत्। उणादौ कृपूनहीत्युषे नहुषो राजा ५५७। नहेर्भ चेति णिदिः नाभिः ६२१। नभ इति तु नभ्यतेरसि ९६२। नख इत्यपि नास्य खमस्तीति बहुव्रीहौ। नखादित्वाददभावे ४.८७ ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणे दिवादिगणः श्यविकरणः सपूर्णः ॥

---

अथ स्वादयो वर्णक्रमेण निर्दिश्यन्ते । तत्रापि प्रसिद्ध्यनुरोधेनादौ

1 षुगट् अभिषवे । अभिषवः क्लेदनं सन्धानाख्यं पीडनमन्थने वा । षः सः इति से गित्त्वात्फलवत्कर्तरीङ्गित इत्यात्मनेपदे स्वादेः श्नुरिति श्नौ सुनुते । फलवतोऽन्यत्र शेषात्परस्मैपदे उश्नोरिति गुणे सुनोति । उपसर्गात्सुगिति षत्वे अभिषुणोति । अड्व्यवायेऽपि अभ्यषुणोत् । अद्वित्वे इत्युक्ते पूर्वस्य षत्वाभावे उत्तरस्य तु षोपदेशत्वान्नाम्यन्तस्थेति षत्वे अभिसुषुवे अभिसुषाव । सुगः स्यसनोरिति षत्वप्रतिषेधे अभिसोष्यते । सनि क्विपि अभिसुसूः । णिस्तोरेवेति नियमात्षत्वाभावे अभिसुसूषति । यम्यादिति वेति यौतुकि सुन्यः सुनुवः सुन्मः सुनुमः । अनुस्वारेत्त्वादिट् सोता सुतः सुतवान् । धूग्सुस्तोरिति सिचीटि असावीत् । आत्मनेपदे त्विडभावे असोष्ट । आसुयुवपीति घ्यणि आसाव्यम् । सनाय्यकुण्डपाय्येति घ्यणि निपातनात् राज्ञा सोतव्यो राजा वा सूयतेऽस्मिन्निति राजसूयः क्रतुः । सोमात्सुग इति भूते क्विपि सोमसुत् । सुयजो ड्वनिप् सुत्वान् सुत्वा । णस्वरावेति ङ्या नो रत्वे च सुत्वरी । सुगृद्विषेत्यतृशि सुन्वन्तो यजमानाः । समिणेति क्यपि आसुतिः । समजेति क्यपि सुत्या । उणादौ निनिपुषीति किति के सुको निरामयः ११ । सुसितनितुसेर्दीर्घश्च वेति किति ते सुतः सूतः १०३ । मृतुकुसुभ्यो नोऽन्तश्चेति दे सुन्दो दैत्यः १८० । सोरू वेति ने सुना पानस्थानम् १६३ । स्यासुरमीत्यने सवनः १६९ १७४ । सुसुकिति पे ऊत्वे च सूपः २९७ । अर्तीरीति मे सोमः ३३८ । ऋज्यजीति किति रे सुरः सुरा ३८८ । षु प्रसवैश्वर्ययोः । सवति । षुक् प्रसवैश्वर्ययोः । सौति । निरस्य स्वादित्वज्ञापनार्थं सर्वत्र ज्ञेयम् ॥

अथेदन्ताभरणारोऽभिश्च ॥

3. शिंग्ट् निशाने । निशानं तनूकरणम् । शिनुते शिनोति शिश्ये शिशाय । अनुस्वारेत्त्वान्नेट् शेता शितः ॥

4. डुमिंग्ट् प्रक्षेपणे । मिनुते मिनोति प्रमिनोति मिम्ये मिमाय । अनुस्वारेत्त्वान्नेट् मितः । यबक्ङितीति मिग्मीग इत्यात्वे निमाय प्रमाता । खलचलि तु नात्वम् दुर्मयः मयः प्रमयः । सनि मिमीमेति स्वरस्येत्वं द्वित्वाभावश्च प्रमित्सते प्रमित्सति । ड्वितस्त्रिमाके मानेन निर्वृत्तं मित्रिमम् । उणादौ मिगः खलश्चेच्च मेखला । धात्कले मेकल ऋषिः ४१७ । मिवहीति वा णिदुः मायुः पित्तम् । बाहुलकान्नात्वम् मयुः किंनरः ७२६ ॥

5. चिंग्ट् चयने । चिनुते चिनोति । नेर्ङ्मादेति नेर्णत्वे प्रणिचिनुते । सन्परोक्षयोर्धेः किर्वेति वा किर्वे चिकीषति चिचीषति चिक्ये चिच्ये । अनुस्वारेत्त्वान्नेट् चेता चितः आचितम् । णौ चिस्फुरोर्नवेति यात्वोर्त्तीति यौ उच्चापयति उच्चाययति । संचाय्येति ध्यणि निपातनात् संचाय्यः क्रतुः । य एच्चेति ये सचियमन्यत् । धाय्यापाय्येति निपातनाम् निकाय्यो निवासः । निचेयोऽन्यः । परिचाय्योपचाय्येति निपातनात् परिचाय्योऽग्निः । एवमुपचाय्योऽग्निस्थः । परिचेयः उपचेयः चेयश्चान्यः । अग्निचित्येति भावे क्यपि निपातनात् अग्नेश्चयनमग्निचित्या । अग्नेश्चेरिति क्विपि अग्निचित् । कर्मण्यग्न्यर्थे श्येन इव चीयते स्म श्येनचित् रथचक्रचित् । हस्तप्राप्ये इत्यलपवादे घञि पुष्पप्रचायः । चितिदेहेति घञि आकायमग्निं चिन्वीत कायः निकायः गोमयनिकायः । सङ्घेऽनूर्ध्वे साधुनिकायः । सोर्ध्वे तु युवर्णेत्यलि सूकरनिचयः । स्त्रियां क्तौ चितिः । उणादौ चिजीति रे दीर्घे च चीरम् ३९२ । चिमिदीति क्तिमे चित्रम् चित्रा ४५४ । केचित्तु चिग्ण् चये इति चुरादौ पठन्ति तस्य च घटादित्वं चिस्फुरोर्नवेत्यात्वाभावं चेच्छन्ति । तन्मते चययति । आत्त्वमप्यन्ये चापयति । णिजभावे [illegible] चयते चयति ॥

अथोदन्तः सेट् च ॥

6. धुग्ट् कम्पने । धुनुते धुनोति दुधुवे दुधाव । यवि स्क्रसृभृस्तुद्रुस्रुवो दुधविथ । धूगौदित इति वेट् धोता धविता । सिचि धूगसुस्तोः परस्मै इति अधावीत् । आत्मनेपदे तु वेटि अधोष्ट अधविष्ट । णौ धूग्प्रीगोर्नः इति ने विधूनयति । दुधूञ्स्वितीति धूयतेनेनेति धवित्रमित्येके । वेट्त्वात् क्तयोर्नेट् अवधुतः धुतः धुतवान् । युवर्णेत्यलि धवः । उणादौ धुधून्दीति किलके सिपकादिरत्वादित्याभावे धुवकापप-

नविशेषः २९ । धिलिमिलीति किति मे धूमः ३४० । कृधूतनीति किति सरे धूसरः ४४० । उदन्तोनिट् चायमित्यन्ये । धुनुते धुनोति धोता विधुतः । धूत् विधूनने । धुवति । धूगश् कम्पने । धुनीते धुनाति । धूगण् कम्पने । धूनयति । णिजभावे धवते धवति ॥

अथ ऋदन्तास्त्रयो वृग्वर्जा अनिटश्च ॥

7. स्तृंगट् आच्छादने । स्तृणुते स्तृणोति । संयोगादिति गुणे तस्तरे तस्तरुः । क्ये क्ययङिति गुणे आस्तर्यते । यङि तास्तर्यते । अनुस्वारेत्त्वान्नेट् स्तर्ता विस्तृतः । विस्तीर्ण इति तु स्तृणातेः ॥

8. कृंगट् हिंसायाम् । कृणुते कृणोति चक्रे चकार । अनुस्वारेत्त्वान्नेट् कर्ता कृतः । डुकृंग् करणे । करोति करति ॥

9. वृगट् वरणे । वृणुते वृणोति ववे ववार । थवि ऋभितीटि वनरिथ । स्क्रसृ-त्रित्यत्रास्य वर्जनादिडभावे ववृव ववृम । वृतो न वेतीटो वा दीर्घे प्रावरिता प्रावरीता । आशिषि सिच्परस्मैपदे च दीर्घाभावे प्रावरिषीष्ट प्रावरिष्टाम् । इट् सिजाशिषोरिति वेटि प्रावरिष्ट प्रावरीष्ट प्रावृत प्रावरिषीष्ट । सनीवृधेति वेट् विवरिषति विवरीषति वुवूर्षति । ऋवर्णश्रीति किति नेट् वृत्वा वृतः वृतवान् । कर्मणोणि घञ्युपसर्गस्येति बाहुलकाद्दीर्घे कुत्नं वृणोति कुत्रवारः । वर्योपसर्येति निपातनाद्ये वर्यमुपेयं चेत् । स्त्री वर्या । अन्यस्तु इवृगिति क्यपि वृत्यः । बाहुलकाद् घ्यणि घ्यन्ताद्वा ये वार्यम् । भृवृजीति खे पतिंवरा कन्या । युवर्णेल्यलि वरः । नेर्वुरिति घञि नीवारो व्रीहिः । वृगो वस्त्रे इति घञि प्रवरः । पक्षे घञि घञ्युपसर्गस्येति दीर्घे प्रावारः । उणादौ विचिपुरीति किति के वृकः २२ । जूकृत्रित्यण्डे वरण्ड इत्यादिसंचयः १७३ । तृकृभित्यणे वरणो वृक्षः १८७ । कृगृश्रिति वरटि वर्वरः कुञ्चितः केशः ४४१ । वृगृनक्षीत्यत्रे वरत्रा ४५६ । घ्यन्तास्त्वरेश्थ इत्थे वारिर्गजमन्दरणगर्ता । वारि जलम् ६०६ । आजिस्येति णौ वर्णुर्हदः ७६८ । वार्द्रारावीति निपातनात् क्विपि वार्जलम् ९४४ । वल्य इति तु जॄवृभ्यामूय इत्यूये वृणातेः २३६ । वर्ण इत्यपि इर्णुर्विशेति णे वृणातेः १८२ ॥

अथ परस्मैपदिष्विदन्तोनिट् च ॥

10. हिंट् गतिवृद्ध्योः । स्वादेरिति परस्मैपदे हिनोति । अदुरुपसर्गेति णत्वे प्रहिणोति । अटे हिनि हो घे प्रजिघाय । सनि जिघीषति । यङि जेघीयते । ङे

तु घाभावे प्राजीहयत् । अनुस्वारेत्त्वादनिट् हेता प्रहितः । सातिहेतीति क्तौ निपातनात् हेतिः । अच्यलि वा हयः । गौरादित्वाङ् ह्याम् हय्यश्च । उणादौ घुयुहीति किनि के दीर्घे च हीकः पक्षी २४ । क्षुहिभ्यां वेति वा किति मे हिमम् हेमम् ३४१ । मनि हेम ९११ । कृसिकमीति तुनि हेतुः ७७३ ॥

अथोदन्तावनिटौ च ॥

11. श्रुंट् श्रवणे । गतावित्यन्ये । श्रौतिकृवितिशृः शृणोति । समो गमृच्छीत्यात्मनेपदे संशृणुते । कर्मणि तु सति परस्मैपदे संशृणोति हितम् । शुश्राव । स्कन्दमित्यत्र श्रोर्वर्जनादिड्भावे शुश्रोथ । सनि श्रुवोनाडित्यात्मनेपदे शुश्रूषते धर्मम् । आङ्प्रतेस्तु परस्मैपदे आशुश्रूषति प्रतिशुश्रूषति । प्रत्याङः श्रुवेति चतुर्थ्याम् मैत्राय प्रतिशृणोति मैत्रायाशृणोति । अनुस्वारेत्त्वादनिट् श्रोता श्रुतः श्रुतवान् । णौ सनि श्रुस्रुद्विति पूर्वस्योतो वेत्वे शिश्रावयिषति शुश्रावयिषति । ङेसमानलोपे इति सन्वद्भावे अशिश्रवत् अशुश्रवत् । महादिभ्य इति णिनि श्रावी । गणनिपातनाद्ध्रस्वे श्रवीत्येके । श्रुसदेति भूतमात्रे वा परोक्षा शुश्राव । पक्षे अश्रौषीत् अशृणोत् । तत्र क्वसाविति क्वसौ शुश्रुवान् । विपूर्वात् क्षुश्रोरिति घञि विश्रावः । श्र्यादिभ्य इति क्तौ श्रूयतेनयेति श्रुतिः । करणेऽनटि श्रवणं कर्णः । उणादौ तृकृभिस्यगे श्रवणोऽश्वत्थः कर्णश्च १८७ । हुयामेति त्रे श्रोत्रम् ४५१ । कावार्तीति णौ श्रोणिः ६३४ । असित्यसि श्रवः विश्रवाः [ १९२ ] ॥

12. टुदुंट् उपतापे । दुनोति दुदाव । अनुस्वारेत्त्वादनिट् दोता । दुगोरिति क्तयोस्तस्य नत्वे ऊत्वे च दूनः दूनवान् । वा ज्वलादीति वा णे दावः । पक्षेऽचि दवः । ट्वित्यादथौ दवथुः । दुं गतौ । दवति ॥

अथ ऋदन्तावनिटौ च ॥

13. पृंट् प्रीतौ । पृणोति पपार । थवि ऋत इति नेट् पपर्थ । अनुस्वारेत्त्वादनिट् पर्ता पृतः । सनि पुपूर्षति । पृक् पालनपूरणयोः । पिपर्ति ॥

14. स्मृंट् पालने च । चकारात्प्रीतौ । जीवनेऽप्यन्ये । स्मृणोति सस्मार । अनुस्वारेत्त्वादनिट् स्मर्ता स्मर्तुम् । थवि ऋत इति नेट् सस्मर्थ । पोपान्त्योऽयमित्येके । स्पृणोति पस्पार स्पर्ता ॥

अथ कान्तौ ॥

15. शक्लृंट् शक्तौ । शक्नोति शशाक शेकुः । लदिद्युतादेरङि अशकन् । ये तु शक्यतेः पुष्यादित्वं मन्यन्ते तेषां पुष्यादित्वादेवाङि सिद्धे लृदित्वमात्मनेप-

देप्यडर्थम् । तेन क्रियाव्यतिहारे इत्यात्मनेपदेऽडि व्यत्यशकत । अनुस्वारेत्त्वान्नेट् शक्ष्यति शक्तश्चैत्रः । शकः कर्मणीति वा नेट् शक्तः शकितो वा धर्मः कर्तुं चैत्रेण । सनि रभलभेति स्वरस्योर्द्दित्वाभावश्च शिक्षति । शको जिज्ञासायामित्यात्मनेपदे विद्याः शिक्षते । शकितकीति ये शक्यः । शकधृषेति तुमि शक्नोति भोक्तुम् । शकींच् मर्षणे । शक्यते शक्यति ॥

16. तिक 17 तिग 18 षघट् हिंसायाम् । आधायास्कन्दनेपीत्येके । तिक्नोति तितेक तेकिता । नाम्युपान्त्येति के तिकः ॥

अथ गान्तः सेट् च ॥

17. तिग । तिग्नोति तितेग तेगिता । नाम्युपान्त्येति के तिगः ॥

अथ घान्तः सेट् च ॥

18. षघ । षः स इति से सघ्नोति ससाघ । षोपदेशात्स्याण्णिस्तोरेवेति षत्वे सिषाघयिषति । अषोपदेशोऽयमित्येके सिसाघयिषति । तिक तिघ [ष]घ हिंसायामित्यन्ये पेठुः तिघ्नोति [ष]घ्नोति ॥

अथ धान्तास्त्रयः ॥

19. राधं 20. साधंट् संसिद्धौ । संसिद्धिः फलसंपत्तिः । यद्वीक्ष्ये इति चतुर्थीम् मैत्राय राध्नोति । रराध आरराधुर्गुरुम् । यधेत्यादित्परोक्षेति स्वरस्यैत्वे द्वित्वाभावे च प्रतिरेधुः दामुम् । अनुस्वारेत्त्वान्नेट् राद्धा राद्धः । सनि राधेर्वधे इति स्वरस्योर्द्दित्वाभावश्च प्रतिरित्सति । वधादन्यत्र आरिरात्सति गुरुम् । ग्रहादिभ्य इति णिनि अपराधी उपराधी । घञि राधः । घञ्युपसर्गस्येति वा दीर्घे अनूराधः अनुराधाः । क्तौ राद्धिः । राधंच् वृद्धौ । राध्यति ॥

20. साधं । साध्नोति ससाध । अषोपदेशत्वात्षत्वाभावे सिसात्सति सिसाधयिषति । षोपदेशोऽयमित्येके । तन्मते नाम्यन्तस्थेति णिस्तोरेवेति च षत्वे सिषात्सति सिषाधयिषति । णौ नन्द्यादिने साधनः । उणादौ कृवापाजीत्युणि साधुः १॥

21. ऋधूट् वृद्धौ । ऋध्नोति । ऋत्यारित्युपसर्गावर्णस्यारि प्रार्ध्नोति परार्ध्नोति । अनात इति पूर्वस्यात्वे नन्ते च आनर्ध आनृधतुः । अर्धिता । ऊदित्त्वात् क्त्वि वेट् ऋद्ध्वा अर्धित्वा । सनीवृधेति वेट् अर्दिधिषति । पक्षे ऋध ईर्त् द्वित्वाभावश्च ईर्त्सति । वेट्त्वात् क्तयोर्नेट् ऋद्धः ऋद्धवान् । ऋधूच् वृद्धौ । ऋध्यति ॥

अथ पान्तौ ॥

22. आपुंट् व्याप्तौ । आप्नोति आप । ऋदित्वादङि आपत् । अनुस्वारे-

स्वाप्नेर् आप्ता । गत्यर्थेति वा कर्तरि क्ते प्राप्तो धर्मम् । पक्षे कर्मणि प्राप्तो धर्मोऽनेन । भावे प्राप्तमनेन । सनि ज्ञप्याप इतीपि द्वित्वाभावे च ईप्सति । यपि वाप्नोरिति णेरयि प्रापय्य प्राप्य । व्याप्ये क्तेन इति कर्मणि सप्तम्याम् समाप्तमनेन श्रुतमित्यादेरिति समाप्ते श्रुते । क्तौ प्राप्ति । उणादौ आपोप् चेति दे अब्द ७३८ । तृभ्रमीत्यावपादेशे च अपि ६११ । आपोप् चेति तुनि अप्तु काल ७७६ । आपोप् चेत्याली अपालुर्वायु ८२३ । आपोप् चेति सू॰ अप्ता यज्ञ ८६१ । आप क्विप् ह्रस्वश्चेति क्विपि आपो जलम् ९३१ । अम्भ इति स्वमेर्भश्चौ चान्तादित्यमेरासि ९६२ ॥

23 तृपट् प्रीणने । क्षुभ्नादित्वाण्णत्वाभावे तृप्नोति ततर्प तर्पिता तृपित । तृपौच् प्रीतौ । तृप्यति तृप ॥

अथ भान्त सेट् च ॥

24 दम्भुट् दम्भे । दभ्नोति ददम्भ । दम्भ इति स्वरस्यैत्वे नटुकि द्वित्वाभावे च देभतु । थे वा देभिथ ददम्भिथ । दम्भिता । सनीनृधेति वेटि दिदम्भिषति । पक्षे दम्भो धिप् धीप् च त्वि धिप्सति धीप्सति । उदित्वात् क्त्वि वेट् दब्ध्वा दम्भित्वा । वेट्त्वात् क्तयोर्नेट् दब्ध दब्धवान् । क्विपि पदान्ते गडदबादेरित्यादेश्चतुर्थे धिप् धिब् । उणादौ ऋज्यजीति किति रे दभ्र ३८८ ॥

अथ वान्तौ सेटौ च ॥

25 कृवुट् हिंसाकरणयोः । श्रौतिकृवुधिन्विति कादेशे कृणोति कृणुत कृण्वन्ति । उदित्त्वान्ने चकृण्व कृण्विता ॥

26 धिन्वुट् गतौ । प्रीणनेऽप्यन्ये । श्रौतिकृवुधिन्विति ध्यादेशे धिनोति धिनुत धिन्वन्ति । उदित्त्वान्ने दिधिन्व धिन्विता धिन्वितुम् ॥ ये त्वन्यैरिहाटौ पठिता अश व्याप्तौ दघ घातने ऋक्षि चिरि जिरि दाश दृ हिंसायामित्युदाहृताश्च अश्नोति दघ्नोति ऋक्ष्णोति । केचित्तु ऋक्षि छिन्दन्ति ऋणोति क्षिणोति । चिरिणोति जिरिणोतीति नैलौकिका इत्यस्माभिरुपेक्षिता ॥

अथ षान्त सेट् च ॥

27 ञिधृषाट् प्रागल्भ्ये । धृष्णोति दधर्ष धर्षिता । धृषशसः प्रगल्भे इति क्तयोर्नेट् धृष्ट धृष्टवान् । ञीत्त्वाच्च वर्तमाने क्त इति सति च । प्रागल्भ्याभावेऽन्यत्रेति न डीयशीङिति क्विशाभावान्नुणे धर्षित धर्षितवान् । आदित्वात् वा भावारम्भे इति वा नेट् धृष्टमनेन धर्षितमनेन प्रधृष्ट प्रधर्षित । क्विपि ऋत्विग्दिगिति गत्वे निपातनादेव द्वित्वे च दधृक् । त्रसिगृधीति क्नौ धर्षशीलो धृष्णु । तृषिधृषीति नजिङि

धृष्णक्। शासूयुधीति खलपवादेने दुर्धर्षणः। शकधृषेति तुमि धृष्णोति गन्तुम्। धृषण् प्रसहने। युजादेरिति वा णिचि धर्षयति धर्षति ॥

अथात्मनेपदिनौ सेटौ च ॥

28. ष्टिघिट् आस्कन्दने। षः स इति से निमित्ताभावाट्टस्य ते इङित इत्यात्मनेपदे स्तिघ्नुते। षोपदेशत्वात्साम्यन्तस्येति षत्वे तिष्टिघे। स्तेघिता ॥

29. अशौटि व्याप्तौ। संघातेप्यन्ये। अश्नुते। अनात इति पूर्वस्यात्वे नेन्ते च आनशे। औदित्त्वाद्वेट् अष्टा अशिता। सनि ऋस्मिपूङितीटि स्वरादेरिति द्वितीयांशस्य द्विस्वे अशिशिषते। अश्यर्तीति याङि अशाश्यते। वेट्त्वात् क्तयोर्नेट् अष्टः अष्टवान्। उणादौ कृवापेत्युणि आशुर्व्रीहिः १। इष्यशीति तकाकि अष्टका पितृदैवत्यं कर्म ७७। अशेर्डेति खे खं नभः ८७। अशो रश्चादाविस्यने रशना २७०। शुपूर्वस्याशुपूर्वस्य वा श्वशुरकुकुन्दुरेत्युरे निपातनात् श्वशुरः ४२६। स्त्रियां नारीसखीति निपातनादूङि श्वश्रूः। मीज्यशीति सरे अक्षरम् ४३१। अश्नोरीचादेरिति वरटि ईश्वरी ४४२। पप्यशीभ्यां तन् अष्टौ ९०३। लटिखटीति वे अश्वः ५०५। मावावदीति से अक्षः ५६४। अशो रश्चादेरिति णिदिः राशिः ६२२। मदिमृनीत्यनी अशनिः ६८०। अशो रश्चादेरिति मौ रश्मिः ६८८। नाङ्क्यङ्गीति रौ अभ्रिः ६९२। मुषिमुषीति सिकि अक्षि ७०७। अशेर्यश्चादिरित्यसि यशः ९९८। अशश् भोजने। अश्नाति ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणे टिस्वादिगणः श्नुविकरणः संपूर्णः ॥

---

अथ तुदादयस्तितो वर्णक्रमेण प्रदर्श्यन्ते। तत्र प्रसिद्ध्यनुरोधेनादौ

1. तुदींत् व्यथने। तित्त्वं तुदादित्वज्ञापनार्थं सर्वत्र ज्ञेयम्। ईदित्त्वादीगित इति फलवत्कर्तर्यात्मनेपदे तुदादेः श इति शे तस्य शिदविदिति ङित्त्वाद्गुणाभावे तुदते। फलवतोन्यत्र शेषादिति परस्मैपदे तुदति। तुतुदे तुतोद। अनुस्वारेत्त्वान्नेट् तोत्ता तुन्नः। नाम्युपान्त्येति के तुदः। बहुविध्वेति खशि बहुंतुदः विधुंतुदः अरुंतुदः तिलंतुदः। शतर्यवर्णादश्च इति वान्तादेशे तुदती तुदन्ती स्त्री कुले वा। अजातेरिति णिनि शृङ्गलतोदी। नीदाम्विति करणे त्रटि तोत्त्रम्। करणे घञि प्रतोदः। उणादौ तुदिमदीति छे तुच्छः १२४। नाम्युपान्त्येति किदिस्तुदीवर्मस्या इति सूत्रनिर्देशाद्दीर्घे इतोत्त्यर्थादिति ञ्याम् तुदी नाम ग्रामः [६०९]। तुदादिविपीति किदः तुदः ९। नीनूरमीति किति ये तुदयम् २२७। तुदादिभृजीति किस्यने तुदनः २७३॥

अथ जान्तोनिट् च॥

2. भ्रस्जींत् पाके। भ्रस्जधेति ष्वृति सस्य शशाविति शे तृतीयस्तृतीयेति दस्य जे भृज्जते भृज्जति। अक्ङिति भृज्जो मर्जिति वा भर्जसंयोगान्तस्यादिन्यसंयोगेति किस्वाभावाद् ष्वृदभावे बभर्जे। पक्षे बभ्रज्जे। बभर्ज बभ्रज्ज। अनुस्वारेत्त्वान्नेट् भ्रष्टा भर्ष्टा भृष्टः भृष्टवान्। इवृधेति सनि वेटि बिभ्रज्जिषति बिभ्रक्षति। भर्जादेशे बिभर्जिषति। पक्षे यजसृजेति षत्वे बिभर्क्षति। भ्रस्जेति ष्यणि कोनिट इति गत्वे तृतीयस्तृतीयेति सस्य दत्वे भ्राज्यः। भर्ग्यः। कर्मणोणि नाम्युत्तरेत्युदादेशे उदभ्रज्जः। भीमादित्वादपादाने क्तौ भृज्ज्यतेस्याः भृष्टिः। उणादौ सुधुभ्यिति या किस्यने भृज्जनं पाकः। भ्रज्जनः पावकः २७४। जिभृक्षिति वटि वृद्धौ च भ्राष्ट्रम् ४४७। स्पशिभ्रस्जेः स्लुक् चेति किदुः भृगुः ७३१। कृषिचमीत्युः भर्जुर्यवविकारः ८२१॥

अथ पान्तोनिट् च॥

3. क्षिपींत् प्रेरणे। क्षिपते क्षिपति। फलवत्कर्तर्यात्मनेपदापवादे प्रत्यभ्यतेरिति परस्मैपदे प्रतिक्षिपति अभिक्षिपति अतिक्षिपति। चिक्षिपे चिक्षेप। अनुस्वारेत्त्वान्नेट् क्षेप्ता क्षिप्तः। नाम्युपान्त्येति के क्षिपः। त्रसिगृधीति क्नौ क्षिप्नुरितिः क्षिप्णुः। क्षिपरट इति घिनणि परिक्षेप्यम्भसाम्। याद्वेधेति णके परिक्षेपकः। उणादौ भुभून्दीति किस्यके क्षिपको वायुः। क्षिपकादित्यादित्वाभावे क्षिपकायु-

धम् २९ । ऋज्यर्जीति किति रे क्षिप्रम् ३८८ । क्षिपेः किदित्यणौ क्षिपणिर्हेतिः ६४२ । क्षिपेरणुक् क्षिपणुः ७७० । क्षिपंच् प्रेरणे । क्षिप्यति ॥

अथ शान्तोऽनिट् च ॥

4. दिशींत् अतिसर्जने । अतिसर्जनं त्यागः । दिशते दिशति दिदिशे दिदेश । अनुस्वारेत्त्वादिट् देष्टा आदिष्टः । दिष्टं दैवम् । कृत्संपदेति क्विपि ऋत्विग्दिशीति घापवादे गे दिश्यते सेति दिक् । भिदाद्यङि दिशा । श्वादिभ्य इति क्तौ दिष्टिर्वितस्तिः । नाम्ना ग्रहेति णमि नामादेशं दत्ते । तृतीयोक्तं वेति वा समासः पक्षे नामान्यादेशम् । उणादौ वृभिथिदिशिभ्यस्त्ययट्याधान्ता इत्यः दिष्टयानन्दोक्तौ निपातः ॥

अथ षान्तोऽनिट् च ॥

5. कृषींत् विलेखने । कृषते कृषति चकृषे चकर्ष । स्पृशमृशेति वा सिचि स्पृशादीति वाकारेऽन्ते अक्राक्षीत् । पक्षे हशिट इति सकि अकृक्षत् । अनुस्वारेत्त्वादिट् क्रष्टा कर्ष्टा आकृष्टः । क्तौ कृष्टिः । उणादौ कृषेर्गुणवृद्धी च वेत्यके कर्षकः कृषकः परशुः । कार्षकः कृषकः कुटुम्बी ३१ । पापुलीति कितीके कृषिकः पामरः ४१ । पृषीङेति किति णे कृष्णः १८३ । नाम्युपान्त्येति किदिः कृषिः ६०९ । कृषिचमीत्यूः कर्षूर्नदी ८२९ । कृषं विलेखने । कर्षति ॥

अथ मुचादयोऽष्टौ तत्राद्याः पञ्चानिट उभयपदिनश्च त्रयः परस्मैपदिनः खिदंवर्जाः सेटश्च । तत्र चान्त्यौ

6. मुच्लृंती मोक्षणे । मुचादीति स्वरात्परे नेऽन्ते मुञ्चते मुञ्चति । मुमुचे मुमोच । लृदित्त्वादङि अमुचत् । आत्मनेपदे तु धुड्ह्रस्वादिति सिचो लुकि अमुक्त । अनुस्वारेत्त्वादिट् मोक्ता मुक्तः । अव्याप्यस्येति सनि वा मोकि द्वित्वाभावे नैकधातावित्यस्य भृशार्थेति प्रतिषेधे मोक्षते वत्सः स्वयमेव । पक्षे मुमुक्षते । घञि निर्मोकः । उणादौ मायावर्तीति से मोक्षः ५६५ । नाम्युपान्त्येति किदौ मुचिः । न मुञ्चति न न मुञ्चति वा नमुचिः । नञोऽस्त्यादित्वात्साधुः [ ६०९ ] । मुचामिति तु मुमुचिरिति किति मटि मचनेः ४४९ ॥

7. षिचींत् क्षरणे । षः स इति से मुचादीति ने सिञ्चते सिञ्चति । वेपदे-नाम्याभ्यन्तस्थेति षत्वे सिषिचे सिषेच । सोपसर्गस्य स्थासेनीत्यादेरपि सस्य षत्वे अभिषिञ्चति । अड्व्यवायेऽपि अभ्यषिञ्चत् । द्वित्वेऽपि अभिषिषेच अभिषिषिक्षति । सोपसर्गान्निम्बेर्धर्मी अभ्यषिचत् । व्यवस्थोपसर्गयोगे पूर्वस्य न षत्वम् अभ्यषी-

पिनत् । ह्वालिप्सिच इत्यङि असिचत् । वात्मने असिचत असिक्त । णिस्तोरेवेति नियमात्षत्वाभावे सिसिक्षति । यङि सिचो यङीति निषेधे सेसिच्यते अभिसेसिच्यते । अनुस्वारेत्त्वादनिट् सेक्ता सिक्तः । नीदादाविति करणे त्रटि सेक्त्रम् । सिंह इति तु हिंसेः सिम् चेति के हिंसेः [ उणादौ ५८८ ] ॥

अथ दान्तः ॥

8. विद्लृंती लाभे । मुचादीति ने विन्दते विन्दति । विविदे विवेद । वेत्तेः किदिति परोक्षाया वा विन्दतेरपीत्येके । तन्मते विदां चकार विवेद । अद्यतन्यां लृदि-त्वादङि अविदत् । आत्मनेपदे सिचो लुकि अवित्त । अनुस्वारेत्त्वादनिट् वेत्ता वित्तः वित्तवान् । वित्तमिति निपातनान्नत्वाभावे । वित्तं धनं प्रतीतं च । क्वसौ गमहनेति वेटि विविदिवान् विविद्वान् । लिम्पविन्द इति शे विन्दः । अणपवादे निगवा-देरिति शे गोविन्दः अरविन्दः । यावतो विन्दोति णमि यावद्वेदं भुङ्क्ते ॥

अथ पान्तौ ॥

9. लुप्लृंती छेदने । मुचादित्वान्ने लुम्पते लुम्पति । लुलुपे लुलोप । लृदित्त्वा-दङि अलुपत् । आत्मनेपदे तु धुडिति सिज्लुकि अलुप्त । गृलुपेति गर्ह्यार्थाद्यङि लोलुप्यते । अनुस्वारेत्त्वादनिट् लोप्ता लुप्तः लुप्तिः । घञि लोपः । उणादौ हृयामेति त्रे लोप्त्रमपहृतं द्रव्यम् ४५१ ॥

10. लिपींत् उपदेहे । उपदेहो वृद्धिः । मुचादित्वान्ने लिम्पते लिम्पति लिलिपे लिलेप । ह्वालिप्सिच इत्यङि अलिपत् । वात्मने अलिपत अलिप्त । अनुस्वारेत्त्वादनिट् लेप्ता लिप्तः । लिम्पविन्द इति शे लिम्पः । निगवादेरिति शे निलिम्पा नाम देवाः । णके स्त्रियामपि विलेपिका अनुलेपिका ॥

अथ परस्मैपदिषु तान्तः ॥

11. कृतैत् छेदने । शेषादिति परस्मैपदे मुचादित्वान्ने कृन्तति । चकर्त कर्तिता । सेस्यदिति कृतचृतेति वेटि कर्त्स्यति कर्तिष्यति निकृत्सति निकर्तिषति । सिचि तु नित्यमिटि अकर्तीत् । वेट्त्वात् क्तयोर्नेट् कृत्तः कृत्तवान् । ऐदित्त्वाद्यद्यप्यनुब-न्धादनेकस्वरादपि क्तयोर्नेट् परीकृत्तः परीकृत्तवान् । क्विपि कृत् । नन्द्यादने कर्तनः । उणादौ कृतिपुनीति किति तके कृत्तिकाः ७६ । कृत्यशीभ्यां क्स्नक् कृत्स्नम् २९४ । कृतेः कृच्छ्रेति रे क्रूरः कृच्छ्रम् ३९८ । नाम्युपान्त्यतो कर्तरिः ६९८ । कृतैप् वेष्टने । कृणत्ति ॥

अथ दान्तः ॥

12. खिदंत् परिघाते । परितापे इत्यन्ये । मुचादित्वान्ने खिन्दति । अनुस्वारेत्त्वान्नेट् खेत्ता खिन्नः । भिदाद्यङि खिदा । खिदिंच् दैन्ये । खिद्यते । खिदिंप् दैन्ये । खिन्ते ॥

अथ शान्तः ॥

13. पिशत् अवयवे । मुचादित्वान्ने पिंशति । पिपेश पेशिता । उणादौ पिशेराचक् पिशाचः ११६ । प्रज्ञाद्यणि पैशाचः । कुशिपिशीति कितीते पिशितम् २१२ । पिशिमिथीति कित्युने पिशुनः २९० । मृदिकन्दीत्यले पेशलः ४६९ किलिपिलीत्यौ पेशिर्मसिलेशः ६०८॥ वृत् मुचादिः । मुचादिस्तुदाद्यन्तर्गणोष्टकः संपूर्णः ॥

अथ प्रकृतवर्णक्रमेणेदन्ताश्चत्वारोनिटश्च ॥

14. रिं 15 पिंत् गतौ । रियति रिराय । योनेकस्वरस्येति यत्वस्य बहिरङ्गत्वे नान्तरङ्गे भ्वादेर्नामिन इति दीर्घे कर्तव्येसिद्धत्वाद्दीर्घाभावे रियतुः । अनुस्वारेत्त्वान्नेट् रेता रितः ॥

15. पिं । पियति पिपाय । अनुस्वारेत्त्वान्नेट् पेता पितः । उणादौ पृपुहीति के दीर्घे च पीक उपस्थः २४ । पिक इति तु पापुलीति किती‌के पिबतेः ४१॥

16. धिंत् धारणे । धियति दिधाय दिध्यतुः । अनुस्वारेत्त्वान्नेट् धेता धितः ॥

17. क्षिंत् निवासगत्योः । क्षियति चिक्षाय । योनेकस्वरस्येति यापवादे संयोगादितीयि चिक्षियतुः चिक्षियुः । अनुस्वारेत्त्वान्नेट् क्षेता । क्षितो ग्रामः । क्षितमनेन । कर्मभावाभ्यामन्यत्र क्षेः क्षी चेति क्तयोस्तस्य नत्वं क्षेः क्षीश्च क्षीणः क्षीणवान् । याक्रोशदैन्ये क्षितायुः क्षीणायुर्जाल्मः । क्षितकः क्षीणकस्तपस्वी । यपि क्षेः क्षी प्रक्षीय उपक्षीय । क्षय्यजय्यौ शक्ताविति ये निपातनादयि क्षेतुं शक्यं क्षय्यम् । शक्तेरन्यत्र क्षेयम् । जीणृदृक्षीतीनि क्षयक्षीनः क्षयी । स्त्रियां क्तौ क्षितिः । भिदाद्यङि क्षिया । आधारे पुंनाम्नीति घे क्षयो गृहम् । उणादौ अर्तीरीति मे क्षेमम् ३३८ । हुयामेति त्रे क्षेत्रम् ४५१ । क्षि क्षये । क्षयति । क्षिंप्श् हिंसायाम् । क्षिणाति ॥

अथोदन्तः सेट् च ॥

18. षूत् प्रेरणे । षः स इति से सुवति । योपदेशान्याद्यम्यन्तस्येति षत्वे सुषाव सुषुवतुः । उपसर्गात्सुगिति षत्वे अभिषुवति । अट्यप्यवायेपि अभ्यषुवत् ।

सविता। किस्युवर्णादिति नेट् सूतः सूतवान् सूत्वा। सनि ग्रहगुहश्चेति नेट् गिस्तो-रेवेति नियमात्स्त्वाभावे सुसूषति। प्रास्सूजोरिन् प्रसवशीलः प्रसवी। पूङौक् प्राणि-गर्भविमोचने। सूते। पूङौच् प्राणिप्रसवे। सूयते॥

अथ ऋदन्तोनिट् च॥

19. मृंत् प्राणत्यागे। म्रियतेरद्यतन्याशिषि नेत्यात्मनेपदे रिः शक्येति रौ धातोरिवर्णेतीयि म्रियते। ऋवर्णादिति सिजाशिषोरात्मनेपदे किस्वाद्गुणाभावे अमृत मृषीष्ट। शिदादेरन्यत्र शेषादिति परस्मैपदे ममार मम्रतुः। हनृत इतीटि मरिष्य-ति। सनि मुमूर्षति। अनुस्वारेत्त्वान्नेट् मर्ता मृतः। अचि अमरः। अभिमरस्ती-क्ष्णः। णके मारकः। घञि मारः। उणादौ अदुपान्त्येत्यः सरूपे च द्वे रूपे पूर्वस्य चान्तेऽ मरमरोनुकरणशब्दोयम् १४। दृकृत्रित्यके मरकः २७। जुपृदृशृ-वृमृभ्यो द्वे रथादावितीके मर्मरीकोर्मिः ४७। मृमन्यञ्जीत्युके मरूको निर्दन्तेभः ९८। मृप्रपिभ्यामिचः मरिचम् ११७। म्रियतेरीचण् मारीचः ११८। लूक्षो वेति वा किति ते मृतः मर्तः २०२। स्वार्थे ये मर्त्यः। मृशीपतीति तादौ ये मर्त्यः ३६०। जठरक्रकरेत्यरे निपातनात् मर्मरः शुष्कपत्रध्वनिः १. ४०३। मृश्विकण्यणीतीचौ मरीचिः ६२७। भूमृत्रिल्युः मरुः ७१६। मुस्युक् मृत्युः ८०९। पलिमृभ्यामण्डुकण्डुकौ मृकण्डुर्ऋषिः ७६७। मनि मर्म ९११। मवदिति नु म उदिति मृणालेहति ८८९॥

अथ ऋदन्तौ सेटौ न॥

20 कृत् विक्षेपे। किरति। अपस्किर इत्यात्मनेपदेपाद्युत्पादिति स्सटि अप-स्किरते वृषभो हृष्टः अपस्किरते कुक्कुटो भक्ष्यार्थी अपस्किरते श्वाश्रयार्थी। कर्म-कर्तर्येकधातावेिति भिक्ष्यात्मनेपदेषु प्राप्तेषु भूषार्थेति क्यञ्योः प्रतिषेधे अवकिरते पांसुः स्वयमेव। इट् सिजिति वेटि वृतो न वेति वेटो दीर्घेनिट्मित्र ऋवर्णादिति किस्वे अवाकीर्ष्ट पांसुः स्वयमेव। पक्षे अवाकरिष्ट अवाकरीष्ट। करिता करीता। किति ऋवर्णश्चीति नेट् कीर्णः कीर्णवान् कीर्त्वा। ऋस्मिपूङिति सनीटि चिकरिषति चिकरीषति। अस्येटो न दीर्घ इत्येके। उपपूर्वस्योपात्किर इति णमि किरो लवने इति स्सटि च उपस्कारं मद्रका लुनन्ति। प्रतेश्च वधे इति स्सटि प्रतिस्कीर्णम् उप-स्कीर्णं ह ते वृषल भूयात्। स्कृच्छ्रत इति गुणे प्रतिनस्करे नखैः। नाम्युपान्त्येति के किरः सूकरः। वौ विष्किर इति वा स्सटि विष्किरः। भसोडेलत्र पत्वम्। विकिरश्च पक्षी। वुवर्णेत्यलि वर्चस्केति निपातनात् अवस्करो वर्चस्कम्। अयक-

रोन्यः। उन्निपूर्वस्य किरो धान्ये इति घञि उत्कारः निकारो धान्यस्य। अलि उत्करः निकरोन्यस्य। उणादौ ऋतटिदित्यः स्वरूपे च द्वे रूपे कर्करः क्षुद्राश्मा। कर्करी गलन्तिका ९। दृकॄन्नित्यके करकः करकम् करका च घनोपलः २७। किरोङ्को रो लश्च वा करङ्कः समुद्रः। कलङ्कः ६२। पतितमील्यङ्गे करङ्गः कर्मशीलः ९८। कूर्चमूर्चेति चटि निपातनात् कूर्चम्। कूर्चमिव कूर्चकः कूर्चिकेति च ११३। कल्यवील्यचे करचो धान्यावपनम् ११४। किरो लश्च वेति किल्याटे किलाटः किराटः १४७। तृकॄपीति कीटे किरीटम् १६१। विरडकशोडेल्यडे निपातनात् केरडस्वैराज्ये राजा। क्रोडमङ्कः १७२। जॄकॄन्नित्यण्डे करण्डः १७३। इणुर्विशोति णे कर्णः १८२। कॄगॄमिति किल्यणे किरणः १८८। ऋकृभ्रिल्युणे करुणा १९६। कॄगॄभ्य ऊर् चान्तस्येति पे कूर्पं भ्रूमध्यम् २९८। कॄशॄमित्यभे करभः ३२९। कॄशॄमितीरे करीरः ४१८। गौरादित्वाङ् ङ्याम् करीरी। कॄतॄभ्यामीपः करीपः ५५३। नाम्युपान्त्येति किदिः किरिः सूकरः ६०९। कॄम ऋत उर् चेत्युः कुरुः ७३४। कॄगृश् हिंसायाम्। कृणीते कृणाति॥

21. गॄन् निगरणे। निगरणं भोजनम्। न वा स्वरे इति वा लत्वे गिरति गिलति। प्रतिज्ञायां सम इत्यात्मनेपदे संगिरते। अवात् अवगिरते। कर्मकर्तर्येकधाताविति ञिक्यात्मनेपदेषु प्राप्तेषु किरादित्वाद्भुपार्थेति क्यञ्ञ्योः प्रतिषेधे निगिरते मासः स्वयमेव। इट् सिजिति वेटि वृतो न वेति वेटो दीर्घे न्यगीर्ष्ट मासः स्वयमेव न्यगरिष्ट न्यगरीष्ट स्वयमेव। णौ फलवत्कर्तर्यागिन इत्यात्मनेपदापवादे चल्याहारार्थेति परस्मैपदे निगारयति मासं चैत्र मैत्रः। गॄलुपेति गर्ह्यार्थे यङि गो यङीति लत्वे निजेगिल्यते। यङ्लुपि निजागलीति। ऋस्मिपूङिति सनीटि जिगरिपति जिगरीपति। अस्येटो दीर्घ नेच्छन्त्येके गारिष्यति गरीष्यति। ऋवर्णश्रीति किति नेट् ऋल्वादेरिति लो नत्वे गीर्णः गीर्णवान्। क्तौ गीर्णिः। गीर्त्वा। नाम्युपान्त्येति के गिरः। लत्वे गिलः। अणपवादे लिहाद्यचि अजगरः ओदनगरः। कापवादेच्यलि वा गरः। लत्वे गलः। न्युदो ग इति घञि निगारः उद्गारः। बाहुलकाद्धञि णे वा अगारम्। उणादौ ऋतटिदित्यः सरूपे च द्वे रूपे गर्गरो राजर्षिः। गर्गरी महाकुम्भः ९। गम्यमीति गे गर्गः ऋषिः १२। दम्यमीति ते गर्तः २००। गृदृग्रमीति भे गर्भः ३२७। कॄशॄपित्यभे गरभो गर्भ एव ३२९। लटिपिटीति वे गर्वः ५०५। ग्रहादेति वे निपातनात् ग्रीवा ५१४। नाम्युपान्त्येति किदिः गिरिः ६०९। गो मादिन्युनि गरन् गर्मुदेम ८९०। गॄश् शब्दे। गृणाति॥

अथ खान्तः सेट् च ॥

22. लिखत् अक्षरविन्यासे । लिखति लिलेख लेखिता लिखितः । नाम्युपान्त्येति कापवादे लिहादिभ्य इति लेखः । भिदादिनिपातनादङि लेखा । करणाधारे व्यञ्जनादिति घञि लेखः । उणादौ क्षुकुन्दीति कित्यके लिखकश्चित्रकरः २९ । कुटादिरयमित्येके लिखनीयम् ॥

अथ चान्ताः पञ्च सेटश्च ॥

23. जर्च 24 झर्च्च परिभाषणे । तर्जनमित्येके । जर्चति जजर्च जर्चिता जर्चितः ॥

24. झर्च । झर्चति जझर्च झर्चिता झर्चितः । चादिरयमित्यन्ये चर्चति । णके चर्चिका ॥

25. त्वचत् संवरणे । संवरणमाच्छादनम् । त्वचति तत्वाच त्वचिता । आचि त्वचः । क्विपि सिरामांसादि त्वचतीति त्वक् ॥

26. ऋचत् स्तुतौ । ऋचति । अनात इति पूर्वस्यात्वे ने च आनर्च आनृचतुः । अर्चिता ऋचितः । ऋदुपान्त्यादित्यत्र ऋचो वर्जनादृवर्णेति घ्यणि को सेट्त्वात्कत्वाभावे अर्च्यः । बाहुलकात्कर्तरि करणे वा क्रुत्संपदेति क्विपि ऋक् । आर्चिरिति तु दृच्यर्चीतीत्यर्चेः [ उणादौ ९८९ ] ॥

27. ओव्रश्चौत् छेदने । दन्त्योपान्त्योऽयं तस्य शषाविति शे ग्रहव्रश्चेति य्वृति वृश्चति । वव्रश्च । संयोगान्तत्वादिन्ध्यसंयोगादिति कित्त्वाभावान्न य्वृत् वव्रश्चतुः वव्रश्चुः । औदित्त्वादिट् संयोगस्यादाविति शस्य लुकि यजसृजेति चस्य षत्वे व्रष्टा । पक्षे व्रश्चिता । वेट्त्वात् क्तयोर्नेट् सूयत्याद्यीति तस्य नत्वे व्रादेर्षोऽपीति नस्यासिद्धत्वेन सस्य लुकि चस्य कत्वे च वृक्णः वृक्णवान् । अपीति वचनात्पत्वे कर्तव्ये नत्वं सिद्धमेवेति धुड्भ्रस्जयजसृजेति न षत्वम् । क्त्वि जृव्रश्च इतीटि क्त्वेति कित्त्वाभावान्न य्वृत् व्रश्चित्वा । क्विपि मूलवृट् । उणादौ पापुलीति किनीके वृश्चिकः ४१ । ऋजिरिषीति किति से वृक्षः ५६७ ॥

अथ छान्ताः षट् ग्रहणगाः सेटश्च ॥

28. ऋछत् इन्द्रियप्रलयमूर्तिभावयोः । इन्द्रियाणां प्रलये मोहे मूर्तिभावे च । गतावप्यन्ये । स्वरेभ्य इति छस्य द्वित्वे ऋच्छति । समो गमृच्छीत्यात्मनेपदे समृच्छते । ऋदुपान्त्यादित्यत्र ऋचो वर्जनादात्मभावे स्कृच्छ्र इति गुणेनात इति पूर्वस्यात्वे ने च आनर्छ आनर्छतुः आनर्छुः । ऋच्छिता ऋच्छितः ऋच्छितवान् ॥

29. विछत् गतौ । स्वरेभ्य इति छस्य द्वित्वेशवि ते वेति वा ये विच्छायति विच्छति विच्छिता विच्छायिता । शत्र्यवर्णादश्च इति वान्तादेशे विच्छती विच्छन्ती स्त्री कुले वा । द्रमिलास्तु ञे नित्यमायं तुदादिपाठबलाचायव्यवायेपि पक्षेन्ताभावमिच्छन्ति विच्छायन्ती विच्छायती । यथा जुगुप्सते इति सना व्यवधानेप्यात्मनेपदम् । विच्छो नङ् विश्नः । विछण् भासार्थः । विच्छयति ॥

30. उछैत् विवासे । विवासोतिक्रमः । स्वरेभ्य इति छस्य द्वित्वे उच्छति । गुरुनाम्यादेरिति परोक्षाया आमि उच्छां चकार । उच्छिता । ऐदित्वात् क्तयोर्नेट् अनुनासिके चेति छस्य शे यजसृजेति शस्य षे व्युष्टः व्युष्टवान् । व्युष्टा नाडिः । व्युष्टं प्रातः । सनि उचिच्छिषति । छस्य द्वित्वे पूर्वस्य चस्य तत्वं नेच्छन्त्येके । तन्मते उतिच्छिषतीत्यपि । एवमन्यत्रापि । शत्र्यवर्णादश्च इति वान्तादेशे उच्छती उच्छन्ती स्त्री कुले वा ॥

31. मिछत् उत्क्लेशे । उत्क्लेशो बाधनम् । स्वरेभ्य इति छस्य द्वित्वे मिच्छति मिमिच्छ मिच्छिता मिच्छितः मिच्छती मिच्छन्ती स्त्री कुले वा । पिछेति द्रमिलाः । पिच्छायाम ॥

32. उछुत् उञ्छे । उञ्छ उच्चयः । सञ्चित्वान्ते तवर्गस्येति नस्य ञे उञ्छति । गुरुनाम्यादेरिति परोक्षाया आमि उञ्छां चकार । उञ्छिता । घञि उञ्छः । उञ्छती उञ्छन्ती स्त्री कुले वा ॥

33. प्रछंत् ज्ञीप्सायाम् । ज्ञीप्सा जिज्ञासा । स्वरेभ्य इति छस्य द्वित्वे ग्रहव्रश्चेति य्वृति पृच्छति । समो गमिस्यात्मनेपदे संपृच्छते । आङ्पूर्वस्य तु प्रच्छः आपृच्छते गुरुम् । पप्रच्छ । संयोगान्तस्याविन्ध्यसंयोगेति कित्त्वाभावाच्च य्वृत् पप्रच्छतुः पप्रच्छुः । अनुस्वारेत्त्वादिट् प्रष्टा पृष्टः । ऋस्मिपूदनौटि ग्रहादिवेति सनः किच्चेपि पिपृच्छिषति । दिद्युदेति क्विपि निपातनात् प्रश्नदीर्घः प्राट् शब्दप्राट् । प्राड्विवाको निर्णेता । यजिस्वपीति नेऽनुनासिके चेति छस्य शे प्रश्नः । भिदादिपाठे पृच्छा । उणादौ लुगुपान्त्यस्य चेति नौ पृश्निः ग० उ० ६७९ ॥

निपातनादत्र न गत्वम् उब्जती उब्जन्ती स्त्री कुले वा । ओज इति उपेर्जे चेत्युपेः [ उणादौ १६१ ] ॥

35. सृजंत् विसर्गे । सृजति । सृजः श्राद्धे इति ञिक्यात्मनेपदेषु असर्जि मालां धार्मिकः सृज्यते मालां धार्मिकः स्रक्ष्यते मालां धार्मिकः । कर्मकर्तरि सृज्यते माला स्वयमेव असर्जि माला स्वयमेव । ससर्ज । थवि सृजिदृशीति वेटि ससष्ठ ससर्जिथ । अनुस्वारेत्त्वादेट् अः सृजिदृश इति स्वरात्परोऽः यजसृजेति जस्य षः स्रष्टा अस्राक्षीत् सृष्टः । सृजती सृजन्ती स्त्री कुले वा । उणादौ स्यन्दिसृजिभ्यां सिन्धरज्जौ चेत्युः रज्जुः ७१७ ॥

36. रुजोंत् भङ्गे । रुजार्थस्येति वा कर्मणः कर्मत्वे शेषषष्ठ्याम् चौरस्य रुजति रोगः चौरं रुजति रोगः । रुरोज । अनुस्वारेत्त्वादेट् रोक्ता । ओदित्वात्सूयत्यादीति क्तयोस्तस्य नत्वे क्तादेशोऽषीति नस्यासिद्धत्वेन धुटि चज इति गे रुग्णः रुग्णवान् । कूलादुद्रुजेति खशि कूलमुद्रुजः समुद्रः । क्विपि गतिकारकस्येति नेर्दीर्घे नीरुगित्येके । पदरुजेति कर्तरि घञि रोगः । भिदाद्यङि रुजा । उणादौ रुक्ममी-ष्मेति मकि निपातनात् रुक्मम् ३४६ ॥

37. भुजोंत् कौटिल्ये । भुजति निभुजति बुभोज । अनुस्वारेत्त्वादेट् भोक्ता । ओदित्वात्सूयत्यादीति क्तयोस्तस्य नत्वे भुग्नः भुग्नवान् । नाम्युपान्त्येति के भुजः । ऋवर्णेति ध्यणि भोग्यम् । स्यादिभ्य इति भावे के भुजः कौटिल्यम् । भुजेन गच्छति भुजगः । करणाधारे व्यञ्जनादिति घञि भोगः सर्पकायः । भुजंप् पालनाभ्यवहारयोः । भुनक्ति । भुनजोऽत्राणे इत्यात्मनेपदे भुङ्क्ते ॥

38. टुमस्जोंत् शुद्धौ । शुद्धया स्नानं बुडनं च लक्ष्यते । सस्य शषाविति शे तृतीयस्तृतीयेति शस्य जे मज्जति ममज्ज । अनुस्वारेत्त्वादेट् मस्जेः स इति धुटि सस्य नत्वे मङ्क्ता । उदित्वात्सूयत्यादीति क्तयोस्तस्य नत्वे नो व्यञ्जनस्येति नलुकि मग्नः मग्नवान् । जनश इति क्त्वो वा किद्वत्त्वे मक्त्वा मङ्क्त्वा । ऋवर्णेति ध्यणि क्तेनिट इति जस्य गे तृतीयस्तृतीयेति सस्य दे मद्ग्यः । अचि मज्जः । नाम्युत्तरपदस्येत्युदे उदके मज्ज उदमज्जः । ट्वित्वादथौ मज्जथुः । अनटि मज्जनम् । भिदाद्यङि मज्जा । उणादौ भृमृतृत्विरेत्युः उज्ज्ञादित्वाद्ह्रस्वे मद्गुः ७१६ । उक्षितक्षीत्यनि मज्जास्थिसारः मज्जानौ ९०० । मञ्जूषेति तु मञ्जेः सौत्रस्य खलिफली-त्यूषे ५६० ॥

39. जर्ज 40 झर्झत् परिभाषणे । जर्जति जजर्ज जर्जिता जर्जितः जर्जती जर्जन्ती स्त्री कुले वा ॥

अथ झान्तौ सेटौ च ॥

40 झर्झ । झर्झति जझर्झ झर्झिता झर्झित झर्झती झर्झन्ती स्त्री कुले वा । जर्जरझर्झरौ तु जॄझॄषो ऋतटिदिरप्रत्यये सरूपाद्वित्वे च [ उणादौ ९ ] । तर्ज-नेप्ययमित्यन्ये ॥

41 उदझत् उत्सर्गे । दोपान्त्योय तवर्गस्येति दस्य जे उज्झति । गुरुनाम्यादेरिति परोक्षाया आमि उज्झा चकार । उज्झिता । न बदनामिति दस्य प्रतिषेधात्स्वरादेरिति द्वितीयांशस्य झेरेव द्वित्वे उज्जिझिषति । कुप्यभिद्येति क्यपि निपातनात् उज्झत्युदकमिति उद्ध्यो नद । क्विपि पदान्ते पदस्येति संयोगान्तलुकि उत् उद् । उज्झती उज्झन्ती स्त्री कुले वा ॥

अथ डान्ताश्चत्वारः सेटश्च ॥

42 जुडत् गतौ । जुडति जुजोड जोडिता जुडित । घञि जोड ॥

43 पृड 44 मृडत् सुखने । पृडति पपर्ड पर्डिता पृडित ॥

44 मृड । मृडति ममर्ड मर्डिता मृडित । क्षुधक्लिशेति क्त्वः कित्त्वाद्गुणाभावे मृडित्वा । नाम्युपान्त्येति के मृड । तद्भार्या तु वरुणेन्द्रेति ङ्यामानन्ते च मृडानी ॥

45 कडत् मदे । भक्षणे इत्यन्ये । कडति चकाड । अचि कडः । लत्वे कल । कडिता कडित कडती कडन्ती स्त्री कुले वा । केचित्तु कुटादिरयं कुटादित्वान्न वृद्धिरित्याहुः । तन्मते णके कडक । उणादौ कृकडीत्यम्बे कडम्बो जातिविशेष ३२१ । ऋधूनर्थीत्यमे कडम शालि । लत्वे कलम ३८७ । अग्यङ्गीत्यारे कडार ४०५ । घृवृनक्षीत्यत्रे कडत्रम् । लत्वे कलत्रं भार्या नितम्बश्च ४९६ । वन्धिवहीतीत्रे कडित्र लेख्याधारः ४८९ । कडेरेवरङ्गौ कडेवर मनकाय । लत्वे कलेवरम् । कडङ्गरो बुस ४४८ । कलङ्क इति तु कलने कृपृकडीत्यङ्के ५८९ । कलिरित्यप्यस्यैव पतिपठीत्यौ ६०७ ॥

अथ णान्ता नव सेटश्च ॥

46 पृणत् प्रीणने । पृणति पपर्ण पर्णिता पृणित । नाम्युपान्त्येति के पृण । लोकम्पृणेति निपातनान्मोऽन्ते लोकस्य पृणो लोकम्पृण ॥

47 तुणत् कौटिल्ये । तुणति तुतोण तोणिता तुणित । उणादौ कुगुहीति किदे तुण्डम् । बाहुलकाद्दीर्घे ११७ ॥

48 मृणत् हिंसायाम् । मृणति ममर्ण मर्णिता मृणित । उणादौ कुलिपीति कित्याले मृणाल बिसम् ४७६ ॥

49. द्रुणत् गतिकौटिल्ययोश्च । चकाराद्धिंसायाम् । द्रुणति दुद्रोण द्रोणिता द्रुणितः । नाम्युपान्त्येति के द्रुणः । गौरादित्वाड् ङ्याम् द्रुणी । घञि द्रोणः । गौरादित्वाड् ङ्याम् द्रोणी ॥

50. पुणत् शुभे । शुभ शुभविषया क्रिया । पुणति पुपोण पोणिता पुणितः । नाम्युपान्त्येति के पुणः निपुणः । उणादौ सृणीकास्तीकेतीके निपातनात् पुण्डरीकम् ५० । कुगुहुनीति किति डे पुण्डो भिन्नवर्णः । बाहुलकान्न दीर्घः १७० । एवं कुण्डादिष्वपि । ऋशिजनीति किति ये पुण्यम् ३६१ । खुरक्षुरेति निपातनात् पुण्ड्रः ३९६ ॥

51. मुणत् प्रतिज्ञाने । मुणति मुमोण मोणिता मुणितः । उणादौ कुगुहुनीति किति डे मुण्डः १७० ॥

52. कुणत् शब्दोपकरणयोः । कुणति चुकोण कोणिता कुणितः । नाम्युपान्त्येति के कुणः । घञि कोणः । उणादौ कुगुहुनीति किति डे कुण्डम् १७० । भाजगोणेति ङ्याम् कुण्डयमन्नम् । कुण्डान्या । कल्यतीतीन्दाकि कुणिन्दो म्लेच्छः २४६ । कुलिपिलीति कित्याले कुणालं नगरम् ४७६ ॥

53. घुण 54 घूर्णत् भ्रमणे । घुणति जुघोण घोणिता घुणितः । नाम्युपान्त्येति के घुणः । लिहाद्यचि घोणा ॥

54. घूर्ण । घूर्णति जुघूर्ण घूर्णिता घूर्णितः घूर्णती घूर्णन्ती स्त्री कुले वा । घुणि घूर्णि भ्रमणे । घोणते घूर्णते ॥

अथ तान्तः सेट् च ॥

55. चृतैत् हिंसाग्रन्थयोः । चृतति चचर्त चर्तिता । सादौ कृतचृतेति वेट् चर्त्स्यति चर्तिष्यति चिचृत्सति चिचर्तिषति । असिद्ध इति वचनात्सिचि नित्यमिटि अचर्तीत् । वेट्त्वात् क्तयोर्नेट् चृत्तः चृत्तवान् । ऐदित्वाद्यङ्लुप्यनेकस्वरादपि क्तयोर्नेट् चरीचृत्तः चरीचृत्तवान् । ऋदुपान्त्यादित्यत्र चृतो वर्जनादृवर्णेति घ्यणि चर्त्यम् ॥

अथ दान्तावनिटौ च ॥

56. णुदंत् प्रेरणे । पाठे इति णस्य ने नुदति । णोपदेशत्वाद्दुरुपसर्गेति णत्वे प्रणुदति । नुनोद । अनुस्वारेत्त्वादिट् नोत्ता । ऋह्रीघ्रेति क्तयोस्तस्य वा नत्वे नुन्नः नुन्नवान् नुत्तः नुत्तवान् । शोकापनुदेति के निपातनात् शोकापनुदः पुत्रः । घञि प्रणोदः । नुदती नुदन्ती स्त्री कुले वा । ईदिदयमित्येके । तन्मते ईगित इति फलवत्कर्तर्यात्मनेपदे नुदते नुनुदे । उणादौ ग्लानुदिभ्यां डौः नौः ८६८ ॥

57. षद्लृंत् अवसादने । श्रौतीति सीदादेशे सीदति ससाद । लृदित्त्वादङि असदत् । षोपदेशत्वाभाम्यन्तस्येति षत्वे सिषत्सति । ज्वलादिपाठेनैव सिद्धे इहास्य पाठोऽवर्णादश्न इति वान्तादेशार्थः सीदती सीदन्ती स्त्री कुले वा । ज्वलादिपाठोऽपि वा ज्वलादीति णविकल्पार्थः सादः सदः । अनुस्वारेत्त्वान्नेट् सत्ता । शद्लृंत् शातने इति तु न पठितव्य एव शिद्यात्मनेपदित्वेन शतुरभावेन्तादेशविकल्पप्राप्तेः । अशददित्यादेस्तु तेनैव सिद्धेः ॥

अथ धान्तः सेट् च ॥

58. विधत् विधाने । विधति विवेध विधितः विधितवान् । वौ व्यञ्जनादेरिति क्त्वासनोर्वा किस्वे विधित्वा वेधित्वा विविधिषति विवेधिषति । नाम्युपान्त्येति के विधः । उणादौ विधेर्वेति वा कित्त्वसि विधाः वेधाश्च ब्रह्मा ९७२ ॥

अथ नान्तौ सेटौ च ॥

59. जुन 60 शुनत् गतौ । जुनति जुजोन जोनिता जुनितः ॥

60. शुन । शुनति शुशोन शोनिता । नाम्युपान्त्येति के शुनो वायुः । उणादौ कीचकपेचकेत्यके निपातनात् शुनकः [ ३३ ] ॥

अथ पान्तोऽनिट् च ॥

61. छुपंत् स्पर्शे । छुपति चुच्छोप । अनुस्वारेत्त्वान्नेट् छोप्ता ॥

अथ फान्ता नव सेटश्च ॥

62. रिफत् कथनयुद्धहिंसादानेषु । रिफति रिरेफ रेफिता रिफितः । व्युपान्त्य इति व्यावृत्तियलादृतृषमृषेति वौ व्यञ्जनादेरिति च वा कित्त्वाभावे क्त्वेति नित्यमकित्त्वे रेफित्वा । स्वराद्दिरयमित्येके ऋफति । णौ अर्फयति ॥

63. तृफ 64 तृम्फत् तृप्तौ । मुचादीति ने विधानबलाद्यो व्यञ्जनस्येति नस्यालुकि तृम्फति । ततर्फ तर्फिता तृफित्वा तृफितः । ऋदुपान्त्यादिति क्यपि तृफ्यः ॥

64. तृम्फ । नो व्यञ्जनस्येति नलुकि तृफति । ततृम्फ तृम्फिता तृफितः । ऋत्तृषेति क्त्वो वा कित्त्वे तृफित्वा तृम्फित्वा । पान्तावेतावित्यन्ये तृपति । शे नलुक् च नेष्यते तृम्पति ॥

65. ऋफ 66 ऋम्फत् हिंसायाम् । ऋफति । अनात इति पूर्वस्यात्वे ने च आनर्फ आनृफतुः । अर्फिता ऋफितः । सनि अर्फिफिषति । क्त्वेति कित्वाभावे अर्फित्वा । ऋदुपान्त्यादिति क्यपि ऋफ्यः ॥

66. ऋम्फ। नो व्यञ्जनस्येति नलुकि ऋफति। नलोपं नेच्छन्त्येके ऋम्फति। अनात इति पूर्वस्यात्वे ने च आनृम्फ। ऋम्फिता ऋफितः। ऋत्तृषेति क्त्वो वा किंत्वे ऋफित्वा ऋम्फित्वा। इकारोपान्त्यो रादिश्चायमित्यन्यः। तन्मते शे नलोपानिष्टौ रिम्फति। रिरिम्फ॥

67. दृफ 68 दृम्फत् उत्क्लेशे। मुचादीति ने दृम्फति। ददर्फ दर्फिता दृफितः। क्त्वेति किंत्वाभावे दर्फित्वा॥

68. दृम्फ। नो व्यञ्जनस्येति नलुकि दृफति। ददृम्फ दृम्फिता। ऋत्तृषेति क्त्वो वा किंत्वे दृफित्वा दृम्फित्वा॥

69. गुफ 70 गुम्फत् ग्रन्थने। मुचादीति ने गुम्फति। जुगोफ गोफिता गुफितः। क्त्वेति किंत्वाभावे गोफित्वा। न्युपान्त्य इति व्यावृत्तिबलादृतृषेति वौ व्यञ्जनादेरिति चात्र वा न किंत्वम्॥

70. गुम्फ। नो व्यञ्जनस्येति नलुकि गुफति। जुगुम्फ गुम्फिता। ऋत्तृषेति क्त्वो वा किंत्वे गुफित्वा गुम्फित्वा॥

अथ भान्ताः षट् सेटश्च॥

71. उभ 72 उम्भत् पूरणे। मुचादीति ने उम्भति। उवोभ उभिता उभितः। नाम्युपान्त्येति के उभो। उणादौ उभेर्द्वित्वे नेत्यौ द्वौ वयः ६१९॥

72. उम्भ। नो व्यञ्जनस्येति नलुकि उभति। गुरुनाम्यादेरिति परोक्षाया आमि उम्भां चकार। उम्भिता उम्भित्वा॥

73. शुभ 74 शुम्भत् शोभार्थे। मुचादीति ने शुम्भति। शुशोभ अशो-भीत् शोभिता। नाम्युपान्त्येति के शुभम्। भिदायदि निपातनात् शोभा। उणादौ ऋज्यजीति किति रे शुभ्रम् ३८८। शुभि दीप्तौ। शोभते। द्युद्भ्योऽद्यतन्यामिति यात्मनेपदे अशोभिट। पक्षे शेषादिति परस्मैपदे लृदिद्युतादि अशुभत्॥

74. शुम्भ। नो व्यञ्जनस्येति नलुकि शुभति। शुशुम्भ शुम्भिता शुम्भित्वा। शुम्भ भाषणे चेत्यर्थभेदात्पाठः शुम्भति। भ्वादौ शुम्भ निशुम्भनार्थौ दन्त्यादिरित्येके॥

75. दृभैत् भये। दृभति ददर्भ दर्भिता। क्त्वेति किंत्वाभावाद्गुणे दर्भित्वा। ऐदित्वात् क्तयोर्नेट् दृब्धः दृब्धवान्। घञि संदर्भः। उणादौ दृभिवपेः स्वरान्ते-न्तश्चेत्यूः दृन्भूः सर्पः ८४१॥

76. लुभत् विमोहने। विमोहनं व्याकुलीकरणम्। लुभति लुलोभ। सहलु-भेच्छेति वेटि लोब्धा लोभिता। लुभ्यञ्चेरिति क्तयोरिटि विलुभिताः केशाः।

विलुभितवान् । धातूनामनेकार्थत्वाद्विमोहादन्यत्र वेट्त्वान्नेट् लुब्धः लुब्धवान् ।
लुभच् गार्द्ध्ये । लुभ्यति अलुभत् ॥

अथ रान्ता अष्टौ सेटश्च ॥

77. कुरत् शब्दे । कुरति चुकोर कोरिता कुरितः । कुरुच्छुर इत्यत्र कुग एव ग्रहणाद् भ्वादेरिति दीर्घे कूर्यते । आशिषि कूर्यात् । अस्यापि न दीर्घ इत्येके कुर्यात् । उणादौ मृदुन्दीति किल्परे कुररो जलपक्षी ३९९ । कितिकुडिकुरीति किल्यचे कुरयो वृक्षः ९१८ ॥

78. क्षुरत् विलेखने । क्षुरति चुक्षोर क्षोरिता । नाम्युपान्त्येति के क्षुरः ॥

79. खुरत् छेदने च । छेदनं विलेखनम् । चकाराद्विलेखने । खुरति चुखोर खोरिता । नाम्युपान्त्येति के खुरः । क्रोडादित्वादसञ्ज्ञाविति ड्यभावे कल्याणखुरा ॥

80. घुरत् भीमार्थशब्दयोः । घुरति जुघोर घोरिता । घञि घोरः । उणादौ इदुदुपान्त्याभ्यामिति किदः सरूपद्वित्वं पूर्वस्य चोदन्तः घुरघुरः १७ । जजलेत्यादिनिपातनात्पूर्वस्योदभावे घुर्घुरोनुकरणशब्दो [ १८ ] ॥

81. पुरत् अग्रगमने । पुरति पुपोर पोरिता पुरितः । नाम्युपान्त्येति के पुरम् । क्विपि पूः । पुरुष इति तु विदिपृभ्यामिति किस्युषे पृणातेः [ उणादौ ५५८ ] । पुरहरित्यप्यस्यैव भृकाम्पीति किस्यौ [ उणादौ ७२१ ]॥

82. मुरत् संवेष्टने । मुरति मुमोर मोरिता मुरितः । नाम्युपान्त्येति के मुरः । उणादौ इदुदुपान्त्याभ्यामिति किदः सरूपद्वित्वं पूर्वस्य चोदन्तः मुरमुरोनुकरणशब्दः १७ । जजलेत्यादिनिपातनात्पूर्वस्योदभावे मुर्मुरः १०. १८ ॥

83. सुरत् ऐश्वर्यदीप्त्योः । सुरति । अषोपदेशत्वात्षत्वाभावे सुसोर । षोपदेशोयमित्येके । तन्मते नाम्यन्तस्थेति षत्वे सुषोर । सोरिता । नाम्युपान्त्येति के सुरो देवः । सुरा मद्यम् । उणादौ इदुदुपान्त्याभ्यामिति किदः सरूपद्वित्वं पूर्वस्य चोदन्तः सुरसुरोनुकरणशब्दः १७ ॥

84. स्फर 85 स्फलत् स्फुरणे । चलने इत्येके । स्फरति पस्फार स्फरिता । अनि स्फरः । कुटादिरयमित्यन्ये तन्मतेऽनाम णके वृद्ध्यभावे स्फरकः । घञि स्फारः ॥

अथ लान्तास्त्रयोदश सेटश्च ॥

85. स्फल । स्फलति पस्फाल स्फलिता । णौ क्ते आस्फालितः । अनटि आस्फालनम् । कुटादिरयमित्येके तन्मतेऽनाम णके वृद्ध्यभावे स्फलकः ॥

86. किलत् श्वैत्यक्रीडनयोः । किलति चिकेल केलिता किलितः । उणादौ किलेः किदित्यासे किलासः सिध्मम् ५७५ । किलाट इति तु किरः किरो लश्च वेत्याटे किलाटः १४७ । इदुदुपान्त्याभ्यामिति किदः स्वरूपद्वित्वं पूर्वस्य चेदन्तः किलिकिलोनुकरणशब्दः १७ । बहुल गुणवृद्धी चादेरिति पूर्वस्य गुणवृद्ध्योश्च केलिकिलः कैलिकिलश्च हासशीलः १९ । किलिपिलीत्यौ केलिः ६०८ ॥

87. इलत् गतिस्वप्नक्षेपणेषु । इलति इयेल एलिता । नाम्युपान्त्येति के इला । लिहाद्यचि घञि वा एलः । स्त्रियाम् एला । णौ एलयति ॥

88. हिलत् हावकरणे । हिलति जिहेल हेलिता । णावचि हेला । उणादौ इदुदुपान्त्याभ्यामिति किदः स्वरूपद्वित्वं पूर्वस्य चेदन्तः हिलिहिलोनुकरणशब्दः १७ । बहुलं गुणवृद्धी चादेः हेलिहिलः हैलिहिलश्च विलासशीलः १९ ॥

89. शिल 90 सिलत् उञ्छे । शिलति शिशेल शेलिता शिलितः । नाम्युपान्त्येति के शिलम् । स्त्रियामपि शिला । शेलुरिति तु शेलेर्लौ [उणादौ ८२०] ॥

90. सिल । सिलति । अषोपदेशत्वात्षत्वाभावे सिसेल । षोपदेशोयमित्येके । तन्मते नाम्यन्तस्थेति षत्वे सिषेल । सेलिता सिलितः । नाम्युपान्त्येति के सिलम् ॥

91. तिलत् स्नेहने । तिलति तितेल तेलिता । नाम्युपान्त्येति के तिलः । तिलण् स्नेहने । तेलयति ॥

92. चलत् विलसने । चलति चचाल चलिता । चलती चलन्ती स्त्री कुले वा । णौ कम्पने एव घटादित्वाद्ध्रस्वाभावे चालयति । चल कम्पने ज्वलादित्वाद्वा णे चालः चलः । श्यशत्र इति नित्यमन्तादेशे चलन्ती स्त्री कुले वा । णौ घटादिरवाद्ध्रस्वे चलयति । चलण् भृतौ । चालयति ॥

93. चिलत् वसने । चिलति चिचेल चेलिता । लिहाद्यचि चेलम् ॥

94. विलत् वरणे । दन्त्योष्ठ्यादिः । विलति विवेल वेलिता । घञि आवेलः । णावचि वेला ॥

95. बिलत् भेदने । ओष्ठ्यादिः । बिलति बिबेल बेलिता । नाम्युपान्त्येति के बिलम् आबिलम् । उणादौ बिलिभिलीति किति मे बिल्मं प्रकाशम् ३४० । निष्पूर्वीति किति वे बिल्वम् ५११ । बिलाल इति तु बिडालस्य लत्वे ४७६ ॥

96. णिलत् गहने । पाठे इति णस्य नत्वे निलति । णोपदेशत्वाददुरुपसर्गान्नस्य णत्वे प्रणिलति । निनेल नेलिता ॥

97. मिलत् श्लेषणे । मिलति मिमेल मेलिता मिलितः । लिहाद्यचि मेला ॥

अथ शान्ताः षडनिटश्च ॥

98. स्पृशंत् संस्पर्शे । स्पृशति पस्पर्श । स्पृशमृशेति वा सिचि स्पृशादीति वा स्वरात्परोऽः अस्प्राक्षीत् अस्पार्क्षीत् । पक्षे हशिट इति सकि अस्पृक्षत् । अनुस्वारेत्त्वान्नेट् स्प्रष्टा स्पर्ष्टा स्पृष्टः । पदरुजेति कर्तरि घञि स्पर्शो व्याधिः । स्पृशोनुदकादिति क्विपि ऋत्विग्दिशिति शस्य पापवादे गे घृतस्पृक् । उदकात्तु कर्मणोणिस्यणि उदकस्पर्शः । उणादौ स्पृशेः श्वः पार् चेति श्वे पार्श्वम् ५२३ । पर्शुरिति तु प्रः शुरिति शावुलोपाणिनश्चेत्युडि च पृणातेः [ ८२९ ] ॥

99. रुशं 100 रिशंत् हिंसायाम् । रुशति रुरोश । हशिट इति सकि अरुक्षत् । अनुस्वारेत्त्वान्नेट् रोष्टा रुष्टः ॥

100. रिशं । रिशति रिरेश । हशिट इति सकि अरिक्षत् । अनुस्वारेत्त्वान्नेट् रेष्टा रिष्टः ॥

101. विशंत् प्रवेशने । विशति । निविश इत्यात्मनेपदे वाभिनिविश इत्याधारस्य कर्मत्वे ग्राममभिनिविशते । विवेश । हशिट इति सकि अविक्षत् । अनुस्वारेत्त्वान्नेट् वेष्टा प्रविष्टः । क्वसौ गमहनेति वेटि विविशिवान् विविश्वान् । पदरुजेति घञि वेशो वेश्या याटः । अजातेः शीले इति णिनि संवेशी । श्रिदापतेति णमि गेहानुप्रवेशमास्ते गेहं गेहमनुप्रवेशमास्ते । उणादौ मृविशिभ्यामित्यन्ते वेशन्तः पल्वलम् २२९ । विटपोलपेत्यपे निपातनात् विटपं जगत् ३०७ । विशेरिपक् विशिपो राशिः ३०९ । निघृषीति किति वे विश्वम् ५११ ॥

102. मृशंत् आमर्शने । आमर्शनं स्पर्शः । मृशति परामृशति ममर्श । स्पृशमृशेति वा सिचि स्पृशादीति स्वरात्परे वाति व्यञ्जनानामिति वृद्धौ अम्राक्षीत् अमार्क्षीत् । पक्षे हशिट इति सकि अमृक्षत् । अनुस्वारेत्त्वान्नेट् म्रष्टा मर्ष्टा मृष्टः । ऋदुपान्त्यादिति क्यपि मृश्यम् । उणादौ युयुधीति कित्याने मृशानः २७७ ॥

103. लिशं 104 ऋषैत् गतौ । लिशति लिलेश । हशिट इति सकि अलिक्षत् । अनुस्वारेत्त्वान्नेट् लेष्टा लिष्टः । घञि लेशः । लिशोन् अल्पत्वे । लिशते ॥

अथ षान्तावयः सेटश्च ॥

104. ऋषैं । ऋषति । ऋत्याऽऽरुपसर्गस्येत्यारि प्रार्षति परार्षति । अनात इति पूर्वस्यात्वे नेन्ते न आनर्ष आनृषतुः । अर्षिता । क्तेति क्तियत्वाभावे अर्षित्वा । ऐदित्त्वात् क्तयोर्नेट् ऋष्टः ऋष्टवान् । ऋदुपान्त्येति क्यपि ऋष्यः । उणादौ कषिमृषीति कित्यभे ऋषभः ३३१ । ऋजिरिषीति किति मे ऋक्षः ५६७ । नाम्युपान्त्येति किदिः ऋषिः ६०९ । इमुषीति किति तौ ऋष्टिः खड्गः [ ६६१ ] ॥

105. इषत् इच्छायाम्। गमिषद्यिति छे इच्छति। इयेष एषिष्यति। तादौ सहलुभेति वेटि एष्टा एषिता इष्ट्वा। क्त्वेति क्त्वाभावाद्गुणे एषित्वा। वेट्त्वात् क्तयोर्नेट् इष्टः इष्टवान्। ऋवर्णेति घ्यणि एष्यः। प्रस्यैषैष्येत्यैत्वे प्रैष्यः। विन्द्विच्छू इति निपातनादुः एषणशीलः इच्छुः। नाम्युपान्त्येति के इष आश्वयुजः। श्वादिभ्य इति क्तौ इष्यतेनयेति इष्टिः। मृगयेति निपातनात् शे इच्छा। करणाधारे इत्यनटि एषणः। स्त्रियां गौरादित्वाड् ङ्याम् एषणी वैद्यशलाका। क्रुत्संपदेति क्विपि इट्। उणादौ इष्यशीति तककि इष्टका ७७। मस्जीषीति सुकि इक्षुः ८२६। इषच् गतौ। अन्विष्यति। इषश् आभीक्ष्ण्ये। इष्णाति॥

106. मिषत् स्पर्धायाम्। मिषति मिमेष मेषिता उन्मिषितम्। नाम्युपान्त्येति के अनिमिषो देवः। आमिषम्। लिहादयचि मेषः। घञि निमेषः उन्मेषः॥

अथ हान्ताः पञ्च सेटश्च॥

107. वृहौत्। उद्यमे। उद्यम उद्धरणम्। वृहति ववर्ह। औदित्त्वाद्वेट् वर्हिता वर्ढा। वेट्त्वात् क्तयोर्नेट् वृढः परिवृढः वृढवान्। घञि उद्बर्हः वर्हः। वृह वृद्धौ। वर्हति॥

108. तृहौ 109 तृंहौ 110 स्तृहौ 111 स्तृंहौत् हिंसायाम्। तृहति ततर्ह। औदित्त्वाद्वेट् अतर्हीत्। हशिट इति सकि अतृक्षत्। तर्हिता तर्ढा। वेट्त्वात् क्तयोर्नेट् आतृढः आतृढवान्॥

109. तृंहौ। नो व्यञ्जनस्येति नलुकि तृहति। ततृंह। औदित्त्वाद्वेट् अतृंहीत् अताङ्क्षीत्। तृंहिता तृण्ढा। वेट्त्वात् क्तयोर्नेट् नो व्यञ्जनस्येति नलुकि तृढः तृढवान्॥

110. स्तृहौ। स्तृहति तस्तर्ह। औदित्त्वाद्वेट् स्तर्हिता स्तर्ढा। वेट्त्वात् क्तयोर्नेट् स्तृढः स्तृढवान्। षोपदेशोयमित्येके। तन्मते णिस्तोरेवेति षत्वे तिष्टर्हिषति॥

111. स्तृंहौ। नो व्यञ्जनस्येति नलुकि स्तृहति। तस्तृंह। औदित्त्वाद्वेट् स्तृंहिता स्तृण्ढा। वेट्त्वात् क्तयोर्नेट् स्तृढः स्तृढवान्। तृहती तृहन्ती स्त्री कुले वा। अयमपि षोपदेश इत्यन्ये। तृहप् हिंसायाम्। तृम्हः आदीनि तृणेढि॥

अथ तुदाद्यन्तर्गणः कुटादिस्तत्र प्रसिद्ध्यनुरोधेनादौ

112. कुटत् कौटिल्ये। कुटति। कुटादेरिति ङिद्वत्त्वाद्गुणाभावे कुटिता कुटितुम् कुटित्वा। ञ्णितीति णु ङित्त्वाभावाद्गुणे चुकोट उत्कोटयति उत्कोटकः उदकोटि उत्कोटः। णिद्वान्त्यो णव् अहमुचुकोट। णित्त्वाभावे तु ङित्त्वाद् गुणः अहमुचुकुट। नाम्युपान्त्येति के कुटः उत्कुटः। उणादौ मुनिकुटीति क्स्ये

कुटपः प्रस्थचतुर्भागः २०९ । ऋच्छिचटीत्यरे कुटरो मर्कटः । बाहुलकाद्गुणे कोटरम्छिद्रम् ३१७ । घसिवशीतीरे कुटीरम् ४१८-४१९ । कल्यनीतीले कुटिलम् ४८९ । दृश्विकुटीति मलकि कुड्मलो विष्णुर्मकुलं च ५०२ । कृगृकुटीति वा णिदिः कोटिः कुटिः ६१९ ॥

अथोदन्तावनिटौ च ॥

113. गुंत् पुरीषोत्सर्गे । गुवति जुगाव । अनुस्वारेत्त्वान्नेट् कुटादेरिति ङित्वाद्गुणाभावे गुता गुतुम् गुतव्यम् । सिचि परस्मायिति वृद्ध्यभावे न्यगुषीत् । दुगोरू चेति क्तयोस्तस्य नत्वे गूनः गूनवान् । उणादौ पथयूथेति निपातनात् गूथम् २३१ । दीर्घान्तः सेट् चायमित्यन्ये । तन्मते न्यगुवीत् गुविता गुवितव्यम् । गुंङ् शब्दे । गवते ॥

114. ध्रुंत् गतिस्थैर्ययोः । ध्रुवति दुध्राव । अनुस्वारेत्त्वान्नेट् कुटादेरिति ङित्त्वाद्गुणाभावे ध्रुता । सिचि परस्मायिति वृद्ध्यभावे अध्रुषीत् । अचि ध्रुवः । कुत्सितेति कपि ध्रुवकः । गुपिमिथीतीले ध्रुविलः ऋषिः [ उणादौ ४८३ ] । सेडयमित्यन्ये । तन्मते न्यध्रुवीत् ध्रुविता । क्त्युवर्णाविति नेट् ध्रुतः । ङित्त्वेन कित्त्वं बाध्यते इति मते ध्रुवितः । ध्रुं स्थैर्ये च । ध्रवति ॥

अथोदन्तौ सेटौ च ॥

115. णुत् स्तवने । पाठे इति ने नुवति नुनाव नुविता नुवितुम् । णोपदेशत्वात्प्रदुरुपसर्गेति णत्वे क्त्युवर्णादितीडभावे प्रणुतः प्रणुतवान् । अन्ये तु ङित्त्वेन कित्त्वस्य बाधनादिट्प्रतिषेधं नेच्छन्ति नुवितः प्रणुवितः । एवं धुवित इत्युत्तरत्रापि द्रष्टव्यम् ॥

116. धुत् विधूनने । धुवति दुधाव धुविता धुवितव्यम् । क्त्युवर्णादितीडभावे धुतः धुतवान् । अनटि विधुवनम् । उणादौ धुगुन्धीत्यके धुवकं धूननम् । धुवकाध्वनविशेषः २९ । धूगट् कम्पने । धूनुते धूनोति । धूग्श् कम्पने । धुनीते धुनाति । धूगण् कम्पने । युजादेर्णिर्न वा इति णिचि धूनयति । पक्षे धवते धवति ॥

अथ चान्तौ सेटौ च ॥

117. कुचत् संकोचने । कुचति चुकोच । कुटादेरिति ङित्त्वाद्गुणाभावे कुचिता कुचितुम् संकुचितः । नाम्युपान्त्येति के कुचः । णिगि तु ङित्त्वाभावे णौ कोचयति । घञि के सेट्त्वान्तरत्वाभावे संकोचः । कुच संपर्चनादौ । संकोचति ॥

118. व्यचत् व्याजीकरणे । व्यचो नमीति वृति विचति । न्यायोस्त्यभीति पूर्वस्यत्वे विव्याच । कुटादेरिति ङित्त्वे विचिता विचितुम् । उणादौ अमित्यमि वृत्रभावे उरन्चवाः । विचुरन्चवा सूचिकः [ ९९२ ] ॥

अथ जान्तः सेट् च ॥

119. गुजत् शब्दे । गुजति जुगोज । कुटादेरिति ङित्वाद्गुणाभावे गुजिता गुजितुम् गुजितः अगुजीत् । ञ्णिति तु ङित्वाभावाद्गुणे अगोजि गोजयति । गुज अव्यक्ते शब्दे । गोजति ॥

अथ टान्ता अष्टौ सेटश्च ॥

120. घुटत् प्रतीघाते । घुटति जुघोट । कुटादेरिति ङित्वाद्गुणाभावे घुटिता घुटितुम् घुटितः । निकृतावित्यके घुटिका गुल्फास्थि । ञ्णिति तु ङित्वाभावाद्गुणे अघोटि घोटकः । गादिर्डान्तश्चायमित्यन्ये गुडति । नाम्युपान्त्येति के अयोगुडः ॥

121. चुट 122 छुट 123 त्रुटत् छेदने । चुटति चुचोट । कुटादेरिति ङित्वाद्गुणाभावे चुटिता चुटितुम् । ञ्णिति तु ङित्वाभावाद्गुणे घञि चोटः । णौ नन्द्यादिने उच्चोटनः । णके चोटकः ॥

122. छुट । छुटति चुच्छोट । कुटादेरिति ङित्वाद्गुणाभावे छुटिता छुटितुम् । ञ्णिति तु ङित्वाभावाद्गुणे अच्छोटि । भावे इति णके छोटिका । णौ छोटयति ॥

123. त्रुट । भ्रासभ्लासेति वा श्ये त्रुट्यति त्रुटति । तुत्रोट । कुटादेरिति ङित्वाद्गुणाभावे त्रुटिता त्रुटितुम् । ञ्णिति तु ङित्वाभावाद्गुणे अत्रोटि त्रोटकः त्रोटयति । उणादौ किलिपिलीति णाविः त्रोटिः ६०८ ॥

124. तुटत् कलहकर्मणि । तुटति तुतोट । कुटादेरिति ङित्वाद्गुणाभावे तुटिता तुटितुम् । ञ्णिति तु गुणे अतोटि । णके तोटकम् । उणादौ नाम्युपान्त्येति किदिः तुटिः [ ६०९ ] ॥

125. मुटत् आक्षेपप्रमर्दनयोः । मुटति मुमोट । कुटादेरिति ङित्वाद्गुणाभावे मुटिता मुटितुम् । ञ्णिति तु गुणे अमोटि । णौ मोटयति । णके आमोटकः । मुट प्रमर्दने । मोटति । मुटण् संचूर्णने । मोटयति ॥

126. स्फुटत् विकसने । स्फुटति पुस्फोट । कुटादेरिति ङित्वाद्गुणाभावे अस्फुटीत् स्फुटिता स्फुटितुम् । ञ्णिति तु गुणे स्फोटः । णौ स्फोटयति । नाम्युपान्त्येति के स्फुटः । स्फुटृ विसरणे । स्फोटति अस्फुटत् अस्फोटीत् । स्फुटि विकसने । स्फोटते ॥

127. पुट 128 लुटत् संश्लेषणे । पुटति । कुटादेरिति ङित्वाद्गुणाभावे पुटिता पुटितुम् । नाम्युपान्त्येति के पुटः । जातेरयान्तेति ङ्याम् पुटी । ञ्णिति तु गुणे घञि पोटा पायनि वा । पुटण् संचूर्णने भासार्थो वा । पोटयति ॥

अथ ठान्तः सेट् च ॥

128. लुठ । लुठति लुलोठ । कुटादेरिति ङित्वान्न गुणः लुठिता लुठितुम् । ञ्णिति तु गुणे अलोठि लोठयति । डान्तोऽयमित्यन्ये लुडति लुलोड लुडिता । लुठ उपघाते । लोठति । लुठि प्रतीघाते । लोठते ॥

अथ डान्ताश्चतुर्दश सेटश्च ॥

129. कृडत् घसने । घसनं भक्षणम् । घनत्वे इत्यन्ये । घनत्वं सान्द्रत्वम् । कृडति चकर्ड । कुटादेरिति ङित्वान्न गुणः कृडिता कृडितुम् । ञ्णिति तु गुणे अकार्डि कर्डयति ॥

130. कुडत् बाल्ये च । चकाराद्घसने । कुडति चुकोड । कुटादेरिति ङित्वान्न गुणः कुडिता कुडितुम् । ञ्णिति तु गुणे अकोडि कोडयति । उणादौ पतितमील्यङ्गे कुडङ्गः [ ९८ ] । कितिकुडीत्यवे कुडयो मामम् । लत्वे कुलवः ९१८ । कुडुङ् दाहे । कुण्डते । कुडुण् रक्षणे । कुण्डयति ॥

131. गुडत् रक्षायाम् । गुडति जुगोड । कुटादेरिति ङित्वान्न गुणः गुडिता गुडितुम् । नाम्युपान्त्येति के गुडः । स्त्रियामपि गुडा स्नसिसंनाहः । तिकृतावित्यके लत्वे च गुलिका । गुडाद्वा ह्रस्वार्थे कपि । ञ्णिति तु गुणे अगोडि । णके गोलकं युग्मम् । घञि भूगोलः । गुडुण् वेष्टने च । गुण्डयति ॥

132. जुडत् बन्धे । जुडति जुजोड । कुटादेरिति ङित्वान्न गुणः जुडिता जुडितुम् । ञ्णिति तु गुणे अजोडि जोडयति । जुडत् गतौ । जोडिता जोडितुम् ॥

133. तुडत् तोडने । तोडनं भेदः । तुडति तुतोड । कुटादेरिति ङित्वाद्गुणाभावे तुडिता तुडितुम् । ञ्णिति तु गुणे अतोडि तोडयति । उणादौ नाम्युपान्त्येति किदिः तुडिः [ ६०९ ] ॥

134. लुड 135 थुड 136 स्थुडत् संवरणे । लुडति लुलोड । थुडति तुथोड । स्थुडति तुस्थोड । कुटादेरिति ङित्वान्न गुणः लुडिता लुडितुम् । थुडिता थुडितुम् । स्थुडिता स्थुडितुम् । ञ्णिति तु गुणे अलोडि लोडयति । अथोडि थोडयति । अस्थोडि स्थोडयति । नाम्युपान्त्येति के स्थुल पटकुटी ॥

137. वुडत् उत्सर्गे च । चकारात्संवरणे । वुडति वुवोड । कुटादेरिति ङित्वान्न गुणः वुडिता वुडितुम् । ञ्णिति तु गुणे अवोडि वोडयति ॥

138 घुड 139 भ्रुडत् मज्जने । संवरणेऽप्यन्ये । घुडति जुघोड । भ्रुडति बुभ्रोड । कुटादेरिति ङित्वान्न गुणः घुडिता घुडितुम् । भ्रुडिता भ्रुडितुम् । ञ्णिति तु गुणे अघोडि घोडयति । अभ्रोडि भ्रोडयति ॥

140. दुड 141 हुड 142 त्रुडत् निमज्जने । दुडति दुदोड । हुडति जुहोड । त्रुडति तुत्रोड । कुटादेरिति ङित्वान्न गुणः दुडिता दुडितुम् । हुडिता हुडितुम् । त्रुडिता त्रुडितुम् । ञ्णिति तु गुणे अदोडि दोडयति । अहोडि होडयति । अत्रोडि त्रोडयति । घञि दोडः । लत्वे स्त्रियामपि दोला । होडः । उणादौ नाम्युपान्त्येति किदिः हुडिः [ ६०९ ] । पृकाहृपीति किदुः हुडुर्मेषः [ ७२९ ] । हुड़िः संघातेपीत्यन्ये ॥

अथ णान्तः सेट् च ॥

143. चुणत् छेदने । चुणति चुचोण । कुटादेरिति ङित्वान्न गुणः चुणिता चुणितुम् । ञ्णिति तु गुणे अचोणि चोणयति ॥

अथ पान्तः सेट् च ॥

144. डिपत् क्षेपे । डिपति डिडेप । कुटादेरिति ङित्वान्न गुणः डिपिता डिपितुम् । ञ्णिति तु गुणे अडेपि डेपयति । आसुय्वेति घ्यणि डेप्यम् । डिपच् क्षेपे । डिप्यति डेपिता । डिपण् क्षेपे । डेपयति । डिपिण् संघाते । डेपयते ॥

अथ रान्तौ सेटौ च ॥

145. छुरत् छेदने । छुरति चुच्छोर । आशिषि कुरुच्छुर इति दीर्घप्रतिषेधे छुर्यात् । कुटादेरिति ङित्वान्न गुणः छुरिता छुरितुम् आच्छुरितुम् । नाम्युपान्त्येति के छुरः । तिकृतावित्यके छुरिका । ञ्णिति तु गुणे अच्छोरि छोरयति ॥

146. स्फुरत् स्फुरणे । चलने इत्यन्ये । स्फुरति । निर्नेरिति वा षत्वे निःष्फुरति निःस्फुरति निष्फुरति निस्फुरति । वेः विष्फुरति विस्फुरति । विपूर्वाण्णौ चिस्फुरोरिति वा संध्यक्षरस्यात्वे विष्फारयति विष्फोरयति विस्फारयति विस्फोरयति । घञि स्फुरस्फुलोरित्यात्वे विष्फारः विस्फारः । णवि पुस्फोर । कुटादेरिति ञ्णितोन्यत्र ङित्वान्न गुणः स्फुरिता स्फुरितुम् स्फुरितः । नाम्युपान्त्येति के स्फुरः सस्फुरः । क्तौ स्फूर्तिः ॥

अथ लान्तः सेट् च ॥

147. स्फुलत् संचये च । चकारात्स्फुरणे । चलने इत्यन्ये । स्फुलति । निर्नेरिति वा षत्वे निःष्फुलति निःस्फुलति निष्फुलति निस्फुलति । वेः विष्फुलति विस्फुलति । घञि स्फुरस्फुलोरिति संध्यक्षरस्यात्वे विष्फालः विस्फालः । विपूर्वाण्णौगि विष्फोलयति विस्फोलयति । ञ्णितोन्यत्र कुटादेरिति ङित्वान्न गुणः स्फुलिष्यति । स्फुलितः । उणादौ स्फुलिकलीतीङ्कि स्फुलिङ्गः १०२ ॥

अथात्मनेपदिपूदन्तोनिट् च ॥

148. कुंङ् 149 कूङ्त् शब्दे । कुवते चुकुवे । यङि चोकूयते । कुटादेरिति ञ्णितोन्यस्य ङित्त्वान्न गुणोनुस्वारेत्त्वान्नेट् कुता कुतुम् कुतः ॥

अथोदन्तः सेट् च ॥

149. कूङ् । कुवते चुकुवे । कुटादेरिति ञ्णितोन्यस्य ङित्त्वान्न गुणः कुविता कुवितुम् । क्तियुवर्णादिति नेट् कूतः कूतवान् कूत्वा आकूतम् ॥

अथ रान्तः सेट् च ॥

150. गुरैति उद्यमे । गुरते जुगुरे । कुटादेरिति ङित्त्वान्न गुणः गुरिता गुरितुम् । ऐदित्त्वात् क्तयोर्नेट् गूर्णः गूर्णवान् । ञ्णिति तु गुणे यापगुरो णमीति संध्यक्षरस्य वात्वे अपगारमपगारम् अपगोरमपगोरम् । णौ आगोरयति । आगूरयतीति तु गूर्यतेः ॥ गुरत् कुटादिः । कुटादिस्तुदाद्यन्तर्गणो वर्तितः संपूर्ण इत्यर्थः ॥

अथ प्रकृतवर्णक्रमेण ऋदन्तास्त्रयोनिटश्च ॥

151. पृंङ्त् व्यायामे । व्यायाम उद्योगः । ङित इत्यात्मनेपदे रिः शक्यैति रीविधि व्याप्रियते । व्यापप्रे । अनुस्वारेत्त्वान्नेट् पर्ता पर्तुम् व्यापृतः । हनृत इतीटि व्यापरिष्यते । घञि व्यापारः ॥

152. दृंङ्त् आदरे । आद्रियते आदद्रे । अनुस्वारेत्त्वान्नेट् आदर्ता आदृतः प्रवृतः । हनृत इतीटि आदरिष्यते । ऋस्मिपूङिति सनीटि दिदरिषते । दृवृगिति क्यपि आदृत्यः । पुरंदरेति णौ खे निपातनात् पुरो दारयति पुरंदरः शक्रः । भगंदरो रोगः । जीणितीति आदरशील आदरी । युवर्णेत्यलि आदरः । दर्भ इति तु गृदृरमीति भे तृणाग्नेः [ उणादौ ३२७ ] । उणादौ दृमुवीति किति री दृतिर्भस्त्रा ६५१ ॥

153. धृंङ्त् स्थाने । धारणे इत्यन्ये । ध्रियते दध्रे । अनुस्वारेत्त्वान्नेट् धर्ता धृतः । हनृत इतीटि धरिष्यते । ऋस्मिपूङिति सनीटि दिधरिषते । ऋवर्णेति ध्यणि धार्यः । न्यायावायेत्याधारे घञि आधारः । धृंग् धारणे । धरति धरति ॥

अथ जान्ताश्चत्वारः ।

154. ओविजैति भयचलनयोः । उद्विजते उद्विविजे । विजेरिडिति ङित्त्वान्न गुणः उद्विजिता उद्विजितुम् । ऐदित्त्वात् क्तयोर्नेट् विग्नः विग्नवान् । ओदित्त्वात्सूयत्यादीति क्तयोस्तस्य नत्वम् । णौ के उद्वेजितः । न्यङ्क्वादीति वत्वे घञि वेगः ॥

155. ओलजैङ् 156 ओलस्जैति व्रीडे। लजते लेजे लजिता। ऐदित्वात् क्तयोर्नेट् ओदित्वात्सूयत्यादीति क्तयोस्तस्य नत्वे लग्नः लग्नवान्। नादित्यमिति चन्द्रः नग्नः॥

156. ओलस्जै। सस्य शषाविति शो तस्य तृतीयस्तृतीयेति जे लज्जते ललज्जे लज्जिता लज्जितुम्। ऐदित्वात् क्तयोर्नेट् ओदित्वात्तस्य नत्वे संयोगस्यादाविति सलुकि लग्नः लग्नवान्। भिदाद्यङि लज्जा। उणादौ लस्जीर्ष्येल्यालौ लज्जालुः ८२२। भ्यादौ युक्तपाठावप्येतौ प्रसिद्ध्यनुरोधादिह पठितौ॥

157. ष्वञ्जिंन् सङ्गे। षः स इति से स्वञ्जश्चेति षत्वे नो व्यञ्जनस्येति नलुकि परिष्वजते। परोक्षायां त्वादेरेव षत्वे स्वञ्जेर्नवेति परोक्षाया वा कित्त्वे परिषस्वजे परिषस्वञ्जे। परिनिविपूर्वस्य सुसिवस्वञ्जश्चेत्यड्व्यवाये वा षत्वे पर्यष्वजत पर्यस्वजत न्यष्वजत न्यस्वजत व्यष्वजत व्यस्वजत। अनुस्वारेत्त्वान्नेट् स्वङ्क्ता स्वङ्क्तुम् परिष्वक्तः। नवा निर्दिष्टस्यानित्यत्वादिटि अस्वञ्जिष्ट। जनश इति क्त्वो वा कित्त्वे स्वक्त्वा स्वङ्क्त्वा। घञि परिष्वङ्गः। क्तौ स्वक्तिः परिष्वक्तिः॥

अथ षान्तः सेट् च॥

158. जुषैति प्रीतिसेवनयोः। जुषते जुजुषे जोषिता जोषितुम्। ऐदित्वान् क्तयोर्नेट् जुष्टः जुष्टवान्। दृवृगिति क्यपि जुष्यः। क्विपि सजुष इति निर्देशात्सहस्य से षस्य रुत्वे सजूः सजुषौ। जुषण् परितर्कणे। युजादेरिति वा णिचि जोषयति जोषति॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणे तिच्छविकरणस्तुदादिगणः संपूर्णः॥

अथ रुधादय श्निकरणा वर्णक्रमेण प्रदर्श्यन्ते ॥

1 रुधूंपी आवरणे । आवरण व्यापित्वम् । पित्त्वं रुधादित्वज्ञापनार्थम् । ईदित्त्वादीगित इति फलवत्कर्तर्यात्मनेपदे रुधां स्वरादिति श्ने आस्त्योरित्यलुकि म्नामिति बहुवचनाण्णत्वापवादे ने रुन्द्धे । फलवतोन्यत्र शेषादिति परस्मैपदे रुणद्धि । रुरुधे रुरोध । ऋदित्त्वादृदिच्छ्वीति वाङि अरुधत् । पक्षे सिचि व्यञ्जनानामिति वृद्धौ अरौत्सीत् । आत्मनेपदे धुड्ह्रस्वादिति सिज्लुकि अरुद्ध । कर्मकर्तरि रुध इति ञिच्प्रतिषेधे अरुद्ध गौः स्वयमेव । सेः स्द्धामिति सिचो लुकि धौ वा रुत्वे च अरुणस्त्वम् अरुणत्त्वम् । अनुस्वारेत्त्वान्नेट् रोद्धा रोद्धुम् रुद्धः । नाम्युपान्त्येति के रुधः प्ररुधः । प्रमादिभ्य इति णिनि अपरोधी उपरोधी । समनुव्यवेति घिनणि संरोधशीलः संरोधी अनुरोधी । उपपीडेति णमि व्रजोपरोधं गाः सादयति । तृतीयोक्त वेति वा समासः । पक्षे व्रजेनोपरोधम् व्रजे उपरोधम् । उणादौ शुषीषीति किरे रुधिरम् ४१६ ॥

अथ यान्तावनिटौ च ॥

2 रिचूंपी विरेचने । विरेचन नि सारणम् । रिङ्क्ते रिणक्ति रिरिचे रिरेच । ऋदित्त्वाद्वाङि अरिचत् अरैक्षीत् । अनुस्वारेत्त्वान्नेट् रेक्ता रेक्तुम् रिक्तः । उणादौ नीनूरमीति किति थे रिक्थम् २२७ । रिचण् वियोजने च । युजादेरिति वा णिचि रेचयति रेचति ॥

3. विचूंपी पृथग्भावे । विङ्क्ते विनक्ति विविचे विवेच । ऋदित्त्वाद्वाङि अविचत् अवैक्षीत् । आत्मनेपदे तु धुडिति सिज्लुकि अविक्त । अनुस्वारेत्त्वान्नेट् वेक्ता वेक्तुम् विविक्तः । घञि क्तेनिट इति गस्य के विवेक ॥

अथ जान्तोनिट् च ॥

4 युजृंपी योगे । युङ्क्ते युनक्ति युयुजे युयोज । ऋदित्त्वाद्वाङि अयुजत् अयौक्षीत् । आत्मनेपदे तु धुडिति सिज्लुकि अयुक्त । उत्स्वरादित्यात्मनेपदे उद्युङ्क्ते प्रयुङ्क्ते । नेह इन्द्र यज्ञपात्राणि प्रयुनक्ति । यज्ञे यज्ञपात्र नहिषयस्यैव युज्यर्थस्य वर्जनादिहात्मनेपदमेव रन्धने यज्ञपात्रं प्रयुङ्क्ते यज्ञे रन्धनपात्रं प्रयुङ्क्ते । अनुस्वारेत्त्वान्नेट् योक्ता योक्तुम् नियुक्त । युजिच् समाधौ । युज्यते ॥

अथ दान्ता पञ्च ॥

5 भिदूंपी विदारणे । भिन्ते भिनत्ति बिभिदे बिभेद । ऋदित्त्वाद्वाङि अभिदत् अभैत्सीत् । आत्मनेपदे तु धुडिति सिज्लुकि अभित्त । अनुस्वारेत्त्वान्नेट् भेत्ता भेत्तुम् । ग्रहादिति नयोमस्य नत्वे भिन्न भिन्नवान् । भिन्नं दारुणम् । भिन्नम-

न्यत्। कुप्यभिद्येति क्यपि निपातनात् भिनत्ति कूलानीति भिद्यो नदः। कर्मणोणि-त्यणि काष्ठभेदः। असरूप इति क्विपि काष्ठभित्। वेत्तीति किति घुरे भिद्यते स्वयमेव भिदुरं काष्ठम्। भिदाद्यङि भिदा विदारणम्। भित्तिरन्या। उणादौ कृतिपुतीति किति तिके भित्तिका कुड्यम् ७६। श्रिहाविशेति कर्मकर्तरि केलिमः भिदेलिमं काष्ठम् ३६४। ऋज्यजीति किति रे भिद्रमदृढम् ३८८। शुर्यपीति किति॑रे भिदिरोऽशनिः ४१६। नाम्युपान्त्येति किदिः भिदिर्वज्रम् ६०९॥

6. छिदृंपी द्वैधीकरणे। अद्वैधस्य पृथक्के। छिन्ते छिनत्ति चिच्छिदे चिच्छेद। ऋदित्वाद्वाङि अच्छिदत् अच्छैत्सीत्। आत्मनेपदे तु धुडिति सिज्लुकि अच्छित्त। अनुस्वारेत्त्वान्नेट् छेत्ता छेत्तुम् छिन्नः। क्विपि रज्जुच्छित्। वेत्तीति किति घुरे छिदुरा रज्जुः। भिदाद्यङि छिदा द्वैधीभावः। छित्तिः विच्छित्तिरन्या। उणादौ ऋज्यजीति किति रे छिद्रम् ३८८। शुर्यपीति किरिरे छिदिर उन्दुरः। छिदिरं दात्रम् ४१६। नाम्युपान्त्येति किदिः छिदिश्छेत्ता परशुश्च ६०९॥

7. क्षुदृंपी संपेषे। क्षुन्ते क्षुणत्ति चुक्षुदे चुक्षोद। ऋदित्वाद्वाङि अक्षुदत् अ-क्षौत्सीत्। आत्मनेपदे तु धुडिति सिज्लुकि अक्षुत्त। अनुस्वारेत्त्वान्नेट् क्षोत्ता क्षोत्तुम् क्षुण्णः। उणादौ ऋज्यजीति किति रे क्षुद्रः ३८८॥

8. ऊछृदृंपी दीप्तिदेवनयोः। वमनेप्यन्ये। छृन्ते छृणत्ति चच्छृदे चच्छर्द छर्दिता छर्दितुम्। ऋदित्वाद्वाङि अच्छृदत् अच्छर्दीत्। आत्मनेपदे तु अच्छर्दिष्ट। असिचि सादौ कृतचृतेति वेट् छर्त्स्यति छर्दिष्यति। सिचि तु नित्यमिटि अच्छर्दीत्। णौ डे ऋदृवर्णस्येति ऋतो वा ऋत्वे अचिच्छृदत् अचच्छर्दत्। ऊदित्वात् क्त्वि वेट् छृत्त्वा छर्दित्वा। वेट्त्वात् क्तयोर्नेट् छृण्णः छृण्णवान्। ऋदुपान्त्यादिति क्यपि छृद्यम्। उणादौ हृष्यर्चीतीसि छर्दिर्वान्तिः ९८९॥

9. ऊतृदृंपी हिंसानादरयोः। तृन्ते तृणत्ति ततृदे ततर्द। ऋदित्वाद्वाङि अतृदत् अतर्दीत्। आत्मनेपदे तु अतर्दिष्ट। तर्दिता तर्दितुम्। असिचि सादौ कृत-चृतेति वेट् तर्त्स्यति तर्दिष्यति। सिचि तु अतर्दीत्। ऊदित्वात् क्त्वि वेट् तृत्त्वा तर्दित्वा। वेट्त्वात् क्तयोर्नेट् तृण्णः तृण्णवान्। उणादौ पदिपठील्यो वितर्दिः। स्वार्थे के वितर्दिका च वेदिः [ ६०७ ]॥

अथ परस्मैपदिषु चान्ताश्चयः सेटश्च ॥

10. पृचैप् संपर्के। शेषादिति परस्मैपदे पृणक्ति पपर्च पपृचुः। व्यञ्ज-नादेरिति दिस्रो लुकि अपृणक्। संपर्चिता। ऐदित्त्वात् क्तयोर्नेट् संपृक्तः संपृक्तवान्।

समः पृचैवितिति घिनणि संपर्कशीलः संपर्की। घञि क्तेऽनिट इति के पर्कः। मधुना पर्को मधुपर्कः। संपर्कः। पृचैङ्क् संपर्चने। पृक्ते। पृचण् संपर्चने। युजादेरिति वा णिचि संपर्चयति संपर्चति ॥

11. वृचैप् वरणे। वृणक्ति वृङ्क्तः वृञ्चन्ति। दिवि अवृणक्। ववर्च ववृचुः वर्चिता। ऐदित्वात् क्तयोर्नेट् वृक्तः वृक्तवान्। घञि क्तेऽनिट इति के वर्कः। जान्तोऽयमित्यन्ये। जान्तोऽपि वर्जनार्थ इत्येके। वृञ्जन्ति ववर्ज। घञि वर्गः ॥

12. तञ्चू 13 तञ्जौप् संकोचने। रुधामिति श्ने नलुकि न तनक्ति। दिवि अतनक्। ततञ्च तञ्चिता। ऊदित्वात् क्त्वि वेट् तक्त्वा तञ्चित्वा। वेट्त्वात् क्तयोर्नेट् तक्तः तक्तवान्। उणादौ ऋज्यजीति किति रे न्यङ्क्वादित्वात्कत्वे तक्रम् ३८८। औदिदयमित्येके। तन्मते औदित्वाद्वेट् तङ्क्ता तञ्चिता ॥

अथ जान्ताः पञ्च ॥

13. तञ्जौ। तनक्ति ततञ्ज। औदित्वाद्वेट् तङ्क्ता तञ्जिता। वेट्त्वात् क्तयोर्नेट तक्तः तक्तवान्। जनश इति नादेः क्त्वो वा कित्त्वे तक्त्वा तङ्क्त्वा। इटि तञ्जित्वा। क्त्वेति कित्वाभावाच्च नो लुक् ॥

14 भञ्जोंप् आमर्दने। भनक्ति बभञ्ज। भञ्जेर्ञौ वेति वा नलुकि अभाजि अभञ्जि। व्यञ्जनानामिति वृद्धौ अभाङ्क्षीत्। यङि जपजभेति पूर्वस्य मान्ते बम्भज्यते। अनुस्वारेत्त्वान्नेट् भङ्क्ता भङ्क्तुम्। ओदित्वात्सूयत्यादीति क्तयोस्तस्य नत्वे भग्नः भग्नवान्। जनश इति नादेः क्त्वो वा कित्त्वे भक्त्वा भङ्क्त्वा। भञ्जिभासीति घुरे भङ्गुरं काष्ठम्। घञि भङ्गा धान्यविशेषः। भङ्गोऽन्यः ॥

15 भुजंप् पालनाभ्यवहारयोः। अभ्यवहारो भोजनम्। भुनक्ति भुवम्। बुभोज। दिवि अभुनक्। त्राणादन्यत्र भुनज इत्यात्मनेपदे हविर्भुङ्क्ते। बुभुजे अभुङ्क्त। अनुस्वारेत्त्वान्नेट् भोक्ता भोक्तुम्। गत्यर्थेति वा कर्तरि क्ते भुक्तश्चैत्रोऽन्नम्। पक्षे कर्मणि भुक्तमन्नं चैत्रेण। भावे भुक्तं चैत्रेण। णौ गतिबोधेत्यणिकर्तुः कर्मत्वे चल्याहारार्थेति फलवत्कर्तर्यपि परस्मैपदे भोजयति चैत्रं पयो मैत्रः। ऋवर्णेति घ्यणि क्तेऽनिट इति गे भोग्या भूः। भुजो भक्ष्ये इति गत्वाभावे भोज्यमन्नम्। व्यञ्जनादिति करणे घञि भुजन्युब्जमिति निपातनात् भुजः पाणिः। अन्यत्र गत्वे गुणे च भोगोऽहिकायः। निन्हादिभ्य इत्यचि भोजः। युजभुजेति घिनणि भोगी। शसीत्यः बुभुक्षा। उणादौ रुचिभुजिभ्यां किष्य भुजिष्यो दासः ३८४। भुजेः किरिदिति यु भुज्युर्ऋषिः ८०२। विश्वाद्दिदीत्यसि विश्वभोजा अग्निः ९६६। भुजोंन् कौटिल्ये। निभुजति ॥

16. अञ्जौप् व्यक्तिम्रक्षणगतिषु। व्यक्तिः प्रकटता। म्रक्षणं घृतादिसेकः। तत्र केवलस्य म्रक्षणे एव वृत्तिः सोपसर्गविशेषस्य तु शेषयोरिति विवेकः। अनक्ति व्यनक्ति। अनात इति पूर्वस्यात्वे नेन्ते च आनञ्ज आनञ्जतुः। औदित्त्वाद्वेट् अञ्जिता अङ्क्ता। सिचोञ्जेरितीटि आञ्जीत् आञ्जिष्टाम्। ऋस्मिपूङिति सनीटि न बदनमिति नस्य द्वित्वाभावे स्वरादेरिति जेर्द्वित्वे आञ्जिजिषति। जनश इति वा क्तः कित्त्वे अक्त्वा अङ्क्त्वा। इटि अञ्जित्वा। वेट्त्वात् क्तयोर्नेट् अक्तः अक्तवान्। कुंप्यभियोति क्यपि निपातनात् आज्यं घृतम्। संज्ञाया अन्यत्र क्वर्णेति घ्यणि क्तेमिट इति गे अङ्ग्यम्। उणादौ पाट्यञ्जिभ्यामलिः अञ्जलिः ७०२। अञ्ज्यवेरिष्णुः आञ्जिष्णुर्भानुः ७६४। अञ्जेरिष्णुः आञ्जिष्णुस्सैलादिः ७७१। अञ्ज्यर्तेः किदिति तुनि अक्तुरिन्द्रः ७७७। असित्यसि अञ्जः स्नेहः ९५२॥

17. ओविजैप् भयचलनयोः। विनक्ति विङ्क्तः विवेज। विजेरिडितीटो ङित्त्वान्न गुणः उद्विजिता उद्विजितुम्। ऐदित्त्वात् क्तयोर्नेट् ओदित्त्वात्सूयत्यादीति क्तयोस्तस्य नत्वे उद्विग्नः उद्विग्नवान्। ओविजैति भयचलनयोः। उद्विजते॥

अथ तान्तः सेट् च॥

18. कृतैप् वेष्टने। कृणत्ति कृन्तः चकर्त कर्तिता। सादावसिचि कृतचृतेति वेटि कर्त्स्यति कर्तिष्यति। वेट्त्वात् क्तयोर्नेट् कृत्तः कृत्तवान्। ऐदित्त्वाद्यङ्लुप्यनेकस्वरादपि क्तयोर्नेट् चरीकृत्तः चरीकृत्तवान्। क्त्वेति कित्त्वाभावाद्गुणे कर्तित्वा। सिचि अकर्तीत्। उणादौ कृतिपुतीति किति तिके कृत्तिकाः ७६। कृतेस्तर्क चेत्युः तर्कुः सूत्रवेष्टनशलाका ७२३॥

अथ दान्तः सेट् च॥

19. उन्दैप् क्लेदने। उनत्ति। गुरुनाम्यादेरिति परोक्षाया आमि उन्दां चकार। उन्दिता उन्दितुम्। सनि न बदनमिति नस्य द्वित्वाभावे स्वरादेरिति देरेव द्वित्वे उन्दिदिषति। ऐदित्त्वात् क्तयोर्नेट् ऋह्रीति क्तयोस्तस्य वा नत्वे समुन्नः समुन्नवान् समुत्तः समुत्तवान्। दशनावोदेति निपातनाद्वृत्त्वे अवोदः। मनि ओद्म ओद्मनी। उणादौ क्षुधुन्दीति कित्यके उदकम् २१। उन्देर्नलुक् नेत्यने ओदनः २७१। ऋज्यजीति किति रे उद्र ऋषिः। समुन्दन्त्यत्रौमयन्ति वेलाकाले नद्योस्मादिति समुद्रः ३८८। इन्द्र इति तु भीवृधीति रे इन्दतेः ३८७। मृधुन्दीति कित्यरे उदरम् ३९९। वाद्यसीत्युरे उन्दुरः ४२३। कञ्जिरिपीति किति से उत्सः प्रस्रवणम् ५६७॥

अथ षान्तावनिटौ च ॥

20. शिषॢंप् विशेषणे। विशेषणं गुणान्तरोत्पादनम्। शिनष्टि विशिनष्टि। क्ये विशिष्यते। विशिशेष। ऌदित्त्वादङि अशिषत्। अनुस्वारेत्त्वानेट् शेष्टा शेष्टुम् शिष्टः। ऋवर्णेति ध्यणि विशेष्यः। कर्मण्यात्मनेपदे हशिट इति सकि व्यशिक्षन्त। घञि विशेषः। विनयादित्वात्स्वार्थे इकणि वैशेषिकः। शिषण् असर्वोपयोगे। युजादित्वाद्वा णिचि शेषयति। अलि विशेषः। पक्षे शेषति। घञि शेषः ॥

21. पिषॢंप् संचूर्णने। जासनाटेति वा कर्मणः कर्मत्वे शेषे इति षष्ठ्याम् चौरस्य पिनष्टि चौरं पिनष्टि। हिंसार्थादन्यत्र धानाः पिनष्टि। षान्तत्वादकखादीति नेर्वा णत्वाभावे प्रनिपिनष्टि। पिपेष। ऌदित्त्वादङि अपिषत्। कर्मण्यात्मनेपदे हशिट इति सकि अपिक्षन्त। अनुस्वारेत्त्वानेट् पेष्टा पेष्टुम् पिष्टः। घञि निष्पेषः। शुष्कचूर्णेति णमि शुष्कपेषं पिनष्टि। एवं चूर्णपेषम् रूक्षपेषम्। स्नेहनार्थादिति णमि तैलपेषं पिनष्टि। उणादौ पिषेः पिनृपिण्यौ चेत्याके पिनाकं रुद्रधनुः। पिण्याकस्तिलखलः ३६ ॥

अथ सान्तः सेट् च ॥

22. हिसु 23 तृहप् हिंसायाम्। उदित्त्वान्ने हिनस्ति जिहिंस। दिवि व्यञ्जनादेरिति दिवो लुकि सस्य दत्वे च अहिनत्। सेः स्द्धांमिति सिचो लुकि सस्य वा दत्वे च अहिनस्त्वम् अहिनत्त्वम्। हुधुट इति हेर्धौ सो धि वेति सो वा लुकि हिन्धि हिन्द्धि। हिंसिता हिंसितः। अचि हिंसः। निन्दहिंसेति णके हिंसाशीलः हिंसकः। स्न्यजसेति रे हिंस्रः। क्तेट इत्यः हिंसा। उणादौ खलिहिंसिभ्यामीनः हिंसीनः श्वापदः २८६। कृशृभिलीरे हिंसीरो हिंस्रः ४१८। हिंसेः सिम् चेति हे सिंहः ५८८ ॥

अथ हान्तः सेट् च ॥

23. तृह। तृहः श्नादितीति तृणेढि। दिवि अतृणेट्। ततर्ह तर्हिता तृहितः। तृणमिति तु भ्रूणतृणेति निपातनाण्णे तरतेः [ उणादौ १८६ ] ॥

अथात्मनेपदिषु दान्तावनिटौ च ॥

24. खिदिंप् दैन्ये। इदित्त्वादिदित इत्यात्मनेपदे खिन्ते चिखिदे। अनुस्वारेत्त्वान्नेट् खेत्ता खिन्नः। खिदिंच् दैन्ये। खिद्यते। खिदंत् परिघाते। खिन्दति ॥

25. विर्दिप् विचारणे। विन्त्ते विविदे। अनुस्वारेत्त्वान्नेट् वेत्ता। ऋह्रीति क्तयोस्तस्य वा नत्वे विन्नः विन्नवान् वित्तः वित्तवान्॥

अथ धान्तः सेट् च॥

26. ञिइन्धैपि दीप्तौ। इन्द्धे। धुटो धुटि स्वे वेति दलुकि इन्धे। जागुषेति परोक्षाया वाम् समिधां चक्रे समीधे। इन्धिता। ऐदित्त्वात् क्तयोर्नेट् औत्त्वात्सति के समिद्धः समिद्धवान्। कर्मणोऽणि भ्राष्ट्राग्नेरिति मे भ्राष्ट्रमिन्धः अग्निमिन्धः। क्विपि अग्नीत्। संपदादिक्विपि समित्। दशनेति निपातनान्नो लुकि घञि एधः। उणादौ ऋज्यजीति किति रे ईध्रं विमलम् ३८८। येन्धिभ्यामित्यस्यैधादेशे च एधः १६८॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणे श्नविकरणः पिद्रुधादिगणः संपूर्णः॥

---

अथ तनादय उविकरणा वर्णक्रमेण प्रदर्श्यन्ते । तत्रोभयपदिष्वादौ नान्ताः सप्त सेटश्च ॥

1. तनूयी विस्तारे । यित्त्वं तनादित्वज्ञापनार्थम् । ईदित्त्वादीगित इति फलवत्कर्तर्यात्मनेपदे कृग्तनादेरित्यौ च तनुते । फलवतोन्यत्र शेषादिति परस्मैपदे तनोति । वम्यविनीति योलो लुकि तन्वः तन्मः तनुवः तनुमः । तथासोस्तन्भ्यो वेति वा सिज्नयोर्लुप् न चेट् अतत अतनिष्ट अतथाः अतनिष्ठाः । तनः क्ये इति नस्य वाल्वे तायते तन्यते । तेने ततान तनिता तनितव्यम् । इवृधेति सनि वेट् तनो वेति वा दीर्घे तितांसति तितंसति । पक्षे तितनिषति । ऊदित्त्वात् क्त्वि वेट् यमिरमीति नलुकि तत्वा । इटि तनित्वा । वेट्त्वात् क्तयोर्नेट् ततः ततवान् । तन्व्यधीति णे तानः अवतानः वितानः । तिकृताविति तिकि न तिकीति दीर्घनलुकोरभावे तन्तिस्तन्तीः । क्विपि गतिकारकस्येति दीर्घे गमामिति नलुकि परीतत् । घञि वितानः संतानः एकतानः । स्त्रियां क्तौ ततिः पङ्क्तिः । यपीति नलुकि प्रतत्य वितत्य । उणादौ सुसितनितुसेर्दीर्घश्च येति वा कित्ति ते तातः पिता । ततं वाद्यविशेषः २०३ । कृधूतनीति किति सरे तसरः कौशेयसूत्रम् । तसरः सूत्रवेष्टनम् ४४० । त्रसरस्तु पट्टसूत्रमित्येके । त्रडिति त्रटि तन्त्रं प्रधानम् ४४६. ४५१ । कुगुवलीत्यये तनयः पुत्रः ३६५ । भृमृत्रित्युः तनुः ७१६ । कृसिकमीति तुनि तन्तुः ७७३ । कृपिवमीत्यूः तनूः कायः ८२९ । तनेर्डउः सन्वच्च तितउः परिवपनम् ७४८ । तनेर्ड्वक् त्वक् ८७२ । तोकम् तुगिति च तौतेः के किकि च २१. ८६९ । तण्डुल इत्यपि तण्डेरुले ४८५ ॥

2. षणूयी दाने । षः स इति से निमित्ताभावाण्णस्य ने सनुते सनोति । व्यञ्जनादेरिति वातो वृद्धौ असानीत् असनीत् । तन्भ्यो वेति सिज्नयोर्वा लुपि सनस्तत्रेति वात्वे असात असत असनिष्ट असाथाः असथाः असनिष्ठाः । सेने ससान सनिता सनितुम् । इवृधेति सनि वेट् नाम्यन्तस्थेति षत्वे सनीत्यात्वे सिषासति । पक्षे सनि षत्वभूते णिस्तोरेवेति नियमाच्च षत्वम् सिसनिषति । ऊदित्त्वात् क्त्वि वेट् आः खनीत्यात्वे सात्वा । पक्षे सनित्वा । वेट्त्वात् क्तयोर्नेट् सातः सातवान् । ये न वेत्यात्वे सायते सन्यते । तिकृताविति तिकि न तिकीति दीर्घनलुगभावे सन्तिः । तौ सन इति वात्वनलुकोः सातिः सतिः । मानिहेनीति क्तौ सातिः । उणादौ कृवापेत्युणि सानुः प्रस्थः १ ॥

3. क्षणूग् 4 क्षिणूयी हिंसायाम् । रषृवर्णादिति नस्य णत्वे क्षणुते क्षणोति चक्षणे चक्षाण । व्यञ्जनादेरिति वा वृद्धौ श्विजागृेति प्रतिषेधे अक्षणीत् । क्षणिता ।

ऊदित्त्वात् क्त्वि वेट् यमिरमीति नलुकि क्षत्वा । इटि क्षणित्वा । वेट्त्वात् क्तयोर्नेट् क्षत क्षतवान् । न तिकीति दीर्घनलुको प्रतिषेधे सामिति णत्वापवादे नस्य ने क्षणुतात् क्षन्ति । क्षिया क्तौ क्षति ॥

4 क्षिणु । रषवर्णादिति नस्य णे । गुण नेच्छन्त्येके । क्षिणुते क्षिणोति चिक्षिणे चिक्षेण क्षेणिता क्षेणितुम् । ऊदित्त्वात् क्त्वि वेट् यमिरमीति नलुकि क्षित्वा । इटि वौ व्यञ्जनादेरिति वा किर्त्वे क्षिणित्वा क्षेणित्वा । वेट्त्वात् क्तयोर्नेट् क्षित क्षितवान् । तिकृताविति तिकि न तिकीति दीर्घनलुकोरभावे सामिति णत्वापवादे नस्य ने क्षिन्ति । क्तौ क्षिति । अमु न पठन्त्येके ॥

5 ऋणूयी गतौ । रषवर्णादिति नस्य णे लघोरिति गुणे अर्णुते अर्णोति । अनात इति पूर्वस्यात्वे नेन्ते च आनृणे आनर्ण । अर्णिता अर्णितुम् । सन्यपि र इति रस्य प्रतिषेधे स्वरादेरिति नेरेव द्वित्वे अर्णिणिषति । ऊदित्त्वात् क्त्वि वेट् यमिरमीति नलुकि ऋत्वा । इटि क्त्वेति किर्त्वाभावाद्गुणे अर्णित्वा । वेट्त्वात् क्तयोर्नेट् ऋत ऋतवान् । क्तौ ऋति ॥

6 तणूयी अदने । अदाने इत्यन्ये । रषवर्णादिति नस्य णत्वे तर्णुते तर्णोति ततृणे ततर्ण तर्णिता तर्णितुम । ऊदित्त्वात् क्त्वि वेट् यमिरमीति नलुकि तृत्वा । इटि क्त्वेति किर्त्वाभावे तर्णित्वा । वेट्त्वात् क्तयोर्नेट् तृत तृतवान् । तिकृताविति तिकि न तिकीति दीर्घनलुकोरभावे सामिति णत्वापवादे नस्य ने तृन्ति । क्तौ तृति ॥

7 घृणूयी दीप्तौ । लघोरिति गुणे रषवर्णादिति नस्य णे घर्णुते घर्णोति जघृणे जघर्ण घर्णिता घर्णितुम् । ऊदित्त्वात् क्त्वि वेट् यमिरमीति नलुकि घृत्वा । इटि क्त्वेति किर्त्वाभावे घर्णित्वा । वेट्त्वात् क्तयोर्नेट् घृत घृतवान् घृतम् । तिकृताविति तिकि न तिकीति दीर्घनलुकोरभावे सामिति नस्य णापवादे ने घृन्ति । णान्तोयमित्येके । तन्मते तवर्गस्येति नस्य टे घृण्टि । नाम्युपान्त्येति के घृणा । क्तौ घृति । उणादौ नाम्युपान्त्येति किदि घृणि ६०९ ६३८ ॥ उविकरणे ऋणू तृणु घृणु धातवो गुण नेच्छन्त्येके ऋणुते ऋणोति तृणुते तृणोति घृणुते घृणोति । अकारोपान्त्यो णान्तश्चायमिति शिव । घणोति जघाण घत घतवान् । तिकि घण्टि ॥

अथात्मनेपदिनौ तान्तौ सेटौ च ॥

8 वनूयि याचने । इदित्त्वादिति इत्यात्मनेपदे वनुते । अनादेशादेरित्येत्वस्य न शसददेति प्रतिषेधे ववने । वनिता वनितुम् । ऊदित्त्वात् क्त्वि वेट् यमि-

रमीति नलुकि वत्वा । इटि वनित्वा । वेट्त्वात् क्तयोर्नेट् वतः वतवान् । णौ कगे-वन्विति ह्रस्वे अववनयति संवनयति । अनुपसर्गस्य तु ज्वलह्वलेति वा ह्रस्वे वानयति वनयति । तिक्कृताविति तिकि न तिकीति दीर्घनलुकोरभावे वन्तिः । नञ्समासे अवन्तिः राजा । क्तौ वतिः । उणादौ वनिकणीति ठे वण्ठोनभिनिविष्टः १६२। वनिवपिभ्यां णिदितीरे वानीरो वेतसः ४२१ । वनिधुरिति तु वनिपूर्वस्य तिष्ठतेः किल्यौ ७३२ । वन पन भक्तौ । वनति ॥

9. मनूयि बोधने । मनुते मेने । तन्भ्यो वेति नसिचोर्वा लुप् न चेद् अमत अमनिष्ट अमथाः अमनिष्ठाः । मनिता मनितुम् । ऊदित्त्वात् क्त्वि वेट् यमिरमीति नलुकि मत्वा । इटि मनित्वा । वेट्त्वात् क्तयोर्नेट् मतः मतवान् । मनिंच् ज्ञाने । मन्यते ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणे उविकरणो यिच-नादिगणः संपूर्णः ॥

अथ क्र्यादयः श्नाविकरणा वर्णक्रमेण प्रस्तूयन्ते। तत्रादौ

1. डुक्रींग्श् द्रव्यविनिमये। विनिमयः परिवर्तः। शित्त्वं श्नादित्वज्ञापनार्थम्। गित्त्वादीगित इति फलवत्कर्तर्यात्मनेपदे क्र्यादेरिति श्ना एषामीति तस्येत्वे क्रीणीते। फलवतोन्यत्र शेषादिति परस्मैपदे क्रीणाति। परिव्यवादित्यात्मनेपदे परिक्रीणीते विक्रीणीते अवक्रीणीते। श्नश्चेति श्न आलुकि क्रीणन्ति। संयोगादितीयि विक्रिये। नामिन इति वृद्धौ चिक्राय। णौ क्रीजीत्यात्वे क्रापयति। अनुस्वारेत्त्वादिट् क्रेता क्रेतुम्। परिक्रयणे इति वा चतुर्थ्याम् शताय परिक्रीतः। पक्षे करणे तृतीयैव शतेन परिक्रीतः। क्रीतात्करणादेरिति ङ्याम् अश्वक्रीती। य एचेति ये क्रय्यः क्रयार्थे इति निपातनादायि क्रय्या गौः। तदर्थादन्यत्र क्रेयम्। निन्द्ये व्याप्यादितीनि सोमविक्रयी। निन्द्यादन्यत्र कर्मणोण् धान्यविक्रायः। अच्चलि च क्रयः। ङ्वित्त्वात्त्रिमकि क्रीत्रिमम्। उणादौ क्रीकलीतीके क्रयिकः क्रेता ३८। कावावीति णौ क्रेणिः क्रयविशेषः ६३४॥

अथेदन्तोनिट् च॥

2. षिंग्श् बन्धने। षः स इति से सिनीते सिनाति। षोपदेशत्वान्नाम्यन्तस्थेति षे सिष्ये सिषाय। सिचि परस्माथिति वृद्धौ असैषीत्। णिस्तोरेवेति नियमात्सनि न षत्वम् सिसीषति। अनुस्वारेत्त्वान्नेट् सेता सेतुम्। सेर्ग्रासे इति क्तयोस्तस्य नत्वे सिनो ग्रासः स्वयमेव। सिनोतेरेव नत्वमिच्छन्त्येके। तन्मते सितो ग्रासः स्वयमेव। कर्मकर्तुरन्यत्र सितः पाशेन। षिंगट् बन्धने। सिनुते सिनोति॥

अथेदन्तास्त्रयोनिटश्च॥

3. प्रींग्श् तृप्तिकान्त्योः। कान्तिरभिलाषः। प्रीणीते प्रीणाति पिप्रिये पिप्राय। अनुस्वारेत्त्वान्नेट् प्रेता प्रेतुम् प्रीतः प्रीतवान्। णौ धूग्प्रीगोरिति ने प्रीणयति। नाम्युपान्त्येति के प्रियः। स्थादिभ्य इति कर्मणि के प्रियः। प्रींङ्च् प्रीतौ। प्रीयते। प्रींग्ण् तर्पणे। युजादेरिति वा णिचि प्रीणयति प्रयते प्रयति॥

4. श्रींग्श् पाके। श्रीणीते श्रीणाति शिश्रिये शिश्राय। अनुस्वारेत्त्वान्नेट् श्रेता श्रेतुम् श्रीतः श्रीतवान्। क्तौ श्रीतिः॥

5. मींग्श् हिंसायाम्। मीनीते मीनाति। अदुरुपसर्गेति णे प्रमीणाति। एकदेशविकृतस्यानन्यत्वात् प्रमीणीते। मिम्ये ममौ। यबक्ङितीति मिग्मीग इत्यात्वे प्रमाय। णौ प्रमापयति। अनुस्वारेत्त्वान्नेट् माता मास्यति। खलचलि तु मात्वम् दुर्मयः। अच्चलि च मयः प्रमयः। क्ङितीति प्रमीतः प्रमीतवान् प्रमेमीयते। मिमीगेति सनि

स्वरस्येति द्वित्वाभावे च प्रमित्सते प्रमित्सति । ग्रासुयुधीति खलपवादेने दुर्मानम् सुमानम् । उणादौ मीमसीत्युरे बाहुलकान्नात्वम् मयूर ४२७ ॥

अथोदन्तावनिट्‌ौ च ॥

6. युग्‌श् बन्धने । युनीते युनाति युयुवे युयाव । अनुस्वारेत्वादनेट् योता योतुम् युयूपति । स्वृधीति वेटि यियविषति । नीदाविति त्रटि योत्रम् । युङ् मिश्रणे। यौति यविता। युणि जुगुप्सायाम् । यावयते ॥

7. स्कुग्श् आप्रवणे । आप्रवणमुद्धरणम् । स्तम्भूस्तुम्भ्विति भा॰ भुभ स्कुनीते स्कुनाति स्कुनुते स्कुनोति । चुस्कुवे चुस्काव । अनुस्वारेत्वादनेट् स्कोता स्कुत स्कुतवान् ॥

अथोदन्तौ सेटौ च ॥

8 क्रूग्श् शब्दे । क्रूनीते क्रूनाति चुक्रुवे चुक्राव अक्रावीत् क्रविता । कि त्युवर्णादिति नेट् क्रूत॰ क्रूनवान् क्रूत्वा ॥

9 द्रूग्श् हिंसायाम् । गताविन्यन्ये । द्रूणीते द्रूणाति दुद्रुवे दुद्राव अद्रावीत् द्रविता द्रविनुम् ॥

अथ ग्रन्त सेट् च ॥

संमाहो मुष्टेर्दार्ढ्यम् । यज्ञे ग्रहः पूर्वपरिग्राहः उत्तरपरिग्राहो वेदेर्यज्ञाङ्गभूताया ग्रहणविशेषः । स्त्रियां क्तौ वेर्ग्रहादिभ्य इतीटि गृहीतिः निगृहीतिः । कृग्ग्रह इति णमि जीवग्राहं गृहीतः । हस्तार्थाद्ग्रहेति णमि हस्तेन ग्रहणं हस्तग्राहं गृह्णाति । नाम्ना ग्रहेति णमि नामानि गृहीत्वा नामग्राहम् नामानि आह्वयति । तृतीयोक्तं वेति वा समासः । उणादौ कृहस्यिर्यणौ ग्रहणिः प्रवाहिका ६३८ ॥

अथ प्र्याद्यन्तर्गणः प्वादिः प्वादेर्ह्रस्व इति ह्रस्वप्रयोजनः प्रदर्श्यते ।

तत्रोदन्तास्त्रयः सेटश्च ॥

11. पूग्श् पवने । पवनं शुद्धिः । प्वादेरिति ह्रस्वे पुनीते पुनाति । पुपुवे पुपाव पविता पवितुम् । किरयुवर्णादिति नेट् पूतः पूतवान् । नाशे पूदिवीति क्तयोस्तस्य नत्वे पूना यवाः । नाशादन्यत्र पूतं धान्यम् । पुव इतीत्रे पवित्रोऽर्हन् । ऋषिनाम्नोः करणे पवित्र ऋषिः । पवित्रं दर्भादि । हलक्रोडेति त्रटि हलसूकरयोः पोत्रं मुखमित्यर्थः । निरभेरिति घञि निष्पावः । न ख्यापूगिति प्रतिषेधात्स्वरादिति णत्वाभावेनटि प्रपवनम् परिपवनम् । णौ णेर्वेति णत्वविकल्पाभावे प्रपावनम् परिपावनम् । उणादौ लुपूञेति तृः पोता ऋत्विक् ८६३ । पुत्रादय इति त्रे निपातनात् पुत्र : ४५५ । पूङ् पवने । पवने ॥

अथ प्वाद्यन्तर्गणो ल्वादिर्ल्वादेरिति नत्वार्थः प्रदर्श्यते ॥

12. लूग्श् छेदने । प्वादेरिति ह्रस्वे लुनीते लुनाति । लुलुवे लुलाव लविता लवितुम् । सनि ग्रहगुहश्चेति नेट् लुलूषति । णौ सन्योर्जान्तस्थेति पूर्वस्योत इत्वे लिलावयिषति । णौ ङेसमानलोपे इति सन्वत्त्वे अलीलवत् । किरयुवर्णादिति नेट् ल्वादेरिति क्तक्तीनां तो नत्वे लूनः लूनवान् लूनिः । पुनृत्व इत्यके साधु लुनाति लवकः । लूधूसूखनिचरेति लूयतेऽनेन लवित्रम् । निरभेरित्यलपवादे घञि अभिलावः । उणादौ धाम्निरयाणके लवाणकः कालः ७० । धीभीरयानके लवानको दात्रम् ७१ । लुक्ने वेति वा किति ले लूनः क्षुद्रजन्तुः । लोनो वत्सः २०२ । स्वरेभ्य इत्यौ लविर्दात्रम् ६०६ । लूञिति किति नौ लूनिर्लवनः ६७९ । मनिति मनि लोम ९११. ९१६ ॥

13. धूग्श् कम्पने । प्वादित्वाद्ध्रस्वे धुनीते धुनाति । दुधुवे दुधाव । धूगौदित इति वेट् धोता धविता । धूगसुस्तोरितीटि अधावीत् । णौ धूप्रीण इति ने धिधूनयति । किरयुवर्णादिति नेट् ल्वादेरिति क्तक्तीनां तो नत्वे धूनः धूनवान् धूनिः । धूगट् कम्पने । धूनुते धूनोति । धूत् विधूनने । धुवति । धूग्ण् कम्पने । युजादित्वात् णिचि धूनयति धवते धवति ॥

अथ ऋदन्तास्त्रयः सेटश्च ॥

14. स्तॄग्श् आच्छादने। प्वादित्वाद्ध्रस्वे स्तृणीते स्तृणाति। स्कृच्छृत इति गुणे तस्तरे। णवि तस्तार। वृतो न वेति वेटो दीर्घे स्तरिता स्तरीता आस्तरितुम् आस्तरीतुम्। इट् सिजाशिषोरात्मने इति वेट् आस्तरिष्ट आस्तरीष्ट। ऋवर्णादिति मित्त्वः क्त्त्वे आस्तीर्ष्ट। आस्तरिषीष्ट आस्तीर्षीष्ट। सनीवृधेति वेट् आतिस्तरिषति आतिस्तरीषति आतिस्तीर्षति। किरत्यृवर्णश्रीति नेट् ऋल्व्यादेरिति क्तक्तवतोर्नो ने आस्तीर्णः आस्तीर्णवान् आस्तीर्णिः। णौ ङे सन्वद्भावापवादे स्मृदृत्वरेति पूर्वस्यात्वे अतस्तरत्। ऋवर्णेति घ्यणि आस्तार्यः। अयज्ञे स्त्र इत्यलपवादे घञि शङ्खप्रस्तारः। यज्ञे तु बर्हिष्प्रस्तरः। वेरशब्दे इति घञि पटस्य विस्तारः। शब्दे तु वाक्यविस्तरः। छन्दोनाम्नि विष्टारपङ्क्तिः। वृक्षासनयोर्विष्टरः। उभयत्र वेः स्त्र इति षत्वम्। अया-स्तृम्भ्यामिति करणाधारे घञि अयस्तारः। अलि घे वा स्तरो वस्त्रभेदः। उणादौ तॄस्तृतन्द्रीतीः स्तरीः शय्या ७११। गृहमेधीमानि स्तरीमा मायारः ९१८ ॥

15. कॄग्श् हिंसायाम्। प्वादेरिति ह्रस्वे कृणीते कृणाति। स्कृच्छृत इति गुणे चकरे चकार। वृतो न वेनीटो वा दीर्घे करिता करीता। सनीवृधेति वेटि चिकरिषते चिकरीषते चिकीर्षति। किरत्यृवर्णश्रीति नेट् ऋल्व्यादेरिति ने कीर्णः कीर्णवान् कीर्णिः। क्ये कीर्यते। उणादौ कृगृभिति वरटि कर्वरो व्याघ्रः। कर्वरी भूमिः ४४१। कृपृकटी-त्यडे करडो धान्यावपनम् ५८९। ह्रस्वान्तोऽयमित्येके। कॄन् विक्षेपे। किरति ॥

16. वॄग्श् वरणे। प्वादेरिति ह्रस्वे वृणीते वृणाति। स्कृच्छृत इति गुणे ववरे ववरः। वृतो न वेनीटो वा दीर्घे वरिता वरीता। किरत्यृवर्णश्रीति नेट् ऋल्व्यादेरिति ने वूर्णः वूर्णवान् वूर्णिः। सनीवृधेति वेटि विवरिषति विवरीषति वुवूर्षति। उणादौ ऋकृत्रिवृगे वरणः १९६। तस्य भार्या वरुणेन्द्रेति ङ्यामानि चान्ते वरुणानी। ह्रस्वान्तोऽयमिति नन्दी ॥

अथ परस्मैपदिनः षडन्तोनिट् च ॥

17. ज्यांश् हानौ। वयोहानावित्येके। ज्याव्यधेति परस्मैपदे ज्याव्यध इति य्वृति दीर्घमेव इति दीर्घे प्वादेरिति ह्रस्वे जिनाति। ज्याव्येव्यधीति पूर्वस्येत्वे जिज्यौ। धवि घानिटश्चेति वेटि जिज्यिथ जिज्याथ। अनुनासिके च्छ्वोरिट् ज्याता ज्यातुम् जीत्वा। ऋल्व्यादेरिति ने जीनः जीनवान्। स्त्रियां क्तिः च्छन्दस्येके जीतिः। ग्लाज्यहाभ्यो निः ज्यानिः। भगवदोर्भाग्ये ट इति टे ब्रह्मज्यः। ज्यश्च यपीति य्वृद्भावे प्रज्याय। जिन इति तु जीयतेर्जिनेर्वा ने जयतेः [ उणादौ २६१ ] ॥

अथेदन्ताश्चत्वारो णिदश्च ॥

18 रींश् गतिरेषणयोः । रेषण हिंसा । प्वादेरिति ह्रस्वे रिणाति । रिराय । योनेकस्वरस्येति यत्वस्य बहिरङ्गत्वेन भ्वादेरिति दीर्घमन्तरङ्गं प्रत्यसिद्धत्वात्पूर्वस्य दीर्घाभावे रियतु रियुः । णावर्तिरीति पौ पुस्पात्रिति गुणे रेपयति । अनुस्वारेत्त्वान्नेट् रेता रेतुम् । ऋल्वादेरिति तो ने रीण रीणवान् रीणि । रीङ्च् स्रवणे । रीयते ॥

19 लींश् श्लेषणे । प्वादेरिति ह्रस्वे लिनाति लिलाय । णौ लीङ्लिन इत्यात्मनेपदे आत्वे च जगाभिरालापयते श्येनो वर्तिकामुल्लापयते । यबन्डिति लीङ्लिन इति नात्वे विलाय विलीय । अनुस्वारेत्त्वान्नेट् विलाता विलेता । लो ल इति ले विलालयति । पक्षेर्तिरीति पौ विलापयति । लिय इति णे घून विलीनयति । पक्षे नामिन इति वृद्धौ घत विलाययति । ऋल्वादेरिति तो ने लीन लीनवान् लीनि । लीङ्च श्लेषणे । लीयते । लीण् द्रवीकरणे । युजादित्वाद्वा णिचि घून विलीनयति विलयति ॥

20 व्लींश् वरणे । गतावित्यन्ये । प्वादेरिति ह्रस्वे व्लिनाति विव्लाय । याप-यादे संयोगादिनीयि विव्लियतु विव्लियुः । अनुस्वारेत्त्वान्नेट् व्लेता व्लेतुम् । ऋल्वादे-रिति तो ने व्लीन व्लीनवान् व्लीनि । णावार्तरीति पौ पुस्पाविति गुणे व्लेपयति ॥

21 ल्वींश् गतौ । प्वादेरिति ह्रस्वे ल्विनाति लिल्वाय । यापयादे संयोगादितीयि लिल्वियतु । अनुस्वारेत्त्वान्नेट् ल्वेता ल्वेतुम् । ऋल्वादेरिति तो ने ल्वीन ल्वीनवान् ल्वीनि । प्वादित्वमस्य नेच्छन्त्येके । तन्मते ह्रस्वाभावे ल्वीनाति । ऋल्वादेरिति नत्वाभावे ल्वीत ल्वीतवान् ल्वीति । ल्पींश् श्लेषणे । इत्यप्येके पठन्ति । प्वादेरिति ह्रस्वे ल्पिनाति । ऋल्वादेरिति तो ने ल्पीन ल्पीनवान् ल्पीनि ॥

अथ ऋदन्ता एकादश सेटश्च ॥

22 कॄ 23 मॄ 24 शॄश् हिंसायाम् । प्वादेरिति ह्रस्वे कृणाति । चकार । स्कृच्छृत इति गुणे चकरतु चकरुः । वृतो न वेतीटो वा दीर्घे करिता करीता । किल्त्वृवर्णभीति नेट् ऋल्वादेरिति तो ने कीर्ण कीर्णवान् कीर्णि । दृवृधेति सनि वेट् चिकरिषति चिकरीषति चिकीर्षति । उभयपदिष्वधीतोप्ययं फलवत्कर्तरि परस्मैपदार्थमिह पठितः । कॄत् विक्षेपे । किरति ॥

23 मॄ । प्वादेरिति ह्रस्वे मृणाति । ममार । स्कृच्छृत इति गुणे ममरतु । वृतो न वेतीटो वा दीर्घे मरिता मरीता । किल्त्वृवर्णभीति नेट् ऋल्वादेरिति तो ने मूर्ण मूर्णवान् मूर्णि । उणादौ श्र उत् मरुः ८८९ ॥

24. शॄ । प्वादेरिति ह्रस्वे शृणाति । क्ये शीर्यते । विशशार । ऋः शॄदॄपः विशश्रतुः विशश्रुः । पक्षे स्कृच्छ्रत इति गुणे विशशरतुः विशशरुः । वृत इतीटो वा दीर्घे विशरिता विशरीता । किल्यृवर्णश्चेति नेट् वत्स्वादेरिति तो ने शीर्णः शीर्णवान् शीर्णिः । अचि शरः । शॄवन्देरित्यारौ शरणशीलः शरारुः । शृकमेत्युकणि विशारुकः । पुंनाम्नीति घे शृणन्ति तेन शरः । श्रो वायुवर्णेति घञि शारो वायुर्वर्णश्च । नीशारो हिमानिलापहं वस्त्रम् ।

नीशारैश्चाकृतनीशारः प्रायेण शिशिरे कृशः ॥

उणादौ किरेति किरः धातोश्च सरूपद्वित्वम् शिशिरः १० । शॄपॄभ्यामीक इत्ये रे नादौ शरीरिकः क्रिमिः । शरीरीका माङ्गल्याभरणम् ४७ । शृङ्गेति गे निपातनात् शृङ्गं विषाणम् । शार्ङ्गः पक्षी ९६ । पतितमीत्यङ्गे शरङ्गः ९८ । अनिश्रित्याटे शराटः शकुन्तः १४५ । शृङ्गाट इति तु कपाटेत्याटे निपातनात् भयते १४८ । मृजूभित्यते शरड आयुधम् १६७ । जृकृभित्यण्डे शरण्डः १७३ । तृकृभिण्यणे शरण गृहम् १८७ । परात् श्रो डिदिति वधे परश्वधः २५५ । कृशृसृभ्य ऊर् चान्तस्येति पे शूर्पो धान्यपवनभाण्डम् २९८ । कृशृभित्यभे शरभः ३२९ । अर्तीरीति मे शर्म सुखम् ३३८ । धामाजीत्यन्ये शरण्यस्त्राता ३७९ । कुशृभितीरे शरीरम् ४१८ । श्वशुरकुकुन्दुरेत्युरे निपातनात् शर्कुरस्तरुणः ४२६ । किशृभ्यः करः शर्करः शर्करा ४३८ । कृशृभिति वरटि शर्वरो हरः । शर्वरी रात्रिः ४४१ । श्रो नोन्तो ह्रस्वश्चेति खले शृङ्खला ४९८ । लटिखटीति घे शर्वो हरः ५०५ । शृणातेराशः शराशः ५३० । कृजिभिति कितीषे शिरीषः ५५४ । गम्यपाम्येति किः शिरिः शिशिरीषः ६०१ । कुशृकुटीति वा शिरिः शारिर्द्यूतोपकरण पक्षिपर्यायं शारिका च । शारिर्हिंस्रा ६११ । कत्रृशृभिति किति णौ शीर्षिः रोगः ६३८ । भीणाश्रिति मौ शार्मम्गः ६८७ । मुम्नीति रौ निपातनात् शशरिरातिः [ ६९८ ] । कृशृभिति त्रिति थौ शार्शिभिरः ७०५ । भूमृतित्युः शरुः शरो हिंस्रश्च ७१६ । उरर्णेति रे दाव्ये त्रिं शरव्यं वेध्यम् । किशः श्रो णिदित्यु किशारुर्धान्यशूकम् ७२८ । कृशृद्रुमृभ्यादिभ्यो णे लश्च शालुः कषायः ७२७ । परादभ्यां शृणातिभ्यां डित् परशुः ७४२ । शिमुर्गिति तु शिमुर्शीरनि रौ निपातनात् शिशोतेः ८११ । वदोर्मन्नित्यपि चान्तीतो देर्स्मनिति शीतः ८५१ । शृक्रित्यादि शरन् ८९४ । मनिति मनि शर्म सुखम् ९११ । सिविश्रीति किस्यमि शिरः ९५१ ॥

25. पॄश् पालनपूरणयोः । प्वादेरिति ह्रस्वे पृणाति । पपार । ऋःशॄदॄप्रः निपप्रतुः निपप्रुः । पक्षे स्कृच्छृत इति गुणे निपपरतुः निपपरुः । वृतो न वेतीटो वा दीर्घे परिता परीता । किल्यृवर्णभीति नेट् रल्वादेरित्यत्र प्रो वर्जनात्तो नत्वाभावे पूर्तः पूर्तवान् पूर्तिः । णौ दान्तशान्तेति के वा निपातनमस्यापीत्येके पूर्णः पारितः । अस्मादेव निपातनात्पूरेर्णौ क्ते पूर्णः पूरितः । ण्यभावे तु पूर्णः । युवर्णेत्यलि परः । उणादौ पॄपलिभ्यां टित् पिप् च पूर्वस्य पिप्परी वृक्षजातिः ११ । किचेति किदः सरूपद्वित्वं च पुर्पुरः फेनः १० । इणुर्विशीति णे पर्णम् १८२ । कॄगॄमिति किल्यणे पुरणः समुद्रः १८८ । भापेति पे पुवः २९६ । सपॄमयीत्यमे परमः ३४७ । ऋजिश्रिति कितीषे पुरीषम् ५५४ । विदिपॄभ्यामिति किल्युषे पुरुषः ५५८ । पॄकेति किदुः पुरुर्महान् राजा च ७२१ । ज्ञामदीति वनि पर्व ग्रन्थिः ९०४ । रुधर्ती-त्युसि परुः पर्व ९९७ । गॄपॄदुर्वीति क्विपि पूः पुरी ९४३ ॥

26 बॄश् भरणे । वरणे इत्यन्ये । ओष्ठ्यादिः । प्वादेरिति ह्रस्वे बृणाति । बबार । स्कृच्छृत इति गुणे बबरतुः बबरुः । वृतो न वेतीटो वा दीर्घे बरिता बरीता । इवृधेति सनि वेट् बिबारिषति बिबरीषति । नामिनोनिड्डिति सनः कित्वे ओष्ठ्यादित्युरि बुबूर्षति । किल्यृवर्णभीति नेट् रल्वादेरिति तो ने बूर्णः बूर्णवान् बूर्णिः । उणादौ ऋतटिदित्यः सरूपद्वित्वं च बर्बरो म्लेच्छः । बर्बरी कुञ्चितः केशः ९ । बृधृमिति नसौ वर्णसिर्भूमिः ७०९ ॥

27. भॄश् भर्जने च । भर्जनं पाकः । चकाराद्भरणे । भर्त्सने इत्यन्ये । प्वादेरिति ह्रस्वे भृणाति । बभार । वृतो न वेतीटो वा दीर्घे भरिता भरीता । इवृधेति सनि वेट् बिभारिषति बिभरीषति बुभूर्षति । किल्यृवर्णभीति नेट् रल्वादेरिति तो ने भूर्णः भूर्णवान् भूर्णिः । उणादौ ऋतटिदित्यः सरूपद्वित्वं च भर्भरदण्डवान् । भर्भरी श्रीः ९ । कित्त्व भुर्भुरः सचयः १० ॥

28. दॄश् विदारणे । भये इत्यन्ये । प्वादेरिति ह्रस्वे दृणाति । ददार । ऋःशॄदॄप्रः दद्रतुः दद्रुः । पक्षे स्कृच्छृत इति गुणे विददरतुः विददरुः । णौ ङे स्मृदृत्वरेति पूर्वस्य सन्वद्भावापवादेत्वे अददरत् । वृतो न वेतीटो वा दीर्घे दरिता दरीता । किल्यृवर्णभीति नेट् रल्वादेरिति तो ने दीर्णः दीर्णवान् दीर्णिः । अचि दरः । गौरादित्वाङ् ङ्याम् दरी । उणादौ कृवापाजीत्युणि दारु काष्ठं भव्यं च १ । ऋतटिदित्यः स्वरूपद्वित्वं च दर्दरो वाद्यविशेषः । दर्दरी सस्यलुण्टिः ९ । दृकॄन्नित्यके दरको भीरुः २७ । जॄदॄभ्रीति के द्वित्वे रे चादौ दर्दरीको वादित्रविशेषः ४७ । दुरो द्रः कूट्श्च दुर् च

दुर्दुरूटो दुर्मुखः । चकारादुटे दुर्दुरूटोदेशकालवादी १९६ । णौ ऋकृन्नित्युणे दारुण उग्रः १९६ । श्वशुरेत्युरे निपातनात् दर्दुरो मण्डूको मेघश्च ४२६ । लटिखटीति वे दर्वी हिंस्रः । दर्वा जनपदः ५०६ । स्वरेभ्य इः दरिर्महाभिद्रा ६०६ । दॄपॄभ्यो विः दर्विस्तर्दूः ७०४ । दॄदॄभ्यां दूः दर्दूः कुष्ठभेदः ८४६ । शॄदॄभसेरद् दरद् क्षत्रियः । दरदो जनपदः ८९४ । दरश्चेषदर्थेव्ययम् । प्राकृते दरेत्यर्धाल्पे । स एष संस्कृते कविभिर्भ्रान्त्या प्रयुक्तः ।

दरदलितहरिद्रापिञ्जराण्यङ्कानि ॥

द्रौ ह्रस्वश्चेति सति दृषच्छिला ८९८ । दॄ भये । दरति । णौ घटादित्वाद्ध्रस्वे दरयति । दृणातेर्दारयति ॥

29. जॄश् वयोहानौ । प्वादेरिति ह्रस्वे जृणाति । जजार । स्कृच्छृत इति गुणे जजरतुः जजरुः । वृतो न वेतीटो वा दीर्घे जरिता जरीता । क्त्यिवृर्णश्चेति नेट् ऋल्वादेरिति तो ने जीर्णः जीर्णवान् जीर्णिः । क्त्वि जॄव्रश्च इतीटि जरित्वा जरीत्वा । जॄष् जरसि । जीर्यति । षित्त्वादङि जरा । जॄण् वयोहानौ । युजादेरिति वा णिचि जारयति जरति ॥

30. नॄश् नये । प्वादेरिति ह्रस्वे नृणाति । ननार । स्कृच्छृत इति गुणे ननरतुः ननरुः । क्ये नीर्यते । वृतो न वेतीटो वा दीर्घे नरिता नरीता । क्त्यिवृर्णश्चेति नेट् ऋल्वादेरिति तो ने नीर्णः नीर्णवान् नीर्णिः । अचि नरः । स्त्रियां नारीसखीति निपातनाद् ङ्याम् नारी । णौ घटादित्वाद्ध्रस्वे नरयति ॥

31. गॄश् शब्दे । प्वादेरिति ह्रस्वे गृणाति । जगार । स्कृच्छृत इति गुणे जगरतुः जगरुः । वृतो न वेतीटो वा दीर्घे गरिता गरीता । क्त्यिवृर्णश्चेति नेट् ऋल्वादेरिति तो ने गीर्णः गीर्णवान् गीर्णिः । युवर्णेत्यलि गरः । उणादौ कृष भृश वृ नेत्युः गुरुः ७३४ । गॄत् निगरणे । गिरति ॥

32. ऋश् गतौ । प्वादेरिति ह्रस्वे ऋणाति । क्ये ईर्यते । आर आरतुः । वृतो न वेतीटो वा दीर्घे अरिता अरीता । क्त्यिवृर्णश्चेति नेट् ऋल्वादेरिति तो ने समीर्णः समीर्णवान् समीर्णिः । इवृधेति सनि वेट् अरिरिषति अरिरीषति । इडभावपक्षे स्वरादेर्दीर्घत्वे सनो द्वित्वे पूर्वस्येत्वे द्वयोः षत्वे च ईर्षिषति ॥ नॄत् प्वादिः २२ । स्वादिः २१ । प्वादित्वादिश्च पॄत् पालनः संपूर्ण इत्यर्थः ॥

अथ परस्मैपदिष्वेवादन्त्योनिट् च ॥

33. ज्ञांश् अवबोधने । जा ज्ञेति जादेशे जानाति । फलवत्कर्तरि सोनुपसर्गादित्यात्मनेपदे धर्म जानीते । पदान्तरगम्ये वा स्वां गां जानीते जानाति वा ।

उपसर्गास्तु शेषादिति परस्मैपदे अवजानासि माम् । निह्नवे ज्ञः शतमपजानीते । संप्रतेरस्मृतौ समो ज्ञ इति व्याप्ये वा तृतीयायाम् मात्रा संजानीते मातरं संजानीते नित्यं शब्दं प्रतिजानीते । अननोः सनः धर्मं जिज्ञासते । अनोस्तु पुत्रमनुजिज्ञासति पाठाय । कर्मण्यसति ज्ञः अज्ञाने इति करणे पष्ठ्याम् सर्पिषो जानीते सर्पिषा करणभूतेन प्रवर्तते इत्यर्थः । जज्ञे जज्ञौ । संयोगादेर्वाशिष्येः ज्ञेयात् ज्ञायात् । अक्ङिति तु ज्ञासीष्ट । अनुस्वारेत्त्वान्नेट् ज्ञाता ज्ञातुम् । ज्ञानेच्छेति सति क्ते ज्ञातः । णौ मारणतोषणेति ह्रस्वे संज्ञपयति पशुम् विज्ञपयति गुरुम् ज्ञपयति शास्त्रम् । अन्यत्र ज्ञापयति । इवृधेति सनि वेट् जिज्ञपयिषति । पक्षे ज्ञप्याप इति ज्ञीप् न च द्विः ज्ञीप्सति । नाम्युपान्त्येति के ज्ञः । उपसर्गादात इति डे प्रज्ञः । प्रज्ञाद्यणि प्राज्ञः । प्राज्ञश्चेति डे पथिप्रज्ञः । णौ दान्तेति क्ते वा निपातनात् संज्ञप्तः पशुः । पक्षे सेट्क्तयोरिति णेर्लुकि संज्ञपितः । उपसर्गादित्याङि प्रज्ञा उपज्ञा । उणादौ ज्ञुशायजीति तौ ज्ञातिर्बन्धुः ६४६ । ज्ञायते इति वा स्त्रियां क्तौ ज्ञातिः । ज्ञानं ज्ञातिरिति तु नास्ति प्रसिद्धेनापठितत्वात् ॥

अथेदन्तोनिट् च ॥

34. क्षिप्श् हिंसायाम् । क्षिणाति चिक्षाय । संयोगादिति यापवादे इयि निक्षियतुः चिक्षियुः । अनुस्वारेत्त्वान्नेट् क्षेता क्षेतुम् । सानुबन्धत्वात् क्षेः क्षी चेति क्तयोस्तस्य नत्वाभावे क्ष्यादेशाभावे च क्षितः क्षितवान् । षित्त्वादङि क्षिया । श्वादिभ्य इति क्तौ क्षितिः । दीर्घान्तोयमित्येके । क्षीणाति क्षीतः क्षीतवान् । क्षि क्षये । क्षयति । क्षिं निवासगत्योः । क्षियति ॥

अथेदन्तावनिटौ च ॥

35. व्रींश् वरणे । व्रीणाति । प्वादिरयमित्येके । तन्मते प्वादेरिति ह्रस्वे व्रिणाति । विव्राय । यापवादे संयोगादितीयि विव्रियतुः विव्रियुः । अनुस्वारेत्त्वान्नेट् व्रेता व्रेतुम् व्रीतः व्रीतवान् व्रीतिः । उणादौ व्रियो हिक् व्रीहिः ७१० ॥

36. भ्रींश् भरणे । भये इत्यन्ये । भ्रीणाति । प्वादिरयमित्येके । तन्मते प्वादेरिति ह्रस्वे भ्रिणाति । बिभाय । यापवादे संयोगादितीयि बिभ्रियतुः बिभ्रियुः । अनुस्वारेत्त्वान्नेट् भ्रेता भ्रेतुम् भ्रीतः भ्रीतवान् भ्रीतिः । युवर्णेत्यलि भ्रयः ॥

अथ ठान्तः सेट् च ॥

37. हेठश् भूतप्रादुर्भावे । भूतप्रादुर्भावोतिक्रान्तोत्पत्तिः । तवर्गस्येति नस्य णत्वे हेठ्णाति । व्यञ्जनाच्छ्नेरानः हेठान । जिहेठ हेठिता हेठितुम् हेठितः । हेठि विबाधायाम् । हेठते ॥

अथ डान्तः सेट् न ॥

38. मृडश् सुखने । तवर्गस्येति नो णे मृड्णाति । व्यञ्जनादिति आद्योऽने मृडान । ममर्ड मर्डिता मृडितः । क्षुधक्लिशेति क्त्वः कित्त्वे मृडित्वा । नाम्युपान्त्येति के मृडः । उणादौ ऋच्यर्जीति किति के मृडीकः सुरभूत् ४८ । मृडत् सुखने । मृडति ॥

अथ थान्ताश्चत्वारः सेटश्च ॥

39. श्रन्थश् मोचनप्रतिहर्षयोः । नो व्यञ्जनस्येति नलुकि श्रथ्नाति श्रथान । कर्मकर्तर्येकधातावेति ञिक्यात्मनेपदेषु प्राप्तेषु किरादित्वाद्भूपार्थेति क्यञ्योरभावे श्रथीते माला स्वयमेव अश्रन्थिष्ट माला स्वयमेव । शश्रन्थ । वा श्रन्थेत्यत एत्वे द्वित्वाभावे नो लुकि च श्रेथतुः श्रेथुः श्रेथिथ । पक्षे शश्रन्थतुः शश्रन्थुः । स्क्रसृवृभृस्तुद्रुस्रुश्रुवोऽनिटीति शश्रन्थिथ । श्रन्थिता श्रन्थितुम् श्रथितः श्रथितवान् । दशनावोदेति निपातनान्नलुकि घञि प्रश्रथः हिमश्रथः । णिवेत्त्वास्यने श्रन्थना । ऋत्तृषेति क्त्वो वा कित्त्वे श्रथित्वा श्रन्थित्वा । श्रथुङ् शैथिल्ये । श्रन्थते । श्रन्थण् संदर्भे । युजादेरिति वा णिचि श्रन्थयति श्रन्थति ॥

40. मन्थश् विलोडने । मथ्नाति । हौ मथान । ममन्थ मन्थिता मन्थितुम् मथितः मथितवान् । ऋत्तृषेति क्त्वो वा कित्त्वे मथित्वा मन्थित्वा । घञि मन्थः । उणादौ संस्तुस्तृगमिमन्थेरानः मन्थानः खजकः २७६ । मन्थ हिंसासंक्लेशयोः । मन्थति ॥

41. ग्रन्थश् संदर्भे । संदर्भो बन्धनम् । ग्रथ्नाति । हौ ग्रथान । कर्मकर्तर्येकधातावेति ञिक्यात्मनेपदेषु प्राप्तेषु भूषार्थेति क्यञ्योरभावे ग्रथीते माला स्वयमेव अग्रन्थिष्ट माला स्वयमेव । जग्रन्थ । वा श्रन्थेत्यत एत्वे द्वित्वाभावे नो लुकि च ग्रेथतुः ग्रेथुः । स्क्रसृवृभृस्तुद्रुस्रुश्रुवोऽनिटीति ग्रेथिथ । पक्षे जग्रन्थतुः जग्रन्थुः जग्रन्थिथ । ग्रन्थिता ग्रन्थितुम् ग्रथितः ग्रथितवान् । ऋत्तृषेति क्त्वो वा कित्त्वे ग्रथित्वा ग्रन्थित्वा । घञि ग्रन्थः । उणादौ पदिपठीति इः ग्रन्थिः पर्व ६०७ । ग्रथुङ् कौटिल्ये । ग्रन्थते । ग्रन्थण् संदर्भे । युजादेरिति वा णिचि ग्रन्थयति ग्रन्थति ॥

42. कुन्थश् संक्लेशे । शेषणे इत्यन्ये । कुथ्नाति । हौ कुथान । चुकुन्थ कुन्थिता कुन्थितुम् कुथितः कुथितवान् । ऋत्तृषेति क्त्वो वा कित्त्वे कुथित्वा कुन्थित्वा । घञि कुन्थः । स्यादिस्वात्के कुथ्यते इति कुथः कुथा कुथं वा वर्णकम्बलः । क्तेट इत्यः कुन्था । उणादौ भृमृतित्युः कुन्थुः सूक्ष्मजन्तुः

७१६ । ते लुग्वेत्युत्तरपदलुकि कुन्थुदयापरः कुन्थुर्भगवांस्तीर्थंकरः । कुथु हिंसासङ्क्लेशयोः । उदित्त्वान्ने कुन्थति कुन्थने ॥

अथ दान्तः सेट् च ॥

43. मृदश् क्षोदे । मृद्नाति । हौ मृदान । ममर्द मर्दिता मृदितः । अजातेः शीले इति णिनि नगरमर्दी प्राकारमर्दी । क्षुधक्लिशेति क्तः कित्त्वे मृदित्वा । कृत्संपदेति कर्मणि क्विपि मृद् । उणादौ मृदेर्वोन्तश्च वेलीके मृद्वीका मृद्वीका च द्राक्षा ४९ । मृयुन्दीति किदरे मृदरो व्याधिः ३९९ । मृदिकन्दीत्यले मर्दलो मुरजः ४६९ ॥

अथ धान्तौ ॥

44. गुधश् रोषे । गुध्नाति । हौ गुधान । जुगोध गोधिता गोधितुम् गुधितः । क्षुधक्लिशेति क्तः कित्त्वे गुधित्वा । वौ व्यञ्जनादेरिति सनो वा कित्त्वे जुगुधिषति जुगोधिषति । भिदाद्यङि गोधा । उणादौ कुथिगुधेरूमः गोधूमः ३९३ । गुधच् परिवेष्टने । गुध्यति ॥

45. बन्धंश् बन्धने । बध्नाति । हौ बधान । बबन्ध । संयोगान्तत्वादिन्ध्यसंयोगेति कित्त्वाभावे बबन्धतुः बबन्धुः । अनुस्वारेत्त्वान्नेट् गडदबादेरिति बस्य भे संभन्त्स्यति । संबन्द्धा बद्धः । बन्धेर्नाम्नीति णमि कुक्कुटीबन्धं बद्धः । आधाराद् हस्तबन्धं बद्धः । उणादौ दृकृनिर्त्यके बन्धकश्चारकपालः २७ । गौरादित्वाङ् ङ्याम् बन्धकी पांसुला । मृमनीत्यूके बन्धूकः ९८। बन्धेरिति कित्युटे बधूटी १९७ । दिननमेति ने निपातनात् ब्रध्नो रविः २६८ । शुषीषीति किंतीरे बधिरः ४१६ । भृमृत्रिस्युः बन्धुः ७१६ ॥

अथ भान्तास्त्रयः सेटश्च ॥

46. क्षुभश् संचलने । क्षुभ्रादीनामिति णत्वाभावे क्षुभ्नाति क्षुभ्नीतः क्षुभ्नन्ति । हौ क्षुभाण । चुक्षोभ क्षोभिता अक्षोभीत् । क्षुब्धविरिब्धेति क्ते निपातनान्नेट् क्षुब्धो मन्थश्चेत् । क्षुभितोन्यः । क्षुभि संचलने । क्षोभते । क्षुभच् संचलने । क्षुभ्यति । पुष्याद्यङि अक्षुभत् ॥

47. णभ 48 तुभश् हिंसायाम् । पाठे इति णो ने नभ्नाति । अदुरुपसर्गेति नो णे प्रणभ्नाति । हौ नभान । ननाभ । अनादेशादेरित्यत एत्वे द्वित्वाभावे च नेभतुः नेभुः । नभिता नभितः ॥

48. तुभ । तुभ्नाति तुतोभ तुतुभतुः तुतुभुः तोभिता तुभितः । णभि तुभि हिंसायाम् । नभते तोभते । णभ तुभच् हिंसायाम् । नभ्यति तुभ्यति ॥

अथ वान्तः सेट् च ॥

49. खवश् हेठश्च । यथा हेठश् भूतप्रादुर्भावे तथायमपि वर्णक्रमानुरोधेन तु तत्रैव न पठितः । अनुनासिके चेति व ऊटि ऊटेत्यत औत्वे खौनाति । ऊटं य्वोरिति वलुकं न नेच्छन्त्येके । तन्मते खव्नाति । णौ खवान । चखाव खविता खवितुम् खवित्वा खवितः । क्विपि खौः । नान्तोऽयमित्येके । नान्तं धात्वन्तरमित्यन्ये । तन्मते तवर्गस्येति नो ञत्वे खञ्नाति । णौ खनान । खनितः खनितवान् खनितुम् ॥

अथ शान्तौ सेटौ च ॥

50. क्लिशौश् विबाधने । तवर्गस्येति नो ञत्वे न शादित्यभावे क्लिश्नाति । णौ क्लिशान । चिक्लेश । औदित्वादिट् क्लेष्टा क्लेशिता । क्त्वक्तवतु पूङ्क्लिशिभ्य इति वेटि क्लिष्टः क्लिशितः क्लिष्टवान् क्लिशितवान् क्लिष्ट्वा । धौ व्यञ्जनादेरिति विकल्पाभावे क्षुधक्लिशेति कित्त्वे क्लिशित्वा । उणादौ क्लिशः के चेति शे केशः ५३० । क्लिशिन् उपतापे । क्लिश्यते । क्लिश्यतीति त्वात्मनेपदस्यानित्यत्वज्ञापनम् ॥

51. अशश् भोजने । अश्नाति । णौ अशान । आश अशिता अशितः । भावे नाशितादिति निर्देशाद्गत्यर्थादपि वर्तमाने क्ते दीर्घे च आङ्पूर्वादनियमाशितगर्भिणो वा क्ते आशितः तृप्तः । वेत्यर्थादिति निपातनाद्गमभावे वसुर्न वेट् आशीत् अनाश्वान् । भुजिपत्यीति कर्मण्यनटि अशनम् । क्षुधि क्षुत्पूर्वादिति निपातनात् अशनायति प्रभुः । क्षुधोऽन्यत्र अशनीयति दामम् । उणादौ इष्यशीति सवनि अश्वा निवृत्तिपक्षे वर्म ७७ । आशितीति तु नङ्शस्यब्दीति सामर्थ्यात् ६१२ । अशीति प्याशौ । अश्नुते ॥

माम्युपान्त्येति के विषम् । विषू सेचने । वेषति । विषूकी व्याप्तौ । वेविष्टे वेवेष्टि अविषत् ॥

54. पुष 55 क्षुपञ् स्नेहसेचनपूरणेषु । पुष्णाति । हौ पुषाण । पुपोष पोषिता पुषितः । कुत्संपदेति क्विपि विप्रुट् । उणादौ निघृषीति किति ष्वे पुष्वा मिथुक्तिः ५११ ॥

55. क्षुप । क्षुष्णाति । हौ क्षुषाण । क्षोषिता क्षुषितः । क्षुषू क्षुषू दाहे । क्षोषति क्षोषति । क्षुषूच् दाहे । क्षुष्यति ॥

56. मुषञ् स्तेये । मुष्णाति । हौ मुषाण । मुमोष मोषिता मुषितः । रुद-विदेति क्त्वासनोः कित्त्वे मुषित्वा मुमुषिषति । उणादौ विनिपुषीति किति के मुष्कः पेलम् २२ । मुषेर्दीर्घश्चेतीके मूषिकः ४३ । अजादित्वादापि मूषिका ॥

57. पुषञ् पुष्टौ । पुष्णाति । हौ पुषाण । पुपोष पोषिता । पुष पुष्टौ । पोषति । पुषंच् पुष्टौ । पुष्यति पोष्टा ॥

58. कुषञ् निष्कर्षे । निष्कर्षो बहिष्कर्षणम् । कुष्णाति । कर्मकर्तरि कुषिरञ्जेरिति वा परस्मैपदे श्ये च कुष्यति पादः स्वयमेव । पक्षे एकधातावेति स्यात्मनेपदयोः कुष्यते पादः स्वयमेव । हौ कुषाण । चुकोष कोषिता । यौ व्यञ्जनादेरिति सनो वा कित्त्वे चुकुषिषति चुकोषिषति । क्षुधक्लिशेति क्त्वः कित्त्वे कुषित्वा । निरः परान्निष्कुष इति वेट् हशिट इति सकि निरकुक्षत् । पक्षे सिचि निरकोषीत् । सनि निश्चुकुक्षति । उपान्त्ये इत्यत्र कित्त्वम् निश्चुकुषिषति । निश्चुकोषिषति निष्कोष्टा निष्कोषिता । क्तयोरितीड्वि निष्कुषितः निष्कुषितवान् । उणादौ कुषेः किदितीतके कुषीतक ऋषिः ८० । कुषेर्येति वा किति ठे कोष्ठः कुष्ठम् १६४ । प्रकोष्ठो दोषः । श्रुषिचुपीति सिकि कुक्षिः ७०७ । सिविकुटीति कित्याकी कुषाकुरग्निः ७६२ ॥

अथ सान्तः सेट् च ॥

59. भ्रसूञ् उञ्छे । भ्रस्नाति । हौ भ्रसान । बभास भ्रसिता भ्रसितुम् । ऊदित्वात् क्त्वि वेट् भ्रस्त्वा भ्रसित्वा । वेट्त्वात् क्तयोर्नेट् भ्रस्तः भ्रस्तवान् । भ्रसण् उत्क्षेपे । भासयति ॥

अथात्मनेपदी ऋदन्तः सेट् च ॥

60. वृङ्श् संभक्तौ । संभक्तिः सेवा । इङित इत्यात्मनेपदे श्नामीतीत्वे वृणीते । ववे । वृतो न वेतीटो वा दीर्घे वरिता वरीता । इट् सिजाशिषोरिति वेटि

अवारिष्ट अवरीष्ट । पक्षे ऋवर्णादिति सिचः कित्त्वे अवृत । वरिषीष्ट । पक्षे वृषीष्ट । इवृधेति सनि वेट् विवारिषते विवरीषते । पक्षे नामिनोनिडिति सनः कित्त्वे वुवूर्षते । किल्यूवर्णश्रीति नेट् वृतः वृतवान् वृत्वा । वर्योपसर्येति ये निपातनात् वर्यमुपेयम् । वार्यमन्यत् । भृवृजीति खे पतिंवरा कन्या । वृङ्भिक्षीति टाके वराकः वराकी । युवर्णेत्यलि वरः । उणादौ जॄपॄद्रितीके द्वित्वे आदौ च रे वर्वरीका सरस्वती ४७ । वृङ् एण्यः वरेण्यः ३८२ । वृग्ट् वरणे । वृणुते वृणोति । वृगण् आवरणे । युजादेरिति वा णिचि वारयति । पक्षे वरते वरति ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणे भ्वादिकरणःशित्स्वयादिगणः संपूर्णः ॥

———

अथ णितश्चुरादयो वर्णक्रमेण प्रस्तूयन्ते । तत्रादौ

1. चुरण् स्तेये । णित्वं चुरादित्वज्ञापनार्थम् । स्वार्थिकत्वेनान्तरङ्गत्वाद्विशेषविधानाच्च कर्त्रादिकारकापेक्षत्वेन बहिरङ्गेभ्यः सामान्यविहितेभ्यश्च तिवादिभ्यः प्रागेव चुरादिभ्य इति स्वार्थे णिचि । णिजन्तस्यापि क्रियार्थत्वाद्धातुत्वे शेषादिति परस्मैपदे चोरयति । णिचो णित्वाभावात्फलवत्कर्तर्यात्मनेपदं नास्ति । चन्द्रस्तु णिच्यप्युभयपदित्वमाम्नासीत् णिज्विकल्पं च । धातोरनेकस्वरादिति परोक्षाया आमि चोरयां चकार । णिश्रीति ङे अचूचुरत् । चोरयन्तं प्रायुङ्क्तेति णिजन्तात्प्रयोक्तृव्यापारे इति णिगि णेरनिटीति णिचो लुक्यपि णिजात्याश्रयणात्समानलोपित्वाभावादुपान्त्यस्येति ह्रस्वे लघोर्दीर्घ इति पूर्वस्य दीर्घे च अचूचुरत् । कर्मकर्तर्येकधाताविति ञिक्यात्मनेपदेषु प्राप्तेषु भूषार्थेति ञिक्यययोरभावे अचूचुरत गौः स्वयमेव चोरयते गौः स्वयमेव । ञिच एव प्रतिषेधाञ्ञिटि चोरिष्यते गौः स्वयमेव । चोरयिता । सेट्क्तयोरिति णेर्लुकि चोरितः चोरितवान् । आने चोरः । गौरादित्वाड्ङ्याम् चोरी । प्रज्ञाद्यणि चौरः । णिवेत्त्यासेत्यने चोरणा । णिचोऽनित्यत्वादभावे भिदादिनिपातनादङि चुरा । छत्रादिणादाञि चुराशीलश्चौरः । अणमेयेति ङ्याम् चौरी । युवर्णेत्यलि चोरः ॥ इह पचुण्चितुण्प्रभृतीनां सनकारनिर्देशमकृत्वोदित्करणं चुरादिणिचोऽनित्यत्वज्ञापकं न च चिन्त्यते इत्यादौ नलोपाभावार्थम् । ततो णिज्लुकः स्थानित्वेनोपान्त्यत्वाभावान्नलुकोप्रसङ्गात् । तेन चोरति चिन्ततीत्यादि सिद्धमिदं च ज्ञापकं घुषेरविशब्दे इति विशब्दनप्रतिषेधः । अयं हि विशब्दने घुषेरिट्प्रतिषेधाभावार्थः स च णिचोऽनित्यत्वेऽनेकस्वरत्वादेव सिद्धः । तेन ।

महीपालवचः श्रुत्वा जुघुषुः पुष्पमाणवाः ॥

इत्यपि सिद्धम् ॥

अथ ऋदन्तौ ॥

2. पृण् पूरणे । स्वार्थे णिचि पारयति । क्ये पार्यते । धातोरनेकस्वरादित्यामि पारयां चकार । आशिसानीति शे पारयः । कटन्तोयमित्येके । पृङ् पालनपूरणयोः । पिपर्ति । पृंङ्त् व्यायामे । व्याप्रियते ॥

3. घृण् स्रवणे । घारयति घारयामास । घृं सेचने । घरति घृतम् । घृ सृ आस्रवणे इति पूर्वे पेठुः ॥

अथ कान्ता अष्टौ ॥

4. श्वल्क 5 वल्कण् भाषणे । श्वल्कयति श्वल्कयां चकार ॥

5. वल्क । वल्कयति वल्कयां चकार । अलि वल्कस्तरुत्वक् । वल्कलमिति तु वलेः कलकि [ उणादौ ४९६ ] ॥

6. नक्क 7 धक्कण् नाशने । नक्कयति । धक्कयति ॥

8. चक्क 9 चुक्कण् व्यथने । चक्कयति । उणादौ मुरलेति निपातनादले चक्कलम् चक्कलकम् [ ४७४ ] ॥

9. चुक्क । चुक्कयति । अच्यलि वा चुक्कः । निक्केति कौशिकः । निक्कसम् निक्कणम् ॥

10. टकुण् बन्धने । उदित्त्वान्ने टङ्कयति । अलि विटङ्कः । पुंनाम्नीति घे टङ्को दृषद्दारणः । अनटि टङ्कनम् । णिवेत्तीत्यने टङ्कना ॥

11. अर्कण् स्तवने । अर्कयति । अच्यलि वा अर्कः ॥

अथ चान्तौ ॥

12. पिच्चण् कुट्टने । पिच्चयति । पिचुरिति तु पचेरिचात इति पचेरौ रूपम् [ उणादौ ७३९ ] ॥

13. पचुण् विस्तारे । उदित्त्वान्ने प्रपञ्चयति । अलि प्रपञ्चः । पचुङ् व्यक्तीकरणे । पञ्चते । नाम्नि पुंसि चेति णके पञ्चिका । आचि गौरादित्वाङ् ङ्याम् विपञ्ची । घञि न्यङ्क्वादित्वात्कत्वे पङ्कः ॥

अथ छान्तः ॥

14. म्लेछण् म्लेच्छने । म्लेच्छनमव्यक्ता वाक् । म्लेच्छयति । म्लेछ अव्यक्तायां वाचि । म्लेच्छति ॥

अथ जान्ता एकादश ॥

15. ऊर्जण् बलप्राणनयोः । प्राणनं जीवनम् । ऊर्जयति । दिद्युदिति क्विपि ऊर्क् । रात्स इति नियमादत्र संयोगान्तलुग् नास्ति । ऊर्गस्यास्तीत्यूर्जो धिन्वलावत्वान्त ऊर्जस्वी ऊर्जस्वलः । भिदाद्यङि ऊर्जा । क्ते ऊर्जितम् ॥

16. तुजु 17 पिजुण् हिंसाबलदाननिकेतनेषु । निकेतनं गृहम् । उदित्त्वान्ने तुञ्जयति । पिञ्जयति । उणादौ ऋच्छिचटीत्यरे पिञ्जरः ३९७ । पिञ्जिमञ्जीत्यूले पिञ्जूलो हस्तिबन्धनपाशः ४८८॥ तुजुमप्येके पेठुः तुञ्जयति । लोकृ तर्केति दण्डकेनयोः पुनः पाठोऽर्थभेदार्थ आत्मनेपदार्थः सकर्मकार्थश्च तुञ्जयते पिञ्जयते । तुजु बलने च । तुञ्जति । पिजुकि संपर्चने । पिङ्क्ते ॥

18. क्षजुण् कृच्छ्रजीवने । उदित्त्वान्ने क्षञ्जयति । क्षजुङ् गतिदानयोः । क्षञ्जते । घटादित्वाञ्ञिणम्परे णौ वा दीर्घे अक्षाञ्जि अक्षञ्जि ॥

19 पूजण् पूजायाम् । पूजयति । य एचेति गे पूज्यम् । णके पूजक । याजकादित्वात्कर्मजा तृचा चेति प्रतिषिद्धोपि षष्ठीसमास गुरूणा पूजको गुरुपूजक । ज्ञानेच्छेति सति क्ते क्तयोरसदेत्यत्र सदर्थस्य वर्जनात्प्रतिषेधाभावे कर्तरीति षष्ठ्याम् राज्ञा पूजित । ज्ञानेच्छार्चेति प्रतिषेधाचात्र न षष्ठीसमास । भीषिभूषीत्यादि पूजा ॥

20 गज 21 मार्जण् शब्दे । गाजयति । मार्जयति । मर्चमर्जावप्येके पठन्ति । मर्चयति मर्जयति मार्जिता ॥

22 तिजण् निशाने । तेजयति तेजयामास । णिवेत्तीत्यने तेजना । तिजि क्षमानिशानयो । गुप्तिज इति सनि तितिक्षते । निशाने तु तेजते । उणादौ असित्थसि तेज ९५२ ॥

23 वज 24 व्रजण् मार्गणसस्कारगत्यो । मार्गणो बाणस्तस्य सस्कारे गतौ च । मार्गसस्कारेपीत्यन्ये । वाजयति व्राजयति । वज व्रज गतौ । वजति व्रजति ॥

25 रुजण् हिंसायाम् । रोजयति रोजया चकार ॥

अथ टान्तास्त्रयोविंशति ॥

26 नटण् अवस्यन्दने । अवस्यन्दन भ्रश । जासनाटेति कर्मणो वा कर्मत्वे शेषे इति षष्ठ्याम् चोरस्योन्नाटयति ।णके नाटकम् । णट नृतौ । नटति । नतो घटादित्वाद्ध्रस्वे नटयति शाखाम् । नतेरन्यत्र घटादित्वाभावे नाटयति नटम् । नडेति नन्दी । नड नाडी मणाल प्रणाली ॥

27 तुट 28 चुट 29 चुड्ड 30 छुटण् छेदने । तोटयति । चोटयति । उदित्त्वाचे चुण्टयति । छोटयति आच्छोटयति । नाम्नि पुसि चेति णके छोटिका । अनटि आच्छोटनम् । छुटत् छेदने । छुटति ॥

31 कुट्टण् कुत्सने च । चकाराच्छेदने । कुट्टयति । वृद्भिक्षीति टाके कुट्टाक इक्षुकुट्टाक कुट्टाकी । अलि कुट्ट । रम्यादित्वात्कर्तर्यनटि कुट्टनी । उणादौ कुट्टिवेटीतिमे कुट्टिम सस्कृतभूतलम् ३४९ ॥

32 पुट्ट 33 चुट्ट 34 पुट्टण् अल्पीभावे । पुट्टयति । चुट्टयति । प स इति से सुट्टयति । षोपदेशत्वाण्णिस्तोरेवेति षे सुषुट्टयिषति । अषोपदेशोयमनादरार्थश्चेत्यन्ये । तन्मते षत्वाभावे सुसुट्टयिषति ॥

35 पुट 36 मुटण् सचूर्णने । पोटयति । अचि पोटा । मासार्थेपि पठ्यते । पुन्त् मर्देषणे । पुन्ति ॥

36 मुट । मोटयति । अनाटि मोटनम् । मुटत् आक्षेपप्रमर्दनयोः । मुटति ॥

37 अट 38 स्मिटण् अनादरे । अट्टयति । अलि अट्ट । अन्नि अट्टा । अट्टा करोतीति क्यङि अट्टायते । स्मेटयति । अपोपदेशत्वात्षत्वाभावे सिस्मेटयिषति । अट्ट अल्पीभावे इत्येके ॥

39 लुण्टण् स्तेये च । चकारादनादरे । लुण्टयति । वृङ्भिक्षीति टाके लुण्टाक लुण्टाकी । णिजभावे क्तेट इत्य लुण्ट ॥

40 स्निटण् स्नेहने । स्नेटयति ॥

41 घट्टण् चलने । घट्टयति । अलि सघट्ट । णिवेत्तीत्यने घट्टना । पुन्नाम्नीति करणाधारे घे घट्टो नद्युत्तरणस्थानम् । अन्नि अरघट्ट । घट्टि चलने । घट्टते ॥

42 खट्टण् संवरणे । खट्टयति मुखम् ॥

43 षट्ट 44 स्फिटण् हिंसायाम् । षः स इति से सट्टयति । षोपदेशत्वाण्णिस्तोरेवेति षत्वे सिषट्टयिषति । णके सट्टक । अयं बलदानिकेतनेष्वपीत्यन्ये । स्फेटयति । णके स्फेटक । पुन्नाम्नीति घे स्फेट सस्फेटश्च तुमुलयुद्धम् । स्फिट्ण् अनादरे इत्यन्ये ॥

45 स्फुटुण् परिहासे । उदित्त्वान्ने स्फुण्टयति । अयं स्फुण्ण् इत्येके । स्फोटयति ॥

46 कीटण् वर्णने । बन्धे इत्यन्ये । कीटयति । अन्नि कीट ॥

47 वटुण् विभाजने । उदित्त्वान्ने वण्टयति । डान्तोयमित्येके वण्डयति । अन्नि वण्ड । वटु विभाजने । वण्टति ॥

48 रुटण् रोषे । रोटयति । अणि ग्रामरोट । रुटु स्तेये । रुण्टति ॥

अथ ठान्ता षट् ॥

49 शठ 50 श्वठ 51 श्वठुण् संस्कारगत्योः । शाठयति । शठ कैतवे च । शठति । अन्नि शठ । श्वाठयति ॥

51 श्वठु । उदित्त्वान्ने श्वण्ठयति ॥

52 शुठण् आलस्ये । शोठयति । शुठ गतिप्रतीघाते । शोठति ॥

53 शुठुण् शोषणे । उदित्त्वान्ने शुण्ठयति । अन्नि शुण्ठ । गौरादित्वाड्ङ्याम् शुण्ठी । शुठु शोषणे । शुण्ठति ॥

54 गुठुण् वेष्टने । उदित्त्वान्ने गुण्ठयति । णिवेत्तीत्यने गुण्ठना । क्ते अवगुण्ठित ॥

अथ डान्ताः सप्तदश ॥

55. लडण् उपसेवायाम् । लाडयति । डस्य लत्वे उपलालयति । लड विलासे । लडति । जिह्वोन्मन्थने घटादित्वाण्णिगि ह्रस्वे लडयति ॥

56. स्फुडुण् परिहासे । उदित्त्वान्ने स्फुण्डयति । णके स्फुण्डिका ॥

57. ओलडुण् उत्क्षेपे । उदित्त्वान्ने ओलण्डयति । सेट्क्तयोरिति णेर्लुकि ओलण्डितः ओलण्डितवान् । ओदिदयमित्यन्ये । तन्मते लण्डयति । णिजि-टोरित्यस्वाल्सूयत्यादीति क्तयोस्तस्य नत्वे लण्ड्णः लण्ड्णवान् । ओदित्क-रणबलाण्णिज्व्यवायेपि नत्वमित्यन्ये लण्डिनः लण्डिनवान् । लदुण् पीति चान्द्राः । अवलन्दयत्युद्रम् ॥

58. पीडण् गहने । गहनं बाधा । पीडयति । डे भ्राजभासेति वा ह्रस्वे अपीपिडत् अपिपीडत् । भीषिभूषीत्यत्र बहुवचनादाङि पीडा । अवगाहने इत्यन्ये । तिलपीलकः ॥

59. तडण् आघाते । ताडयति । उणादौ णिचोनित्यत्वादभावे दालिवली-त्याके तडाकं सरः ३४ । तिन्तिडीक इति तु सृणीकेतीके निपातनात्सिमेः ५० । तडेरागः तडागं सरः ९७ । दसृरुहीतीति तडित् ८८७ । कमिवमीति णिदिः ताडिः ६१८ ॥

60. खड 61 खडुण् भेदे । खाडयति ॥

61. खडु । उदित्त्वान्ने खण्डयति ॥

62. कडुण् खण्डने च । चकाराद्भेदे । उदित्त्वान्ने कण्डयति । खुडुण् खण्डने इत्येके खुण्डयति खुण्डितः ॥

63. कुडुण् रक्षणे । उदित्त्वान्ने कुण्डयति । कुडुङ् दाहे । कुण्डते ॥

64. गुडुण् वेष्टने च । चकाराद्रक्षणे । उदित्त्वान्ने गुण्डयति ॥

65. चुडुण् छेदने । उदित्त्वान्ने चुण्डयति ॥

66. मडुण् भूषायाम् । उदित्त्वान्ने मण्डयति । भूषाक्रोधार्थेत्यने मण्डनशीलो मण्डनः । युवर्णेत्यलि मण्डः । णिवेत्त्वीत्यने मण्डना । मडु भूषायाम् । मण्डति । मडुङ् वेष्टने । मण्डते ॥

67. भडुण् कल्याणे । उदित्त्वान्ने भण्डयति । णिवेत्त्वीत्यने भण्डना । दान्तो-यमित्यन्ये भन्दयति । उणादौ णिचोनित्यत्वात् भन्देर्नलुक् च वेति रकि भद्रम् भन्द्रं च कल्याणम् ३९१ । भडुङ् परिभाषणे । भण्डते भण्डः ॥

68. पिडुण् संघाते। उदित्त्वान्ने पिण्डयति। पिडुङ् संघाते। पिण्डते पिण्डः पिण्डी। पडुण् अयमित्येके। पण्डयति। पडुङ् गतौ। पण्डते पण्डितः पण्डः पण्डा॥

69. ईडण् स्तुतौ। ईडयति। ईडिक् स्तुतौ। ईट्टे॥

70. चडुण् कोपे। उदित्त्वान्ने चण्डयति। अचि चण्डः। न वा शोणादेरिति वा ङ्याम् चण्डी चण्डा। चडुङ् कोपे। चण्डते चण्डालः॥

71. जुड 72 चूर्ण 73 वर्णण् प्रेरणे। प्रेरणं दलनम्। जोडयति। लत्वे जोलयति। क्ते जोडितम्॥

अथ णान्ताः षट्॥

72. [चूर्ण।] चूर्णयति। अचि चूर्णः। उणादौ स्वरेभ्य इति इः चूर्णिः ६०६, ६३४॥ वर्णयति। णिवेत्तीत्यने संवर्णना॥

74. चूण 75 तूणण् संकोचने। चूणयति। युवर्णेत्यलि चूणः॥ तूणयति। युवर्णेत्यलि तूणः। उणादौ जम्बीराभीरेतीरे तूणीरः ४२२॥

76. श्रणण् दाने। श्राणयति। णिवेत्तीत्यने विश्राणना। क्लीबेनाद्वि विश्राणनम्। भीषिभूषीत्यत्र बहुवचनादनापवादेऽङि श्राणा यवागूः। यमोपरिवेषणे इत्यत्र णिचो महणादेषु घटादेरिति ह्रस्वो नास्ति णिचोनित्यत्वादभावपक्षे तु णिगि ह्रस्वे श्रणयति। श्रण दाने। श्रणति॥

77. पूणण् संघाते। पूणयति॥

अथ तान्ताः षट्॥

78. चितुण् स्मृत्याम्। उदित्त्वान्ने चिन्तयति। णिवेत्तीत्यनापवादे भीषिभूषीत्यङि चिन्ता। भीष्यादिभ्योनापवादेप्रत्ययेपि णेर्लुकि भीषादीनां सिद्धावङ्विधानं णेर्लुकोनित्यत्वज्ञापनार्थम्। तेन णेर्लुगभावे संयोगादितीयि चिन्तिया। तथा।

न यमेन न जातवेदसा न कुबेरेण न वज्रपाणिना।

मघवो [?] युधि सुप्रकम्पया श्वसनेनैव वसुंधरापते॥

अत्र सुप्रपूर्वात्कम्पेः खलि णेर्लुगभावे गुणेयादेशे च सुप्रकम्पया इति सिद्धम्। ज्ञापकेन च क्वचिदेव णिलुगभावो ज्ञाप्यते। आमादिषु तु सर्वत्राव्यभिचार्ययादेश इत्यामन्तेति वचनम्॥

79. पुस्त 80 बुस्तण् आदरानादरयोः। पुस्तयति। अलि पुस्तं लेप्यकर्म। णके पुस्तकम्। अयं बन्दने इति चन्द्रः॥

80. बुस्त बुस्तयति । उणादौ स्वरेभ्य इति इः बुस्तिः शष्कुली [६०६] ॥

81. मुस्तण् संघाते । मुस्तयति । अचि मुस्ता ॥

82. कृतण् संशब्दने । संशब्दनं ख्यातिः । कृतः कीर्तिः । कीर्तयति । ङे ऋवर्णस्येति कीर्त्यादेशापवादे ऋतो वा ऋति अचीकृतत् अचिकीर्तत् । सानिट्केतीति निपातनादनापवादे क्तौ कीर्तिः । उणादौ स्वरेभ्य इति इः कीर्तिः ६०६. ६०८ ॥

83. स्वर्त 84 पथुण् गतौ । स्वर्तयति । अपोपदेशत्वाण्णिस्तोरेवेति न षत्वम् सिस्वर्तयिषति । षोपदेशोयमिति नन्दी । णिस्तोरेवेति षत्वे सिष्वर्तयिषति । अयं कृच्छ्रजीवनेपीत्यन्ये ॥

अथ थान्ताश्चत्वारः ॥

84. पथुण् । उदित्त्वान्ने पन्थयति परिपन्थयति ॥

85. श्रथण् प्रतिहर्षे । प्रतियत्ने इत्यन्ये । श्राथयति । श्रथण् बन्धने चेति युजादौ पठिष्यमाणोप्यर्थभेदादिह पुनरधीतः । आत्मनेपदे न रूपान्यत्वार्थ इह पाठ इत्येके श्राथयते ॥

86. पृथण् प्रक्षेपणे । पर्थयति । अयं पर्थणित्येके । पार्थणित्यन्ये । तन्मते पर्थयति । पार्थयति ॥

87. प्रथण् प्रख्याने । प्रक्षेपणे इत्येके । प्राथयति । ङे स्मृदृत्वरेति सन्वद्भावापवादे पूर्वस्यात्वे अपप्रथत् ॥

अथ दान्ताः पञ्च ॥

88. छदण् संवरणे । छादयति । ऊर्जने तु घटादित्वाद्ध्रस्वे छदयति । णौ दान्तशान्तेति क्ते वा निपातनात् छन्नः छादितः । णके उच्छादकः । कर्मजा तृचा चेति प्रतिषिद्धोपि याजकादित्वात् षष्ठीसमासः राजोच्छादकः । क्विपि छदेरिसिति ह्रस्वे तनुच्छत् । करणाधारे पुंनाम्नीति घे एकोपसर्गस्येति ह्रस्वे छदः प्रच्छदः उरश्छदः । उणादौ त्रडिति त्रटि छत्रम् ४४६ । हुयामेति त्रे ह्रस्वाभावे छात्रः ४५१ । मनिति मनि छद्म ९११ । रुच्यर्चीतीसि छदिः ९८९ । अदन्तोप्ययमित्येके छदयति । छदण् अपवारणे । युजादेरिति वा णिचि छादयति छदति । रूपान्यत्वार्थं नेह पाठः छादयते । अत्रात्मनेपदं सिद्धम् ॥

89. चुदण् संचोदने । संचोदनं नोदनम् । चोदयति । य एचेति ये चोद्यम् । णिवेत्तीत्यने चोदना । भिदाद्यङि निपातनात् चूडा ॥

90. मिदुण् स्नेहने । उदित्त्वान्ने मिन्दयति । अचि मिन्दः कुष्ठी । टान्तोय-मित्येके । मिण्टयति । नायमुदिदिति कौशिकः । मेदयति ॥

91. गुर्दण् निकेतने । पूर्वनिकेतने इत्येके । पूर्वनिकेतनमाद्यो निवासः । भ्वादेरिति दीर्घे गूर्दयति । गुर्दि क्रीडायाम् । गूर्दते ॥

92. छर्दण् वमने । छर्दयति । उणादौ पदिपठीति इः छर्दिः ६०७ । सान्तस्तु रुच्यर्चीतीसि छृणत्तेः ९८९ । इह गर्दण् शब्दे इत्येके पेठुः । गर्दयति गर्दभः । भ्वादौ गर्दति । अयं गर्जे इत्यपरे ॥

अथ धान्ताः पञ्च ॥

93. बुधुण् हिंसायाम् । उदित्त्वान्ने बुन्धयति । ठान्तोयमित्यन्ये बुण्ठयति ॥

94. वर्धण् छेदनपूरणयोः । वर्धयति ॥

95. गर्धण् अभिकाङ्क्षायाम् । गर्धयति ॥

96. बन्ध 97 बधण् संयमने । बन्धयति । बन्धंश् बन्धने । बध्नाति ॥

97. बधण् बाधयति । डे अबीबधत् । बधि बन्धने । बीभत्सते ॥

अथ पान्ता अष्टौ ॥

98. छपुण् गतौ । उदित्त्वान्ने छम्पयति ॥

99. क्षपुण् क्षान्तौ । उदित्त्वान्ने क्षम्पयति ॥

100. ष्टूपण् समुच्छ्राये । पः स इति से स्तूपयति । षोपदेशत्वाण्णिस्तोरेवैति षे तुष्टूपयिषति । अषोपदेशोयमित्यन्ये तुस्तूपयिषति । स्तुपणित्येके । स्तोपयति । ष्टूपच् समुच्छ्राये । स्तूप्यति ॥

101. डिपण् क्षेपे । डेपयति । डिपिण् संघाते । डेपयते ॥

102. ह्रपण् व्यक्तायां वाचि । ह्रापयति ॥

103. डपु 104 डिपुण् संघाते । अभिमर्दने इत्येके । उदित्त्वान्ने डम्पयति । डिम्पयति । भान्तावेतावित्यन्ये । डम्भयति डिम्भयति । अचि डिम्भः ॥

105. शूर्पण् माने । तालव्यादिः । शूर्पयति । अचि पुंनाम्नीति करणेधिकरणे वा घे शूर्पः ॥

अथ बान्ता अष्टौ ॥

106. शुल्बण् सर्जने च । चकारान्माने । तालव्यादिः । शुल्बयति । अचि शुल्बम् ॥

107. डबु 108 डिबुण् क्षेपे । उदित्त्वान्ने डम्बयति विडम्बयति । उणादौ जठरेत्यरे आडम्बरः [ ४०३ ] ।

108 डिबु । उदित्त्वान्ने डिम्बयति । आचि डिम्बमशस्त्रकलहः । केचित्तु दमदभुदिभूनपि भान्तानिहाधीयते । दाभयति । दम्भयति । दिम्भयति ॥

109 सम्बण् सबन्धे । सम्बयति । षोपदेशोयमित्यन्ये । णिस्तोरेवेति षत्वे सिषम्बयिषति । तालव्यादिरयमिति द्रमिला । शम्बयति शम्बलम् । साम्बेत्येके । साम्बयति । अलि साम्ब ॥

110 कुबुण् आच्छादने । उदित्त्वान्ने कुम्बयति । भीषिभूषीत्याङि कुम्बा ॥

111 लुबु 112 तुबुण् अर्दने । उदित्त्वान्ने लुम्बयति । उणादौ स्वरेभ्य इति इ लुम्बि [ ६०६ ] ॥

112 तुबु । उदित्त्वान्ने तुम्बयति । अनि गौरादित्वाड् ङ्याम् तुम्बी । तिकृताविल्यके तुम्बक । तुपुणित्यप्यन्ये । तुम्पयति ॥

113 पुर्वण् निकेतने । भ्वादेर्नामिन इति दीर्घे पूर्वयति । अचि पुर्व । पूर्व इत्यमरकोशे ओष्ठ्यान्तेषु पठितस्तत्प्रकृतिरानुरोधाद्वान्तेष्वयमस्माभिरिहाधीत ॥

अथ मान्त ॥

114 यमण् परिवेषणे । अपरिवेषणे इत्यन्ये । यामयत्यतिथीश्चन्द्रमस वा । परिवेषणादन्यत्र यमोपरिवेषणे णिचि चेति ह्रस्वे यमयति ॥

अथ यान्त ॥

115 व्ययण् क्षये । व्याययति ॥

अथ रान्तास्त्रय ॥

116 यत्रुण् सकोचने । उदित्त्वान्ने यन्त्रयति नियन्त्रयति । णिवेत्तीत्यने यन्त्रणा ॥

117 कुद्रुण् अनृतभाषणे । उदित्त्वान्ने कुन्द्रयति । डे अचुकुन्द्रत् । गादिरयमित्यन्ये । गुन्द्रा भद्रमुस्ता ॥

118 श्वभ्रण् गतौ । श्वभ्रयति । अचि श्वभ्रम् ॥

अथ लान्ता षोडश ॥

119 तिलण् स्नेहने । तेलयति । णिगोनित्यत्वादभावे नाम्युपान्त्येति के तिला । उणादौ कीचकेत्यके निपातनात् तिलकम् २९.३३ । तिलत् स्नेहने । तिलति ॥

120 जलण् अपवारणे । जालयति । णके जालकम् । अनि जालम् । अय लर्जाणिति नन्दी । लाजयति । अचि लाजा । जलत् घात्ये । जलति ॥

121 क्षलण् शौचे । शौच शौचकर्म । क्षालयति क्षालितम् ॥

122 पुलण् समुच्छ्राये । पोलयति । पुल महत्त्वे । पोलति । तुदादावप्यय-मित्येके । पुलति ॥

123 बिलण् भेदे । ओष्ठ्यादि । बेलयति । उणादौ णिचोऽनित्यत्वादभावे विलिभिलीति किति मे विल्म प्रकाशम् ३४० । निघृषीति किति वे बिल्वम् ५११ । भिलेति कौशिक । भेलयति भिल्मम् । विलत् भेदने । विलति ॥

124 तलण् प्रतिष्ठायाम् । तालयति उत्तालयति । अचि ताल । स्वार्थे के तालिका । णिचोऽनित्यत्वात् तलति । अचि तलम् ॥

125 तुलण् उन्माने तोलयति । भीषिभूषीत्यङि तोला । बाहुलकाण्णिवेत्ती-त्यने तोलना । णिचोऽनित्यत्वादभावे नाम्युपान्त्येति के तुल । आपि तुला । भिदा-द्यङ्यपि तुला । तुलयतीति तुलशब्दाण्णिज् बहुलमिति णिचि रूपम् ।

126 दुलण् उत्क्षेपे । दोलयति । अचि स्त्रियामापि दोला । सेट्क्तयोरिति णेर्लुकि दोलित । भीषिभूषीत्यङि दोला । उणादौ णिचोऽनित्यत्वादभावे नाम्युपान्त्ये-ति किति दुलि कच्छपी ६०९ । अन्दोलयतीति तु स्वैर्येया मेङ्खोलयति वीजयति॥

127 बुलण् निमज्जने । बोलयति बोलितम् । अनटि बोलनम् । णिचोऽनि त्यत्वान्नाम्युपान्त्येति के बुल ॥

128 मूलण् रोहणे । मूलयति । अचि मूलम् । उणादौ स्वरेभ्य इति इ मूलि [ ६०६ ] । मुलेति नन्दी । मोलयति । णिचोऽनित्यत्वान्नाम्युपान्त्येति के मूल । मूल प्रतिष्ठायाम् । मूलति ॥

129 कल 130 किल 131 पिल्लण् क्षेपे । कालयति गा । अचि काल-यति क्षिपति स्वेषु स्वेषु पर्यायान्तरेषु भावानिति काल । कलण् सङ्ख्यानगत्योः । अदन्त संकलयति । अलि कल । कलि शब्दसङ्ख्यानयोः । कलते ॥

130 किल । केलयति । उणादौ स्वरेभ्य इति इ केलि ६०६ ६०८ । किलत् श्वैत्यक्रीडनयोः । किलति ॥

131 पिल । पेलयति । अचि पेलम् । पेल्यन्ते यस्यादिन्यम्यामिति बाहुल्का-दनटप्रसादे शामिमल्यथादित्य भिदादित्वादङि पेला । णिचोऽनित्यत्वात् पिल्यते ॥

132 पलण् रक्षणे । पालयति । पालेति चन्द्र । पाली ॥

133 इलण् प्रेरणे । एलयति । उपसर्गस्यानिणित्यवर्णलोपे प्रेलयति परेलयति । डे ऐलिल्म् । अचि एला । इलत् गतिस्वप्नक्षेपणेषु । इलति ॥

134. चलण् भृतौ । चालयति । चल कम्पने । चलति । कम्पने घटादित्वाद्ध्रस्वे चलयति । चलत् विलसने । अवर्णादश्न इति धातुर्वीन्तादेशे चलती चलन्ती स्त्री कुले वा ॥

अथ वान्तः ॥

135 सान्त्वण् सामप्रयोगे । सान्त्वयति । अपोपदेशत्वाण्णिस्तोरेवेति षत्वाभावे सिसान्त्वयिषति । षोपदेशोयमित्येके सिषान्त्वयिषति । साम सान्त्वप्रयोगे इति चन्द्रः । सामयति । ङे उपान्त्यस्येति ह्रस्वे असीसमत् । सामण् सान्त्वने । अदन्तः अससामत् ॥

अथ शान्तः ॥

136. धूशण् कान्तीकरणे । धूशयति । दन्त्यान्त्योयमित्येके धूसयति । जवरक्रकरेत्यरे धूसरः [ उणादौ ४०३,४४० ] । मूर्धन्यान्तोयमित्यन्ये धूषयति ॥

अथ षान्ताश्चत्वारः ॥

137. श्लिषण् श्लेषणे । श्लेषयति । श्लिषू दाहे । श्लेषति । श्लिषच् आलिङ्गने । श्लिष्यति ॥

138 लूषण् हिंसायाम् । लूषयति ॥

139 रुषण् रोषे । रोषयति । रुष हिंसायाम् । रोषति । रुषच् रोषे । रुष्यति ॥

140 प्युषण् उत्सर्गे । प्योषयति । णिचोऽनित्यत्वात् पुप्योष । प्युषच् विभागे । प्युष्यति ॥

अथ सान्ता षट् ॥

141. पसुण् नाशने । उदित्त्वान्ने पंसयति । उणादौ पंसिदीर्घश्चेत्यौ पांसु ७९८ ॥

142 जसुण् रक्षणे । उदित्त्वान्ने जंसयति । दसुण् इत्यप्येके । दंसयति ॥

143 पुसण् अभिमर्दने । पुंसयति । क्ते उत्पुंसितम् । उणादौ नञ पुंसेरित्यके नखादित्वान्नञोऽभावे नपुंसकम् ३२ ॥

144. ब्रूस 145 पिस 146 जस 147 बर्हण् हिंसायाम् । ब्रूसयति । पेसयति । गतावयमित्येके । बलदाननिकेतनेष्वपीत्यन्ये । पिसृ गतौ । पेसति । ऋदनुबन्धत्वाण्णौ ङे ह्रस्वाभावे अपिपेसत् । एके त्वाहुः नायमृदित् तथा च णिचोऽनित्यत्वाच्चौरादिकेनैव पेसतीति प्रयोगसिद्धौ भ्वादौ पाठोस्यात्मनेपदार्थः पेसते ॥

146. जस । जासनाटेति कर्मणो वा कर्मत्वे शेषे इति षष्ठ्याम् चौरस्योज्जासयति ॥

अथ हान्तो ॥

147 बर्ह । बर्हयति । वर्हि प्राधान्ये । वर्हते ॥

148 ष्णिहण् स्नेहने । ष स इति से स्नेहयति । षोपदेशत्वाण्णिस्तोरेवेति षत्वे सिष्णेहयिषति । ष्णिहौच् प्रीतौ । स्निह्यति ॥

अथ क्षान्तास्त्रय ॥

149 म्रक्षण् म्लेच्छने । म्रक्षयति । अनक्ति म्रक्षणम् । भ्वादौ म्रक्ष रोषे इत्येके । म्रक्षति ॥

150 भक्षण् अदने । भक्षयति । णिगि भक्षेर्हिंसायामित्यणिक्कर्तु कर्मत्वे भक्षयति गौर्यवान् भक्षयति गा यवान्मैत्र । अत्र यवाना प्रसवप्ररोहधर्मत्वेन चेतनत्वाद्भक्षणे प्राणवियोगलक्षणा हिंसास्त्येव । हिंसाया अन्यत्र गतिबोधेति प्राप्तमपि कर्मत्वं न भवतीति हेतुकर्त्रीति कर्तरि तृतीयायाम् भक्षयति पिण्डी शिशुना मैत्र । शीलिकामीत्यणपवादे णे मासभक्षा स्त्री । युवर्णेत्यलि भक्ष ॥

151 पक्षण् परिग्रहे । पक्षयति । कर्मण्यणि पक्ष ॥

अथोभयपदी क्षान्त ॥

152 लक्षीण् दर्शनाङ्कनयो । अङ्कन चिह्नम् । ईदित्त्वादीगित इति फलवत्कर्तर्यात्मनेपदे लक्षयते । फलवतोऽन्यत्र शेषादिति परस्मैपदे लक्षयति । णिवेत्तीत्यने लक्षणा । करणाधारे इत्यनटि लक्षणम् । उणादौ तृकृभित्यणे लक्षणम् १८७ । लक्षेर्मोन्तश्चेति ई लक्ष्मी ७१८ । लक्षिण् आलोचने । अर्थविशेषे चुरादि लक्षयते ॥

इतोऽर्थविशेषे आलक्षिग । अत परमर्थविशेषे चुरादयो लक्षिग्पर्यन्ता प्रस्तूयन्ते । तत्राद्यावदन्त ॥

153 ज्ञाण् मारणादिनियोजनेषु । मारणादयो मारणतोषणनिशाने श्चेति सूत्रोक्तास्तेषु नियोजने चार्थे जानातिश्चुरादि । मारणे मारणेति ह्रस्वे संज्ञपयति पशुम् । तोषणे विज्ञपयति गुरुम् आज्ञपयति आज्ञपित । सनि इवृधेति वेट् जिज्ञपयिषति । पक्षे ज्ञप्याप इति ईपि ह्रस्वाभावेन ज्ञीप्सति । निशाने प्रज्ञपयति शस्त्रम् । नियोजने आज्ञापयति भृत्यम् ज्ञापित ज्ञापना । अत्र मारणाद्यर्थाभावाद्ध्रस्वाभाव । उक्तेभ्योऽर्थेभ्योऽन्यत्र न चुरादिरिति ज्ञयादिरात्मन आजानाति ॥

अथोदन्त ॥

154 च्युण् सहने । सहने इत्येके । च्यावयति नागन् सहने इत्यर्थ । अन्यत्र च्युङ् गतौ । च्यवते ॥

अथोदन्तः ॥

155. भूण् अवकल्कने । अवकल्कनं मिश्रीकरणम् । भावयति दधौदनम् । विकल्कने इति नन्दी । भावयेद्ब्राह्मणं तपः । अवकल्पने इत्यन्ये । भावयति साधुः समयम् । भू सत्तायाम् । भवति । प्राप्तौ तु भूङ इति वा णिङि भावयते । पक्षे ङित्त्वादिङित इत्यात्मनेपदे भवते ॥

अथ कान्ताश्चयः ॥

156. बुक्कण् भषणे । भाषणे इत्येके । आभाषणे इत्यन्ये । बुक्कयति श्वा चौरान् । भषणादन्यत्र बुक्क भाषणे । बुक्कति ॥

157. रक 158 लक 159 रग 160 लगण् आस्वादने । राकयति लाकयति । आसादने इत्यन्ये । आराकयति आलाकयति धर्मम् ॥

अथ गान्ताश्चयः ॥

159. रग । रागयति ॥

160. लग । लागयति । अन्यत्र रगे शङ्कायाम् । रगति । लगे सङ्गे । लगति । णिगि घटादेरिति ह्रस्वे रगयति । लगयति ॥

161. लिगुण् चित्रीकरणे । उदित्त्वान्ने लिङ्गयति शब्दम् । स्त्रीपुंनपुंसकलिङ्गैश्चित्रीकरोतीत्यर्थः । अलिङ्गयति । अचि लिङ्गम् । अन्यत्र लिगु गतौ । लिङ्गति आलिङ्गति ॥

अथ चान्ताश्चयः ॥

162. चर्चण् अध्ययने । चर्चयति शास्त्रम् । भीषिभूषीत्यङि चर्चा । अन्यत्र चर्चत् परिभाषणे इति केचित् । चर्चति ॥

163. अञ्चुण् विशेषणे । विशेषणमतिशयः । अञ्चयत्यर्थम् व्यक्तीकरोतीत्यर्थः । अन्यत्र अञ्चू गतौ च । अञ्चति ॥

164. मुचण् प्रमोचने । मोचयति शरान् । प्रयोजने इत्यन्ये । मोचयति कुण्डले प्रयोजयतीत्यर्थः । अन्यत्र मुचि कल्कने इत्येके मोचते । मुच्लृंती मोक्षणे । मुञ्चते मुञ्चति ॥

अथ जान्तौ ॥

165. अर्जण् प्रतियत्ने । प्रतियत्नः संस्कारः । अर्जयति हिरण्यम् निवेशयतीत्यर्थः । ङे आर्जिजत् । अन्यत्र तु अर्ज सर्ज अर्जने । अर्जति ॥

166. भजण् विश्राणने । विश्राणनं वितरणम् । भाजयति विभाजयति ।

अच्यलि वा भाजः। स्त्रियां भाजगोणेति ङ्याम् भाजीं . पक्वा चेत्। भाजान्या। अन्यत्र तु भजीं सेवायाम्। भजते भजति॥

अथ टान्तास्त्रयः॥

**167.** चट **168** स्फुटण् भेदे। चाटयति। अनटि उच्चाटनम्। णिचोऽनित्यत्वात् चटति विचटति। उणादौ द्रुकृन्नित्यके चटका [ २७ ]। स्फोटयति आस्फोटयां चकार। अर्थान्तरे तु स्फुट्ट विसरणे। स्फोटति। स्फुटि विकसने। स्फोटते। स्फुटत् विकसने। स्फुटति॥

**169.** घटण् संघाते। घाटयति। अनटि उद्घाटनम्। उद्घाटितः कपाटः। अर्थान्तरे तु घटिष् चेष्टायाम्। घटते। घटादित्वाद्धस्वे घटयति॥ हन्त्यर्थाश्च। येऽन्यत्र हन्त्यर्था हिंसार्थाः पठ्यन्ते तेऽप्यत्र चुरादौ वेदितव्याः। हनंक् हिंसागत्योः। घातयति। हिंसु तृहप् हिंसायाम्। हिंसयति तर्हयति। तत्तद्गणपाठसामर्थ्यात्तु हन्ति हिनस्ति तृणेढीत्यादयोऽपि। अनेनैव च सिद्धेऽन्येषां हिंसार्थानां चुरादौ पाठ आत्मनेपदादिगतरूपभेदार्थः। अन्ये तु चटास्फुटौ घट च हन्त्यर्थाः इत्याद्य पाठं मन्यन्ते। अस्यार्थश्चट इत्ययं धातुराड्पूर्वश्च स्फुट इति घट इत्ययं च त्रयोऽप्येते हन्त्यर्था हिंसार्थाः सन्तश्चुरादौ भवन्ति। चाटयति आस्फोटयति घाटयति हन्तीत्यर्थः। अर्थान्तरे तु न चुरादित्वम् चटति आस्फुटति घटते। अपरे त्वन्यथा व्याचक्षते। चटास्फुटौ। आस्फुटत्यर्थे चुरादिः चाटयति। घट च। अयं चास्फुटत्यर्थे चुरादिः घाटयति। अन्यत्र चटति घटते॥

अथ णान्तः॥

**170.** कणण् निमीलने। काणयति चक्षुः। अचि काणः। अर्थान्तरे तु कण शब्दे। कणति। गतौ घटादित्वाण्णिगि ह्रस्वे कणयति॥

अथ तान्तः॥

**171.** यतण् निकारोपस्कारयोः। निकारः खेदनम्। यातयत्यरिम्। णिवेत्त्यासेत्यने यातना तीव्रव्यथा। उपस्कारे यातयति दरिद्रो नागरस्य धनम्। यातयति च्छिद्रं राजा प्रच्छादयतीत्यर्थः। प्रतियातयति प्रतिबिम्बयतीत्यर्थः। अर्थान्तरे तु यतैङ् प्रयत्ने। यतते। निरश्च प्रतिदाने। निरः परो यतिः प्रतिदानेऽर्थे चुरादिः निर्यातयत्यृणम् शोधयतीत्यर्थः॥

अथ दान्ताः षट्॥

**172.** शब्दण् उपसर्गाद्भाषाविष्कारयोः। भाषो भाषणम्। भाषे आविष्कारे चार्थे शब्द इत्ययं धातुरुपसर्गात्परश्चुरादिः। विशब्दयति प्रशब्दयति। प्रतिशब्दयति

प्रतिभुत्कामाविष्करोतीत्यर्थः । योगविभागोत्रेति नन्दी । शब्द उपसर्गादित्येकः शब्द इत्ययं धातुरुपसर्गात्परश्चुरादिः प्रशब्दयति विशब्दयति । भाषाविष्कारयोरित्यपरः । अनुपसर्गार्थोयमारम्भः । पूर्वस्तु भाषणाविष्कारार्थः शब्दयति विशब्दयति । अन्यस्तु शब्द शब्दक्रियायामित्यधीते शब्दयति । भषणस्यापि शब्दविशेषक्रियारूपत्वादत्रैवान्तर्भावः । तत उपसर्गादाविष्कारे इति पठित्वा प्रशब्दयति विशब्दयतीत्याविष्कारमात्रे उदाहरन्ति ॥

173. षूदण् आस्रवणे । क्षरणे इत्येके । षः स इति से सूदयति । षोपदेशत्वाण्णिस्तोरेवेति षत्वे सुषूदयिषति । अनटि निसूदनम् । अर्थान्तरे तु षूदि क्षरणे । सूदते । नाम्युपान्त्येति के सूदः ॥

174. आङः क्रन्दण् सातत्ये । आङः परः क्रन्द इत्ययं धातुः सातत्येर्थे चुरादिः । आक्रन्दयति । अलि आक्रन्दः । अर्थान्तरे तु क्रदु रोदनाह्वानयोः । आक्रन्दति ॥

175. ष्वदण् आस्वादने । संवरणे इत्यन्ये । षः स इति से स्वादयति । षोपदेशत्वाण्णाम्यन्तस्थेति षत्वे असिष्वदत् । अर्थान्तरे तु ष्वदि आस्वादने । मैत्राय स्वदते दधि ॥

176. आस्वदः सकर्मकात् । आङ्पूर्वात्स्वदतेः सकर्मकाण्णिज् भवति । आस्वादयति यवागूम् । अन्ये तु ग्रसण् ग्रहणे । पुषण् धारणे । दलण् विदारणे । लोकृ तर्कोति भासार्थदण्डकः । पूरण् आप्यायने । स्वदण् संवरणे इति क्रमेण पठित्वा व्याख्यान्ति ग्रसिमारभ्य आस्वदः स्वदमभिव्याप्य यो धातुः पठितस्तस्मात्सकर्मकक्रियावचनादेव णिज् भवति । ततोकर्मकेभ्यो णिचो व्यावृत्तिः ॥

177. मुदण् संसर्गे । मोदयति सक्तून् सर्पिषा । मोदयत्युष्णा अपः शीताभिरद्भिः । उभयत्र संसृजतीत्यर्थः । नाम्नि पुंसि चेति णके मोदकः । अर्थान्तरे तु मुदि हर्षे । मोदते ॥

अथ धान्तः ॥

178. शृधण् प्रसहने । प्रसहनमभिभवः । अप्रसहने इत्येके । अप्रसहनममर्षः । शर्धयत्यरिम् । ङे ऋदृवर्णस्येति गुणापवादे ऋतो वा ऋति अशीशृधत् अशशर्धत् । अर्थान्तरे तु शृधूङ् शब्दकुत्सायाम् । शर्धते । शृधूग् उन्दे । शर्धते शर्धति ॥

अथ पान्तः ॥

179. कृपण् अवकल्कने । अवकल्कनं मिश्रीकरणं सामर्थ्यं न । कल्पयति ।

अवकल्पने इत्यन्ये। कल्पयति वृत्तिं राजा। चन्द्रस्तु भुकृपौ द्वावप्यवकल्कने चिन्तने इति व्याख्यत् संभावयति अवकल्पयति। अर्थान्तरे तु कृपौङ् सामर्थ्ये। कल्पते॥

अथ मान्तः॥

180. जभुण् नाशने। उदित्त्वान्ने जम्भयति। क्ये जम्भ्यते। जभणिति चन्द्रः। जभः स्वरे इति स्वरात्परे ने जम्भयति। अर्थान्तरे तु जभुङ् गात्रविनामे। जम्भते॥

अथ मान्तः॥

181. अमण् रोगे। अमोकम्यमीत्यत्रामो वर्जनाद्यमोपरिवेषणे इत्यत्र णिचो नियमार्थत्वाद्वा ह्रस्वाभावे रुजार्थस्येति वा कर्मणः कर्मत्वे शेषषष्ठ्याम् आमयति चौरस्य ज्वरः। अणि आमः। उणादौ कुगुवलीत्यये आमयो रोगः ३६९। श्वन्मातरिश्वनित्यनि निपातनात् अरीनामयतीत्यर्यमा रविः ९०२। अर्थान्तरे तु अम गतौ। अमति। घञि अमः॥

अथ रान्तौ॥

182. चरण् असंशये। विचारयत्यर्थान्। णिवेत्तीत्यने विचारणा। अन्ये तु चरण् संशये इति पठन्ति। विचारणा हि संशये सति भवतीति चाहुः। अर्थान्तरे तु चर भक्षणे च। चरति॥

183. पूरण् आप्यायने। पूरयति। अर्थान्तरे तु पूरैचि आप्यायने। पूर्यते॥

अथ लान्तः॥

184. दलण् विदारणे। दालयति दारयतीत्यर्थः। अर्थान्तरे तु दल विशरणे। दलति। णिगि घटादित्वाद्ध्रस्वे दलयतीत्येके॥

अथ वान्तः॥

185. दिवण् अर्दने। देवयति शत्रून्। परिदेवयति अतिदेवयति। अतिपूर्वादेव णिजित्येके। अर्थान्तरे तु दिवूच् क्रीडादौ। दीव्यति॥

अथ शान्तः॥

186. पश 187 पषण् बन्धने। पाशयति पाशैरश्वम्॥

अथ षान्ताश्चत्वारः॥

187. पषण्। पाषयति पाशैरश्वम्। दन्त्यान्त्योऽयमित्येके। अर्थान्तरे तु पषी बाधनस्पर्शनयोः। इति मूर्धन्यान्तस्तालव्यान्तो दन्त्यान्तश्चाचार्यभेदेन पशते पशति पषते पषति पसते पसति॥

188. पुषण् धारणे। पोषयत्याभरणम् धारयतीत्यर्थः। अर्थान्तरे तु पुष पुष्टौ। पोषति। पुषंच् पुष्टौ। पुष्यति। पुषश् पुष्टौ। पुष्णाति॥

189. घुषूण् विशब्दने। विशब्दनं विशिष्टशब्दकरणं नानाशब्दनं वा। घोषयति उद्घोषयति। अविशब्दने इत्येके। अपघोषयति पापम् अपन्हुते इत्यर्थः। ऋदित्करणं चुरादिणिचोनित्यत्वे लिङ्गम्। तेन ऋदिच्छ्वीति वाङि अघुषत्। पक्षे अघोषीत्। घोषति।

जुघुषुः पुष्यमाणवाः॥

इति विशब्दनेपि भवन्ति। नायमृदिदिति कौशिकः। अर्थान्तरे तु घुषू शब्दे। घोषति। आङः क्रन्दे। क्रन्दः सातत्य इत्यन्ये। आङः परो घुषिः क्रन्देर्थे चुरादिर्भवति। आघोषयति। णिवेत्तीत्यन्ये आघोषणा। अन्ये त्वाङः क्रन्दः सातत्ये इति पठन्ति। आङः पराक्रन्देः सातत्येर्थे णिज् भवति। आक्रन्दयति नित्यम्। अन्यत्र आक्रन्दति॥

190. भूष 191 तसुण् अलंकारे। भूषयति कन्याम्। भूष अलंकारे। भूषति॥

अथ सान्ताः सप्त॥

191. तसु। उदित्वान्ने तंसयति। पुंनाम्नीति करणे घे अवतंसः। तसु अलंकारे। तंसति॥

192. जसण् ताडने। जासयति। जासनाटेति कर्मणो वा कर्मत्वे शेषे इति षष्ठ्याम् चौरस्योज्जासयति। अर्थान्तरे तु जसूच् मोक्षणे। जस्यति। जसण् हिंसायामिति पठितोप्यर्थभेदात्पुनरधीतः॥

193. त्रसण् वारणे। धारणे इति नन्दी। ग्रहणे इत्येके। त्रासयति मृगान् निराकरोतीत्यर्थः। अर्थान्तरे तु त्रसैच् भये। त्रस्यति त्रसति॥

194. वसण् स्नेहच्छेदावहरणेषु। स्नेहे वासयति यमा। छेदे वासयति वृक्षम्। अवहरणे वासयत्यरीन् मारयतीत्यर्थः। अर्थान्तरे तु वसं निवासे। वसति। वसिक् आच्छादने। वस्ते॥

195. ध्रसण् उत्क्षेपे। उञ्छे इत्येके। ध्रासयति। अर्थान्तरे तु ध्रसूश् उञ्छे। ध्रस्नाति। उकारादी इमावित्येके उध्रासयति उध्रस्नाति॥

196. ग्रसण् ग्रहणे। ग्रासयति फलम्। अर्थान्तरे तु ग्रसूङ् अदने। ग्रसते।

197. लसण् शिल्पयोगे । लासयति दारु भ्रमादिना तक्ष्णोतीत्यर्थः । अर्थान्तरे तु लस श्लेषणक्रीडनयोः । लसति । भ्वादौ पाठः शिल्पयोगेऽपि णिज्भावार्थः । एवमन्यत्रापि । षान्तोऽयमित्येके । लाषयति दारु । अन्यत्र लषी कान्तौ । लषति लष्यति । तालव्यान्त इति तु कौशिकः ॥

अथ हान्तः ॥

198. अर्हण् पूजायाम् । अर्हयति । ङे आर्जिहत् । णिवेत्तीत्यने अर्हणा । अर्थान्तरे तु अर्ह पूजायाम् । अर्हति ॥

अथ क्षान्तः ॥

199. मोक्षण् असने । मोक्षयति शरान् । युवर्णेत्यलि मोक्षः । अन्यत्र मोक्षति ॥

अथ वर्णक्रमेण भासार्थाः ॥ तत्र कान्तौ ॥

200. लोकृ 201 तर्क 202 रघु 203 लघु 204 लोचृ 205 विच्छ 206 अञ्जु 207 तुञ्जु 208 पिञ्जु 209 लजु 210 लुजु 211 भजु 212 पट 213 पुट 214 लुट 215 घट 216 घट्ट 217 वृत 218 पुथ 219 नद 220 वृध 221 गुप 222 धूप 223 कुप 224 चीव 225 दशु 226 कुशु 227 त्रसु 228 पिसु 229 कुसु 230 दसु 231 वर्ह 232 बृहु 233 वल्ह 234 अहु 235 बहु 236 महुण् भासार्थाः । लोकयति विलोकयति । ऋदित्वादुपान्त्यस्येति ह्रस्वाभावे अलुलोकत् । अन्यत्र लोकृङ् दर्शने । लोकते ॥

201. तर्क । तर्कयति । युवर्णेत्यलि तर्कः वितर्कः । क्ते तर्कितः । गणान्तरेष्वपठिता अप्यत्र दण्डके पाठाद्धातव एवेत्यर्थान्तरे तर्कति ॥

अथ घान्तौ ॥

202. रघु 203 लघु । उदित्वान्ने रङ्घयति । लङ्घयति । अन्यत्र रघुङ् लघुङ् गतौ । रङ्घते । लङ्घते ॥

अथ चान्तः ॥

204. लोचृ । लोचयति आलोचयति । ऋदित्वादुपान्त्यस्येति ह्रस्वाभावे अलुलोचत् । अन्यत्र लोचृङ् दर्शने । लोचते ॥

अथ छान्तः ॥

205. विच्छ । [illegible] इति णिचि विच्छयति । अन्यत्र विच्छत् गतौ । अशवि ते वेति पक्षे विच्छायति । विच्छति ॥

अथ जान्ताः षडुदितश्च ॥

206. अजु । अञ्जयति । अन्यत्र अञ्जौप् व्यक्त्यादौ । व्यनक्ति ॥

207. तुजु । तुञ्जयति । तुजु बलने च । तुञ्जति ॥

208. पिजु । पिञ्जयति । अन्यत्र पिजुकि संपर्चने । पिङ्क्ते ॥

209. लजु । लञ्जयति । अन्यत्र लजु भर्त्सने । लञ्जति ॥

210. लुजु । लुञ्जयति । अन्यत्र लुञ्जति ॥ .

211. भजु । भञ्जयति । अन्यत्र भञ्जौप् आमर्दने । भनक्ति ॥

अथ टान्ताः पञ्च ॥

212. पट । पाटयति । अन्यत्र पट गतौ । पटति । पटण् ग्रन्थे । अदन्तः पटयति ॥

213. पुट । पोटयति । अन्यत्र पुटत् संश्लेषणे । पुटति ॥

214. लुट । लोटयति । अन्यत्र लुटि प्रतीघाते । लोटते । लुटच् विलोटने । लुट्यति ॥

215. घट । घाटयति । अन्यत्र घटिष् चेष्टायाम् । घटते । णिगि घटादेर्गिति ह्रस्वे घटयति । घटण् संघाते इति पठितोपि सकर्मकार्यमर्थविशेषार्थं च पुनरिहायमधीतः ॥

216. घटु । उदित्त्वान्ने घण्टयति । अचि घण्टा । अन्यत्र घण्टति ॥ इह रुटनटौ टान्तौ लडुतडौ च डान्तौ केचिदधीयते । रुट रोटयति । अन्यत्र रुटि प्रतीघाते । रोटते । नट नाटयति । अन्यत्र णट नृतौ । नटति । भ्वादावात्मनेपदीति नन्दी । नटते । लडु । उदित्त्वान्ने लण्डयति । अन्यत्र लण्डति । तड । ताडयति । अन्यत्र तडति ॥

अथ तान्तः ॥

217. वृत । वर्तयति । अन्यत्र वृतुङ् वर्तने । वर्तते ॥

अथ थान्तः ॥

218. पुथ । पोथयति । अन्यत्र पुथच् हिंसायाम् । पुथ्यति ॥

अथ दान्तः ॥

219 नद । नादयति । अन्यत्र णद अव्यक्ते शब्दे । नदति ॥

अथ धान्तः ॥

220 वृध । वर्धयति । अन्यत्र वृधुङ् वृद्धौ । वर्धते ॥

अथ पान्ताश्च ॥

221 गुप । गोपयति । अन्यत्र गुपो रक्षणे । गुपौधूपेत्याये गोपायति ॥

222 धूप । धूपयति । अन्यत्र धूप सतापे । धूपायति ॥

223 कुप । कोपयति । अन्यत्र कुपच् क्रोधे । कुप्यति ॥

अथ वान्त ॥

224 चीव । चीवयति । अन्यत्र चीवृग् इर्पीयत् । चीवते चीवति ॥

अथ शान्तावुदितौ च ॥

225 दशु । दशयति । अन्यत्र दश दशने । दशति ॥

226 कुशु । कुशयति । अन्यत्र कुशति ॥

अथ सान्ताश्चत्वार उदितश्च ॥

227 त्रसु । त्रसयति । अन्यत्र त्रसति ॥

228 पिसु । पिसयति । अन्यत्र पिसति ॥

229 कुसु । कुसयति । अन्यत्र कुसति ॥

230 दसु । दसयति । अन्यत्र दसति ॥

अथ हान्ता षट् वर्हवल्हौ मुक्त्वोदितश्च ॥

231 वर्ह । वर्हयति । अन्यत्र वार्ह प्राधान्ये । वर्हते ॥

232 बृहु । बृहयति । णिवेष्टीन्यने बृहणा । अन्यत्र बृहु शब्दे च । बृंहति ॥

233 वल्ह । वल्हयति । अन्यत्र वल्हि प्राधान्ये । वल्हते ॥

234 अहु । अंहयति । अन्यत्र अहुङ् गतौ । अंहते ॥

235 बहु । बंहयति ॥

गिरति । गृश् शब्दे । गृणाति । कृणीति चन्द्रः । कारयते । अन्यत्र कॄत् विक्षेपे । किरति ॥

अथ चान्तः ॥

239. वञ्चिण् प्रलम्भने । प्रलम्भनं मिथ्याफलाख्यानम् । वञ्चयते । णिवेत्तीत्यने वञ्चना । अन्यत्र वञ्चू गतौ । वञ्चति । इदित्वादेव णिजन्तादात्मनेपदे सिद्धे प्रलम्भे गृधिवञ्च्योरिति तद्विधानं णिगन्तादफलवत्कर्त्रर्थमित्येके ॥

अथ टान्तः ॥

240. कुटिण् प्रतापने । कोटयते उत्कोटयते । अन्यत्र कुटत् कौटिल्ये । कुटति ॥

अथ दान्तौ ॥

241. मदिण् तृप्तियोगे । तृप्तिशोधने इत्यन्ये । तृप्तेः शोधनं संपत्तिः । मादयते । अन्यत्र मदैच् हर्षे । माद्यति । हर्षग्लपनयोर्घटादित्वाण्णिगि ह्रस्वे मदयति ॥

242. विदिण् चेतनाख्याननिवासेषु । वेदयते सुखम् चेतयते इत्यर्थः । आवेदयते धर्मम् आख्यातीत्यर्थः । वेदयते गृहम् निवासं करोतीत्यर्थः । विवादेऽप्यन्ये । प्रवेदयते वादिना । अन्यत्र विदक् ज्ञाने । वेत्ति । विदिंच् सत्तायाम् । विद्यते । विदॢंती लाभे । विन्दते विन्दति । विदिंप् विचारणे । विन्त्ते ॥

अथ नान्तः ॥

243. मनिण् स्तम्भे । स्तम्भो गर्वः । मानयते विमानयते वृषलः । पक्षे मनतीति चन्द्रः । अन्यत्र मनिंच् ज्ञाने । मन्यते । मनूयि बोधने । मनुते ॥

अथ लान्तौ ॥

244. वलि 245 भलिण् आभण्डणे । आभण्डनं निरूपणम् । वलिरोष्ठ्यादिः । उद्वालयते । भालयते निभालयते । अन्यत्र वलि संवरणे । वलते । भलि परिभाषणादौ । भलते ॥

अथ वान्तः ॥

246. दिविण् परिकूजने । देवयते गन्त्री । अन्यत्र दिवूच् क्रीडादौ । दीव्यति ॥

अथ पान्तः ॥

247. वृपिण् शक्तिबन्धे । आवर्पयते मामः शक्तिं बध्नातीत्यर्थः । शक्तिबन्धः प्रजनासामर्थ्यमित्यन्ये । वर्पयते वर्षधरः । तवर्गतुर्यादिरयं सामर्थ्यवारणार्थ इत्येके । धर्पयतेरीन् । केचिदिममुदितं णिङोनित्यत्वार्थं पठन्ति । तन्मते शक्ति-

बन्धेपि णिचोभावादात्मनेपदाभावे वर्षति । ऊदित्त्वात् क्त्वि वेटि वृष्ट्वा वर्षित्वा । अर्थान्तरे तु वृषू सेचने । वर्षति ॥

अथ सान्तः ॥

248. कुत्सिण् अवक्षेपे । कुत्सयते । भीषिभूषीत्यत्र बहुवचनादङि कुत्सा । बाहुलकाण्णिवेत्तीत्यने कुत्सना ॥

अथ क्षान्तः ॥

249. लक्षिण् आलोचने । लक्षणं लक्षयते । अन्यत्र लक्षीण् दर्शनाङ्कनयोः । लक्षयति लक्षयते । णिचोनित्यत्वात् लक्षते ॥

अथात्मनेपदिन एवार्थान्तरेपि चुरादयः ॥

अथ कान्तास्त्रयः ॥

250. हिष्कि 251 किष्किण् हिंसायाम् । हिष्कयते । क्ते हिष्कितम् । हिक्कितमिति तु हिक्की अव्यक्ते शब्दे इत्यस्य ॥

251. किष्कि । किष्कयते । उणादौ पृकाहृषीत्युः किष्कुर्वितस्तिः ७२१. ७६१ । किष्किन्धेति तु किमप्यन्तर्दधातीति पृषोदरादित्वाद्धातेः ॥

252. निष्किण् परिमाणे । निष्कयते । अचि निष्कः ॥

अथ जान्तः ॥

253. तर्जिण् संतर्जने । तर्जयते । करणेनटि तर्जनी । यत्तु लक्ष्ये तर्जयतीति परस्मैपदं दृश्यते तथा भर्त्सयति निशामयति भालयति कुत्सयति वञ्चयति निवेदयतीत्यादि । तद् भ्वादौ राजृग् टुभ्राजीति पुनर्भ्राजिग्रहणेनात्मनेपदस्यानित्यत्वज्ञापनात्सिद्धम् । तर्ज भर्त्सने । तर्जति ॥

अथ टान्तौ ॥

254. कूटिण् अप्रमादे । आप्रदाने इत्यन्ये । कूटयते । अचि कूटः । कूटण् दाहे । अदन्तः कूटयति ॥

255. त्रुटिण् छेदने । त्रोटयते रज्जुम् । डान्तोयमित्येके । उत्त्रोडयते तृणम् । त्रुटत् छेदने । त्रुट्यति त्रुटति ॥

अथ ठान्तः ॥

256. शठिण् श्लाघायाम् । शाठयते । अचि शाठः । णिवेत्तीत्यने शाठना । शटेति नन्दी । शलेति कौशिकः । शठ कैतवे च । शठति शठः ॥

अथ णान्तास्त्रय ॥

257 कुणिण् सकोचने । कूणयते मुखम् । क्ते कूणित चक्षु । उणादौ स्वरेभ्य इरयौ कूणि [ ६०६ ] ॥

258 तूणिण् पूरणे । तूणयते । अलि तूण । उणादौ जम्बीराभीरेतीरे तूणीर ४२२ । तूलेति चन्द्र ॥

259 भ्रूणिण् आशायाम् । आशङ्कायामित्येके । भ्रूणयते । अलि भ्रूण ॥

अथ तान्तौ ॥

260 चितिण् सवेदने । चेतयते । आशिति विषये णेर्लुकि व्यञ्जनान्तत्वादिडित इत्यने चेतनाशीलश्चेतन । अप्रत्ययापवादे णिवेत्तीत्यने चेतना । रम्यादिभ्य इति कर्तर्यनटि चेतन । चितैं सज्ञाने । चेतति ॥

261 वस्ति 262 गन्धिण् अर्दने । वस्तयते । अचि वस्त । उणादौ स्वरेभ्य इरयो वस्ति ६०६ ६०८ ॥

अथ धान्त ॥

262 गन्धि । गन्धयते । अलि गन्ध । अनटि गन्धनम् । उणादौ गन्धेरर्चान्त इति वे गन्धर्व ५०८ ॥

अथ पान्ताश्चत्वार ॥

263 डपि 264 डिपि 263, a डम्पि 264, a डिम्पि 265 डम्भि 266 डिम्भिण् सघाते । डापयते । डेपयते । डम्पयते । डिम्पयते ॥

अथ भान्तौ ॥

265 डम्भि । डम्भयते ॥

266 डिम्भि । डिम्भयते । अचि डिम्भ ॥

अथ मान्तास्त्रय ॥

267 स्यामिण् वितर्के । यमोपरिवेषणे इत्यत्र व्याधिकारेपि णिज्ग्रहण नियमार्थम् । तेनामोकम्यमीति ह्रस्वाभावे स्यामयते । स्यमू शब्दे । स्यमति । णिग्यम इति ह्रस्वे स्यमयति ॥

268 शमिण् आलोचने । शामयते विशामयते । णौ दान्तेति क्ते वा निपातनात् शान्त । पक्षे सेट्क्तयोरिति णेर्लुक् शामित । शमूं उपशमे । शाम्यति । णिगि शमोदर्शने इति ह्रस्वे । शमयति रोगम् ॥

269 कुस्मिण् कुस्मयने । मतिदृष्टे बुद्ध्युत्प्रेक्षितेर्थे इत्यन्ये । कुत्सित स्मयन कुस्मयनम् । कुस्मयते प्रकुस्मयते आकुस्मयते । क्ये कुस्म्यते । धातोरनेकस्वरेत्या-

280. बुक्कण् दर्शने । बुक्कयति । णिजभावेऽप्यदन्तत्वार्थोऽस्य पाठः । तेनानेकस्वरत्वाण्यद् न भवति । एवं मूत्रिरूक्षिमर्विप्रभृतीनां पाठे प्रयोजनमुन्नेयम् । अनदन्ता एवैते इत्येके ॥

अथ खान्तौ ॥

281. सुख 282 दुःखण् तत्क्रियायाम् । सुखनं दुःखनं च तत्क्रिया । सुखयति असुसुखत् । अचि सुखम् । दुःखयति । अचि दुःखम् ॥

अथ गान्तः ॥

283. अङ्गण् पदलक्षणयोः । अङ्गयति । सनि आञ्जिगयिषति । अस्यापि पूर्वाचार्यानुरोधेनादन्तेषु पाठः ॥

अथ घान्तः ॥

284. अघण् पापकरणे । अघयति । सनि अजिघयिषति ॥

अथ चान्तौ ॥

285. रचण् प्रतियत्ने । रचयति रचयां चकार । अररचत् । णिवेत्तीत्यने रचना ॥

286. सूचण् पैशून्ये । सूचयति । अपोपदेशत्वात्षत्वाभावे असुसूचत् । अत्यर्तीति यङि सोसूच्यते । स्मिप्रभृतिभिः साहचर्यादेकस्वराणामेव हि षोपदेशस्मृतिः । अत एव सूत्रसत्रसंग्रामसामसभाजस्थूलस्तनस्तेनस्तोमसुखानामषोपदेशत्वात् सोसूच्यते सिसत्रयिषते इत्यादौ ■ षत्वम् । णके सूचकः । अचि सूचः । गौरादित्वाङ्ङ्याम् सूचयति सूत्रमार्गमिति सूची । नाम्नि पुंसि चेति णके भीरष्ठानादित्वात्षत्वे विपूचिका । उणादौ षक्तमीप्सेति मे निपातनात् सूक्ष्मः ३४६ । पुत्रादय इति त्रे निपातनात् सूत्रम् ४४९, ४५५ । स्वरेभ्य इत्यौ सूचिः [ ६०६ ] ॥

अथ जान्ताश्चत्वारः ॥

287. भाजण् पृथक्कर्माणि । भाजयति विभाजयति अबभाजत् । क्ते भाजितम् । क्त्वो यपि विभाज्य ॥

288. सभाजण् प्रीतिसेवनयोः । प्रीतिदर्शनयोरित्यन्ये । सभाजयति । क्ये सभाज्यते । ङे अससभाजत् । अनटि सभाजनम् ॥

289. लज 290 लजुण् प्रकाशने । लजयति अललजत् ॥

290. लजु । उदित्त्वाञ्ने लञ्जयति । लजुण् भासार्थः । लञ्जयति । लज लजु भर्त्सने । लजति । लञ्जति ॥

अथ टान्ताः सप्त ॥

291. कूटण् दाहे। आमन्त्रणेपीत्येके। कूटयति। डे अचुकूटत्। अचि कूटम्॥

292. पट 293 वटण् ग्रन्थे। ग्रन्थो वेष्टनम्। पटयति रज्जुम् वेष्टयतीत्यर्थः। एवं वटयति। विभाजनेप्ययमित्यन्ये। डे अपपटत्। अववटत्। पट गतौ। पटति। पटण् भासार्थः। पाटयति। वट वेष्टने। वटति। णिगि परिभाषणे। घटादित्वाद्ध्रस्वे वटयति। वटुण् विभाजने। वण्टयति॥

294. खेटण् भक्षणे। खेटयति। डे अचिखेटत्। णके खेटकं फलकः। अलि खेटो ग्रामः। णिवेत्तीत्यने आखेटना। नायं खेटः खेड इति देवनन्दी। खेडयति। खिट उत्त्रासे। खेटति अचीखिटत्॥

295. खोटण् क्षेपे। खोटयति। डे अचुखोटत्। अलि खोटः। डान्तोयमिति देवनन्दी। खोडयति। दान्त इत्यन्ये खोदयति॥

296. पुटण् संसर्गे। पुटयति। डे अपुटत्। पुटत् संश्लेषणे। पुटति। पुटण् भासार्थः। पोटयति॥

297. वटुण् विभाजने। उदित्त्वाद्वे वण्टयति। वण्टापयतीत्यप्येके। वटु विभाजने। वण्टति॥

अथ ठान्तौ॥

298. शठ 299 श्वठण् सम्यग्भाषणे। शठयति। श्वठयति। डे अशशठत् अशश्वठत्। शठ कैतवे च। शठति। णिगि शाठयति। शठ श्वठ श्वठुण् संस्कारगत्योः। शाठयति। श्वाठयति। श्वण्ठयति॥

अथ डान्तः॥

300. दण्डण् दण्डनिपातने। दण्डयति। दण्डादेर्नाम्नो णिचि दण्डयत्यादिसिद्धौ दण्डण्प्रभृतीनां पाठो यथाभिधानं णिचं विनापि प्रयोगार्थः। अत एवादन्तत्वमप्यनेकस्वरकार्यार्थं फलवत्॥

अथ णान्ता अष्टौ॥

301. व्रणण् गात्रविचूर्णने। व्रणयति। डे अवव्रणत्। अचि व्रणः। व्रण शब्दे। व्रणति। णिगि व्राणयति॥

302. वर्णण् वर्णक्रियाविस्तारगुणवचनेषु। वर्णक्रिया वर्णनं वर्णकरणं वा। कथां वर्णयति सुवर्णं वर्णयति। विस्तारे वर्णनेयम्। गुणवचनं स्तुतिः शुक्लाद्युक्तिर्वा। राजानमुपवर्णयति। नाम्नि पुंसि चेति णके वर्णकः॥

303. पर्णण् हरितभावे । पर्णयति । अपि पर्णम् ॥

304. कर्णण् भेदे । कर्णयति आकर्णयति ॥

305. तूणण् संकोचने । वितूणयति मुखम् । ङे व्यतुतूणत् । तूण तुणण् संकोचने । असमानलोपित्वादुपान्त्यस्येति ह्रस्वे अतुतुणत् ॥

306. गणण् संख्याने । गणयति । ङे ईश्च गण इति पूर्वस्यात्वे ईति च अजगणत् अजीगणत् । णके गणकः । कर्मजा तृचा चेति प्रतिषिद्धोपि पत्तिरथाभ्यामिति षष्ठीसमासः पत्तिगणकः रथगणकः । स्त्रियामपि गणयति धनागममिति गणिका । अलि गणः । णिवेत्तीत्यने गणना ॥

307. कुण 308 गुण 309 केतण् आमन्त्रणे । आमन्त्रणं गूढोक्तिः । कुणयति । गुणयति । ङे अचुकुणत् । अजुगुणत् । कुणत् शब्दोपकरणयोः । कुणति । णिगि ङे अचूकुणत् ॥

अथ तान्तास्त्रयः ॥

309. केत । केतयति संकेतयति । ङे अचिकेतत् । क्ते केतितः । क्त्वो यपि संकेत्य । अयं निभाषणनिमन्त्रणयोरपीत्येके ॥

310. पतण् गतौ वा । वाशब्दो णिजदन्तत्वयोर्युगपद्विकल्पार्थः । पतयति । ङे अपपतत् । शीङ्श्रद्धेत्यालावामन्तेति णेरयि पतयालुः पतयालुः । पक्षे पतति । व्यञ्जनादेरिति वा वृद्धौ अपातीत् अपतीत् । पत्लृ गतौ । पतति अपप्तत् ॥

311. पातण् गतिसुखसेवनयोः । सुखसेवनयोरित्येके । पातयति । ङे अपपातत् । नायं पातः किं तु वा इत्येके । वापयति निर्वाप्य गतः । वांक् गतिगन्धनयोः । वाति ॥

अथ थान्तौ ॥

312. कथण् वाक्यप्रबन्धे । वाक्यप्रतिबन्धे इत्यन्ये । प्रतिबन्धो विच्छेदोदीरणात् । वदने इत्यपरे । कथयति । ङे अचकथत् । णके कथकः । भीषिभूषी-त्यङि कथा । पुंनाम्नीत्याधारे घे आगत्य कथ्यतेस्मिन्निति आस्कथः । सर्वत्वादित्वात्सोन्तः । क्त्वो यपि लघोरिति णेरयि संकथय्य । कथमचीकथत् । भुवि दारिव्यसंपन्नं यत्त्वं सान्त्वमचीकथ इति प्रयोगं दृष्ट्वा ये गणयतेरन्यस्यापि पूर्वस्येत्वमिच्छन्ति तन्मते भविष्यति प्रकृत्यन्तरं वान्वेष्यम् ॥

313. श्रथण् दौर्बल्ये । श्रथयति । श्राकिटादिरित्याद्यत्वे श्रथयति । ङे अशश्रथत् । श्रथण् मतिदौर्बल्ये । श्राथयति । श्रथण् बन्धने च । युजादेर्नेति वा णिचि श्राथयति श्रथति । श्रथुङ् शैथिल्ये । श्रन्थते ॥

अथ दान्तौ ॥

314. छेदण् द्वैधीकरणे। छेदयति। डे अचिच्छेदत्। क्ते छेदितम्। क्तो यपि विच्छेद्य ॥

315 गदण् गर्जे। गर्जो मेघशब्दः। गदयति। डे अजगदत्। गद व्यक्तायां वाचि। गदति। णिगि गादयति। डे अजीगदत् ॥

अथ धान्तः ॥

316. अन्धण् दृष्ट्युपसंहारे। अन्धयति। सनि न बदनमिति नस्य द्वित्वप्रतिषेधाद्देरेव द्वित्वे अन्दिधयिषति ॥

अथ नान्ताश्चत्वारः ॥

317. स्तनण् गर्जे। गर्जो मेघशब्दः। स्तनयति। ङ अतस्तनत्। अथोपदेशत्वात्त्वाभावे तिस्तनयिषति। उणादौ हषिपुषीतीन्वौ स्तनयित्नुः गदयित्नुश्च मेघः ७९७। स्तन शब्दे। स्तनति। णिगि शब्दादन्यत्र न घटादिरयम् स्तानयति ॥

318. ध्वनण् शब्दे। ध्वनयति। डे अदध्वनत्। ध्वन शब्दे। ध्वनति। णिगि शब्दादन्यत्र घटादित्वाभावे ध्वानयति ॥

319. स्तेनण् चौर्ये। स्तेनयति। डे अथोपदेशत्वात्त्वाभावे अतिस्तेनत्। अचि स्तेनः ॥

320. ऊनण् परिहाणे। ऊनयति। डे मा भवानूनिनत्। अचि ऊनः। क्ते ऊनितम् ॥

अथ पान्तास्त्रयः ॥

321. कृपण् दौर्बल्ये। कृपयति। डे अचकृपत्। नन्द्यादित्वादने कृपणः। स्त्री चेत् कृपणा। मृगयेति निपातनादनापवादेऽटि कृपा। कृपौङ् सामर्थ्ये। कल्पते। कृपण् अवकल्कने। कल्पयति ॥

322. रूपण् रूपक्रियायाम्। रूपक्रिया राजमुद्रादिरूपस्य करणम्। रूपयति। णके रूपकम्। अलि रूपम्। णिवेत्तीत्यने रूपणा। रूपदर्शनं वा रूपक्रिया। निरूपयति निरूपणा ॥

323 क्षप 324 लाभण् प्रेरणे। क्षपयति। अचि क्षपा ॥

अथ भान्तः ॥

324. लाभण्। लाभयति। डे अललाभत्। अध्यानि वा लाभः। लभगिति लभ्या। लभितम् विलभना। डुलभिष् प्राप्तौ। लभते। णिगि लम्भयति ॥

अथ मान्ताः पञ्च ॥

325. भामण् क्रोधे । भामयति । ङे अबभामत् । भामि क्रोधे । भामते । णिगि ङे अबीभमत् ॥

326. गोमण् उपलेपने । गोमयति भूमिम् । ङे अजुगोमत् । उणादौ गय-हृदयेति निपातनादये गोमयं गोशकृत् [ ३७० ] ॥

327. सामण् सान्त्वने । सान्त्वनं प्रीणनम् । सामयति अससामत् । अपो-पदेशत्वात्षत्वाभावे सिसामयिषति ॥

328. श्रामण् आमन्त्रणे । श्रामयति । ङे अशश्रामत् ॥

329. स्तोमण् श्लाघायाम् । स्तोमयति । ङे अतुस्तोमत् । अलि स्तोमः । ज्योतिरायुर्भ्यामिति षत्वे अग्निष्टोमः ॥

अथ यान्तः ॥

330 व्ययण् वित्तसमुत्सर्गे । वित्तसमुत्सर्गस्त्यागः । गतावित्येके । व्यय-यति । ङे अवव्ययत् । अलि व्ययः । व्ययी गतौ । व्ययते व्ययति अव्ययीत् । णिगि व्याययति । वित्तेति धात्वन्तरमित्येके । वित्तयति वित्तितः वित्तयित्वा ॥

अथ रान्तास्त्रयोदश ॥

331. सूत्रण् विमोचने । विमोचनं मोचनाभावः ग्रन्थनमिति यावत् । सूत्रय-ति । ङे असुसूत्रत् । अट्यर्तीति यङि सोसूत्र्यते । अलि सूत्रम् । हेतुतच्छीलेत्यत्र सूत्रस्य वर्जनात्कर्मणोऽणि सूत्रकारः ॥

332. मूत्रण् प्रस्रवणे । मूत्रयति । ङे अमुमूत्रत् । अट्यर्तीति यङि मोमूत्र्यते ॥

333. पार 334 तीरण् कर्मसमाप्तौ । पारयति अपपारत् । अलि पारम् । साहिसातीति शे पारयः । क्ते पारितम् । णिवेत्तीत्यने पारणा ॥

334. तीर । तीरयति । ङे अतितीरत् । अच्यलि वा तीरम् ॥

335. कत्र 336 गात्रण् शैथिल्ये । कत्रयति । ङे अचकत्रत् । क्ते कत्रि-तः । अयं कर्त्रणित्येके । कर्त्रयति कर्त्रितम् । नन्द्रस्तु कर्तृणिति कर्तितं मन्यते । कर्तयति । कत्यणिति देवनन्दी । कत्ययति ॥

336 गात्र । गात्रयति । ङे अजगात्रत् ॥

337. चित्रण् चित्रक्रियाकदाचिद्दृष्ट्योः । चित्रयति आलेख्यं करोति कदाचि-त्पश्यति वेत्यर्थः । चैत्रिष्यकरणार्थोऽयं न चित्रक्रियार्थ इत्यन्ये । मन्यते चित्रयति चैत्रिष्य सपादयति कदाचित्पश्यति वेत्यर्थः । क्ते चित्रितम् । णिवेत्तीत्यने चित्रणा ॥

338. छिद्रण् भेदे। छिद्रयति। डे अचिच्छिद्रत्। अचि छिद्रम्॥

339. मिश्रण् संपर्चने। संपर्चनं श्लेषः। मिश्रयति। डे अमिमिश्रत्। अचि मिश्रः॥

340. वरण् ईप्सायाम्। वरयति कन्याम्। डे अववरत्। अचि वरः॥

341. स्वरण् आक्षेपे। स्वरयति। डे अससरत्। आक्षेपादन्यत्र औस्वृ शब्दोपतापयोः। स्वरति। णिगि स्वारयति॥

342. शारण् दौर्बल्ये। तालव्यादिः। शारयति। डे अशशारत्। शारेति नन्दी। अशशारत्॥

343. कुमारण् क्रीडायाम्। कुमारयति। डे अचुकुमारत्। अचि कुमारः। कुत्सितो मारोऽस्येति कमेरत उच्चेस्थारे कमतेर्वा [ उणादौ ४०९ ]। लान्तोऽयमित्येके कुमालयति॥

अथ लान्ताः पञ्च॥

344. कलण् संख्यानगत्योः। कलयति। डे अचकलत्। कलि शब्दसंख्यानयोः। कलते। णिगि कालयति। कलण् क्षेपे। कालयति गाः॥

345. शीलण् उपधारणे। उपधारणमभ्यासः परिचयो वा। शीलयति। डे अशिशीलत्। अलि शीलम्। शील समाधौ। शीलति। णिगि डे अशीशिलत्॥

346. वेल 347 कालण् उपदेशे। वेलयति। डे अविवेलत्। अचि वेला। वेलृ चलने। वेलति॥

347. काल। कालयति। डे अचकालत्। कालोपदेश इत्यर्थनिर्देश इत्येके॥

348. पल्यूलण् लवनपवनयोः। पल्यूलयति क्षेत्रं सबुसधान्यं वा। डे अपपल्यूलत्। पल्पूलेत्येके। वल्यूलेत्यन्ये। पप्पूलेत्यपरे॥

अथ शान्तः॥

349. अंशण् समाघाते। समाघातो विभाजनम्। अंशयति रिक्थम्। अलि अंशः। चन्द्रो दन्त्यान्तमाह। व्यंसयति मयूरव्यंसकः॥

अथ पान्तास्त्रयः॥

350. पपण् अनुपसर्गः। पप इत्ययं धातुरनुपसर्गोऽदन्तो णिचमुत्पादयति। पपयति अपपपत्। गत्यर्थोऽयमित्येके। अनुपसर्ग इति किम्। प्रपपति। पर्श बाधनस्पर्शनयोः। पपते पपति। पषण् बन्धने। पाषयति। तालव्यान्तोऽयमित्येके। कौशिकस्तु तालव्यान्तमधीत्य व्याचष्टे पशेति धातुर्यां निर्देशात् ष्यादिभुरादि-

भानुपसर्गेशुरादिरदन्तः पशयति । अनुपसर्ग इति किम् । प्रपशति । तालव्यान्त एव थादन्त इत्यन्ये । पशयति पाशयति ॥

351. गवेषण् मार्गणे । गवेषयति । डे अजगवेषत् । अनटि गवेषणम् ॥

352. मृषण् क्षान्तौ । क्षान्तिस्तितिक्षा । मृषयति । डे अममृषत् । अनटि मृषणम् । मृषींच् तितिक्षायाम् । मृष्यते मृष्यति । मृषिण् तितिक्षायाम् । युजादेरिति वा णिनि मर्षयति मर्षते ॥

अथ सान्तास्त्रयः ॥

353. रसण् आस्वादनस्नेहनयोः । रसयति । डे अररसत् । अलि रसः । उणादौ व्यासिरसीत्यने रसना २६१ । रस शब्दे । रसति । णिगि रासयति । घञि रासः ॥

354. वासण् उपसेवायाम् । वासयति । डे अववासत् । णके वासकः । णिवेत्तीत्यने वासना । वसं निवासे । वसति । वसिक् आच्छादने । वस्ते । वसण् स्नेहादौ । वासयति । डे अवीवसत् ॥

355. निवासण् आच्छादने । निवासयति । डे अनिनिवासत् । सनि निनिवासयिषति । क्त्वि निवासयित्वा । वासण् उपसेवायाम् । निपूर्वस्य डे न्यववासत् । क्त्वो यपि निवास्य ॥

अथ हान्ताः पञ्च ॥

356. चहण् कल्कने । कल्कनं दम्भः । चहयति । डे अचचहत् । ञिणम्परे णिचि चहणः शाठ्ये इति वा दीर्घे अचाहि अचहि चाहं चाहम् चहं चहम् । युवर्णेत्यलि चिचहः । चह कल्कने । चहति । णिगि चाहयति । डे अचीचहत् ॥

357. महण् पूजायाम् । महयति । डे अममहत् । पुंनाम्नीत्याधारे घे महः उत्सवः । गौरादित्वाङ् ङ्याम् मही । मह पूजायाम् । महति । उणादौ महेर्णिद्वेतीने महिनं राज्यम् । ण्वादेस्तु माहिनं तदेव २८६ । श्रुदक्षीत्याय्ये आमन्नेति णेरयि महयाय्योऽश्वमेधः ३७३ । मसिवहिभ्यां टिदित्यीये महिषः महिषी ५४७ । स्वरेभ्य इति इः महिः [ ६०६ ] । द्रुन्निवृहीति कतरि महान् ८८४ ॥

358. रहण् त्यागे । रहयति । डे अररहत् । अलि विरहः । रह त्यागे । रहति । णिगि राहयति ॥

359. रहुण् गतौ । उदित्वान्ने रंहयति । अदन्तत्वबलादत इति लुक् वाधित्वानुपान्त्यस्याप्यतो ञ्णिनीति वृद्धावर्तिरीति पौ रंहापयति । रहु गतौ । रंहति ॥

360. स्पृहण् ईप्सायाम्। स्पृहेर्व्याप्यं वेति व्याप्यस्य वा संप्रदानत्वे पुष्पेभ्यः स्पृहयति। अकर्मकत्वाद्गत्यर्थेति कर्तरि क्ते पुष्पेभ्यः स्पृहितो मैत्रः। पक्षे पुष्पाणि स्पृहयति। कर्मणि क्ते पुष्पाणि स्पृहितानि मैत्रेण। डे अपस्पृहत्। शीङ्श्रद्धेत्यालावामन्तेति णेरयि स्पृहाशीलः स्पृहयालुः। भीषिभूषीत्यङि स्पृहा। उणादौ भुङ्क्षीत्याय्ये स्पृहयाय्यं घृतम् ३७२॥

अथ क्षान्तः॥

361. रूक्षण् पारुष्ये। रूक्षयति। डे अरुरूक्षत्। अचि रूक्षः। अनटि विरूक्षणम्। क्त्वो यपि विरूक्ष्य॥

अथादन्तेष्वेव कुहणिमभिव्याप्यात्मनेपदिनः। तत्र गान्तः॥

362. मृगणि अन्वेषणे। इदित्वादिङित इत्यात्मनेपदे मृगयते। मृगयेच्छेति तौ निपातनात् मृगया। क्ते मृगितम्॥

अथ थान्तः॥

363. अर्थणि उपयाचने। अर्थयते। पूर्वाचार्यानुरोधाददन्तेष्वस्य पाठः। एवं मन्त्रिगर्व्योरपि। केचित्त्वदन्तपाठबलादतो लुकं बाधित्वानुपान्त्यस्यापि ञ्णितीति वृद्धावर्तिरीति पौ अर्थापयते मन्त्रापयते गर्वापयते इत्याहुः। डे आर्तियत। सनि अर्तिथयिषते। क्ते अर्थितम्। अचि अर्थः। णिवेत्यास्यने प्रार्थना॥

अथ दान्तः॥

364. पदणि गतौ। पदयते। डे अपपदत्। पदिंच् गतौ। पद्यते। णिगि उपपादयति॥

अथ मान्तः॥

365. संग्रामणि युद्धे। संग्रामयते शूरः। असंग्रामयत। सन्यङोपदेशात्वात्सस्याभावे सिसंग्रामयिषते। अचि पुंनाम्नीत्याधारे घे वा संग्रामः। क्त्वि संग्रामयित्वा। अयं परस्मैपदीत्येके। संग्रामयति॥

अथ रान्तावयः॥

366. शूर 367 वीरणि विक्रान्तौ। शूरयते। डे अशुशूरत्। अचि शूरः। शूरैच् स्तम्भे। शूर्यते। णिगि डे अशुशूरत्।

367. वीर। वीरयते। डे अविवीरत्। अचि वीरः। य एचेति भावे ये वीर्यम्॥

368. सत्रणि संदानक्रियायाम्। संतानक्रियायामित्येके। सत्रयते शत्रून्। डे अससत्रत्। सन्यपोपदेशत्वात्षत्वाभावे सिसत्रयिषते॥

अथ लान्तः॥

369. स्थूलणि परिबृंहणे। परिबृंहणं पीनत्वम्। स्थूलयते। डे अतुस्थूलत्। सन्यपोपदेशत्वात्षत्वाभावे तुस्थूलयिषते। अचि स्थूलः॥

अथ वान्तः॥

370. गर्वणि माने। गर्वयते। डे अजगर्वत्। अलि गर्वः। गर्व दर्पे। गर्वति॥

अथ हान्तौ॥

371. गृहणि ग्रहणे। गृहयते। डे अजगृहत्। शीङ्श्रद्धेत्यालौ गृहयालुः। क्ते गृहितम्॥

372. कुहणि विस्मापने। कुहयते। डे अचुकुहत्। णके कुहकः। भिदादि कुहा नाम नदी। णियेत्तीत्यने कुहना दम्भः। उणादौ मिवमीत्युके कुहकमाश्चर्यम् ६१। पृकाहपीति किदुः कुहुर्नष्टचन्द्रामावास्या ७२९। नृतिशृधीति किदूः कुहूः सैव ८४४॥ अथसिता अदन्ताः॥

अथ विकल्पितणिचो युजादयः॥

373. युजण् संपर्चने। युजादेरिति वा णिचि योजयति। पक्षे न्याय्यविकरणः शव् योजति। युजिंच् समाधौ। युज्यते। युजूंपी योगे। युङ्क्ते युनक्ति। इह युजादीनां नियतो णिज्विकल्पश्चुरादीनां तु यथादर्शनं णिजनित्य इत्युक्तमेव॥

अथेदन्तास्त्रयः॥

374. लींण् द्रवीकरणे। लियो नोन्त इति नेन्ते घृतं विलीनयति। पक्षे नामिन इति वृद्धौ विलाययति। लीङ्लिनोर्वेत्यात्वमस्यापीत्येके। तन्मते वात्वे लो ल इति वा लेन्ते घृतं विलालयति। पक्षेर्तिरीति पौ विलापयति। लीङ्लिनोर्वेत्यात्मनेपदमात्वं चास्यापि णिच्यपीत्येके कस्त्वामुल्लापयते आलापयते अपलापयते। णिजभावे विलयति लयति। लींङ्च् श्लेषणे। लीयते। लींश् श्लेषणे। लिनाति॥

375. मींण् मतौ। मतिर्मननम्। गत्याविलन्ये। माययति मयति। मींङ्च् हिंसायाम्। मीयते। मींग्श् हिंसायाम्। मीनाति मीनीते॥

376. प्रीगण् तर्पणे। णित्त्वस्य णिजभावे फलवत्कर्तर्यात्मनेपदार्थत्वाण्णिचि धूग्प्रीगोरिति नेन्ते शेषादिति परस्मैपदे प्रीणयति। क्र्यादेरेव नमिच्छन्त्येके। तन्मते नामिन इति वृद्धौ प्राययति। पक्षे प्रयते प्रयति। प्रींङ्च् प्रीतौ। प्रीयते। प्रींग्श् तृप्तिकान्त्योः। प्रीणीते प्रीणाति॥

अथ ऊदन्तः॥

377. धूगण् कम्पने। धूग्प्रीगोरिति ने धूनयति। नं नेच्छन्त्येके धावयति। पक्षे णित्त्वात्फलवत्कर्तर्यात्मनेपदम्। अन्यत्र तु शेषादिति परस्मैपदम् धवते धवति। धूग्ट् कम्पने। धूनुते धूनोति। धूत् विधूनने। धुवति। धूग्श् कम्पने। धुनीते धुनाति॥

अथ ऋदन्तः॥

378. वृग्ण् आवरणे। वारयति। पक्षे णित्त्वादुभयपदे वरते वरति। वृग्ट् वरणे। वृणुते वृणोति। वृङ्श् संभक्तौ। वृणीते॥

अथ ॠदन्तः॥

379. जॄण् वयोहानौ। जारयति। णिवेत्त्यासेति जारणा। पक्षे जरति। ज्ञीति नन्दौ। ज्ञाययति ज्ञयति। जॄष् जरसि। जीर्यते। जॄश् वयोहानौ। जृणाति।

अथ कान्तौ॥

380. चीक 381 शीकण् आमर्षणे। चीकयति चीकति॥

381. शीकिस्तालव्यादिः। शीकयति शीकति। ङे अशीशिकत्। शीकृङ् सेचने। शीकते। णिगि ङे ऋदित्वाद्ध्रस्वाभावे अशिशीकत्॥

अथ गान्तः॥

382. मार्गण् अन्वेषणे। मार्गयति मार्गति अममार्गत्॥

अथ चान्ताभरतारः॥

383. पृचण् संपर्चने। संपर्चयति संपर्चति। यङि परीपृच्यते। पृचैङ् संपर्चने। संपृक्ते। पृचैप् संपर्के। संपृणक्ति॥

384. रिचण् वियोजने च । चकारात्संपर्चने । रेचयति रेचति । रिचूंपी विरेचने । रिङ्क्ते रिणक्ति ॥

385. वचण् भाषणे । संदेशने इत्येके । वाचयति वचति । यजादीत्यत्र यौजादिकस्याग्रहणाद् य्वृदभावे क्ये वच्यते । ङे अवीवचत् । वचंक् भाषणे । वक्ति । क्ये उच्यते ॥

386. अर्चिण् पूजायाम् । अर्चयति । पक्षे इदित्त्वादात्मनेपदे शवि अर्चते । अर्च पूजायाम् । अर्चति ॥

अथ जान्तौ ॥

387. वृजैण् वर्जने । वर्जयति वर्जति । ऐदित्त्वात् क्तयोर्नेट् अपवृक्तः अपवृक्तवान् । घञि वर्गः । वृजैकि वर्जने । वृक्ते ॥

388. मृजौण् शौचालंकारयोः । मृजोऽस्येति वृद्धौ मार्जयति । णिवेत्तीत्यने मार्जना । क्ते सेट्क्तयोरिति णेर्लुकि मार्जिता रसाला । मर्जितेति रूढेः । पक्षे मार्जति । औदित्त्वाद्वेट् मार्जिता मार्ष्टा । वेट्त्वात् क्तयोर्नेट् मृष्टः मृष्टवान् । मृजौक् शुद्धौ । मार्ष्टि ॥

अथ ठान्तः ॥

389. कठुण् शोके । उदित्त्वान्ने कण्ठयति उत्कण्ठति । कठुङ् शोके । कण्ठते उत्कण्ठते ॥

अथ थान्ताश्चत्वारः ॥

390. श्रन्थ 391 ग्रन्थण् संदर्भे । संदर्भो बन्धनम् । श्रन्थयति श्रन्थति । ग्रन्थयति ग्रन्थति । श्रथुङ् शैथिल्ये । श्रन्थते । ग्रथुङ् कौटिल्ये । ग्रन्थते । श्रन्थश् मोचनप्रतिहर्षयोः । श्रथ्नाति । ग्रन्थश् संदर्भे । ग्रथ्नाति ॥

392. क्रथ 393 आर्दिण् हिंसायाम् । क्राथयति चौरस्योत्क्राथयति क्रथति । क्रथ हिंसार्थः । णिगि घटादित्वाद्ध्रस्वे चौरमुत्क्रथयति ॥

अथ लाघवार्थं थान्तमध्ये एवार्थानुगुण्येन दान्तः ॥

393. आर्दि । इदित्त्वादस्य णिजभावे आत्मनेपदे न सार्थकत्वाण्णिनि दोषादिति परस्मैपदे अर्दयति अर्दते । परस्मैपदयमित्येके । अर्दति । अर्द गतियाचनयोः । अर्दति ॥

394. श्रथण् बन्धने च । चकाराद्धसायाम् । मोक्षणे इत्येके । श्राथयति श्रथति । अयं श्रन्थण् हिंसार्थ इत्यन्ये । श्रन्थयति श्रन्थति ॥

अथ दान्ताश्चत्वारः ॥

395. वदि भाषणे । संदेशने इत्यन्ये । वादयति संवादयति । पक्षे इदित्त्वादात्मनेपदे वदते । क्ये वद्यते । वद व्यक्तायां वाचि । वदति । यजादित्वाद् उद्यते उद्यते ॥

396. छदण् अपवारणे । छादयति छदति । छदण् संवरणे । ऊर्जने घटादित्वाद्ध्रस्वे छदयति ॥

397. आङः सदण् गतौ । आङः परः सद इत्ययं धातुर्गत्यर्थे युजादिः । आसादयति आसीदति । आसदतीत्येके । अनुस्वारेत्वात्सेडित्यन्ये आसत्ता आसात्सीत् । आङोऽन्यत्र सीदति । गतेरन्यत्र सीदति । षद्लृ विशरणादौ । असदत् ॥

398. छृद संदीपने । छर्दयति छर्दति । कृतचृतेत्यत्र तृदसाहचर्येण रुधादेरेव ग्रहणात्सादाविड्विकल्पाभावे छर्दिष्यति । ऐदिदयमित्येके । डीयश्वीति क्तयोर्नेट् छृण्णः छृण्णवान् । उछृदृपी दीप्तिदेवनयोः । छृन्ते छृणत्ति ॥

अथ धान्तः ॥

399. शुन्धिण् शुद्धौ । शुन्धयति शुन्धते । अणिदिदित्येके शुन्धति । क्ते शुन्धितम् । शुधंच् शौचे । शुध्यति ॥

अथ नान्तौ ॥

400. तनूण् श्रद्धाघाते । श्रद्धोपकरणयोरित्यन्ये । तानयति तनति । क्त्वि ऊदित्त्वादिट्ट् तान्त्वा तनित्वा । वेट्त्वात् क्तयोर्नेट् नितान्तः नितान्तवान् । तन्व्यर्थाति णे तानः श्रद्धाहीनो जनः । तनूयी विस्तारे । तनुते तनोति । क्ते ततः । उपसर्गाद्दैर्घ्ये । उपसर्गपूर्वस्तनू दैर्घ्यार्थे युजादिः । आतानयति वितानयति प्रतानयति आतनति वितनति प्रतनति । अन्यत्र तनोति । तन श्रद्धोपहिंसनयोरिति चान्द्रं पारायणम् ॥

401. मानण् पूजायाम् । मानयति मानति । अयं मनणित्येके मानयति मनति । मानि पूजायाम् । मीमांसते ॥

अथ पान्तास्त्रयः ॥

402. तपिण् दाहे । तापयति । पक्षे इदित्त्वादात्मनेपदे तपते । तपं संतापे । तपति । तपिंच् ऐश्वर्ये वा । तप्यते ॥

403. तृपण् प्रीणने। संदीपने इत्येके। तर्पयति तर्पति। क्ते तृपितम्। अयं चृतण् छृपण् संदीपने इत्येके। चर्तयति चर्तति। छर्पयति छर्पति। दृपौच् हर्ष-मोहनयोः। दृप्यति। तृपौच् प्रीतौ। तृप्यति। तृपट् प्रीणने। तृप्नोति॥

404. आप्लृण् लम्भने। लम्भनं प्राप्तिः। आपयति आपति। लृदित्त्वादङि आपत्। क्ते आपितम्। यात्प्रोरिति थपि णेर्लोपस्यापीत्येके प्रापय्य प्राप्य वा गतः। आप्लृंट् व्याप्तौ। आप्नोति॥

अथ भान्तः॥

405. दृभैण् भये। दर्भयति दर्भति। ऐदित्त्वात् क्तयोर्नेट् दृब्धः दृब्धवान्। दृभैत् ग्रन्थे। दृभति॥

अथ रान्तः॥

406. ईरण् क्षेपे। गतावित्येके। क्षेपः प्रेरणम्। ईरयति ईरति। ईरिङ् गति-कम्पनयोः। ईर्ते॥

अथ यान्ताभल्याः॥

अथ सान्तः ॥

411. हिंसुण् हिंसायाम्। उदित्त्वान्ने हिंसयति हिंसति। हिंसृप् हिंसायाम्। हिनस्ति ॥

अथ हान्तौ ॥

412. गर्हण् विनिन्दने। गर्हयति गर्हति। गर्हि कुत्सने। गर्हते ॥

413. षहण् मर्षणे। षः स इति सत्वे साहयति।

सहति कलभेभ्यः परिभवम् ॥

षहि मर्षणे। सहते ॥

बहुलमेतन्निदर्शनम्। यदेतद्भवत्यादिधातुपरिगणनं तद्बाहुल्येन निदर्शनत्वेन ज्ञेयम्। तेनापठिता अपि क्रुविप्रभृतयो लौकिकाः स्तम्भूमभृतयः सौत्राश्चुलुम्पादयश्च वाक्यकरणीया धातव उदाहार्याः। वर्धते हि धातुगणः। यल्लक्ष्यम्।

मिलन्त्याशासु जीमूता विक्रुवन्ते दिवि महाः।
उपक्षपयति प्रावृट् क्षीयन्ते कामिभिर्महाः ॥ इत्यादि।
मुसलक्षेपहुंकारस्तोभैः कलमखण्डिनि।
कुचविष्कम्भमुत्तम्भविस्कुम्भातीव ते स्मरः ॥
नीपान्दोलयन्नेष प्रेङ्खोलयति मे मनः।
पवनो वीजयन्नाशा ममाशामुच्चुलुम्पति ॥
मावत्सरः प्रखरमुल्ललयां चकार ॥

यद्वा भूवादिगणाष्टकोक्ताः स्वार्थणिजन्ता अपि बहुलं भवन्ति। चुरादिपाठस्तु निदर्शनार्थः। यदाहुः।

निवृत्तप्रेषणाद्धातोः प्राकृतेर्थे णिजिष्यते ॥ लक्ष्यम्।

रामो राज्यमकारयत् ॥

अकरोदित्यर्थः। रञ्जयति वस्त्रम् रजतीत्यर्थः। भेदयति कुन्त्यान् भिनत्तीत्यर्थः। तापयति वाचयति वाहयति घातयति तपति वक्ति वहति हन्तीत्यर्थः। यद्वा प्रयोज्यव्यापारेपि प्रयोक्तृव्यापारानुप्रवेशो णिगं विनापि बुद्ध्यारोपाद्बहुलं भवति।

जजान गर्भं मघवा इन्द्रः ॥

अमीजनदित्यर्थः।

एकं द्वादशधा जज्ञे ॥

जनितमित्यर्थः । षड्भिर्हलैः कृषति कर्षयतीत्यर्थः ।

वान्ति पर्णशुषो वाता वान्ति पर्णमुचोपरे ।
यान्ति पर्णरुहोप्यन्ये ततो देवः प्रवर्षति ॥ इति ।

अथवा नाम्नो णिज् बहुलमित्येव सिद्धेस्तत्र सूत्रच्छिद्रान्धदण्डादय उदाहरणार्थाः। तेनावन्तेष्वनुक्ता अपि बहुलं द्रष्टव्याः । तेन स्कन्ध समाहारे रूप छुरणे स्फुट प्रकटभावे वसं निवासे इत्यादयोपि भवन्ति । तथा ओजयत्योजः ।

तडित्त्वचयतीवाशाः ॥
पांसुर्दिशां मुखमतुत्ययदुत्थितोद्रेः ॥ इति ।

इत्याचार्यश्रीहेमचन्द्रविरचिते स्वोपज्ञधातुपारायणे स्वार्थे णिजन्तो णिघुरादिगणः संपूर्णः ॥ समर्थितं चेदं धातुपारायणमिति ॥

## ROOTS.

[ The roots are arranged in Alphabetical order first of the final and then of the initial letter, etc Those not acknowledged by the author are given between brackets, and the same is done with the figures relating to quotations The Anubandha *n* is represented by न् inserted before the last consonant The Anusvāra and the Visarga have their places fixed between *au* and *k*, *f.* signifies '*in fine*' ]

# ROOTS.

ख्या II, 13
गा गतौ I, 586 ( I, 37)
( गा स्तुतौ III, 14 f )
घ्रा I, 3
ज्ञा अवबोधने IX, 33 ( X, 153 )
ज्ञा मारणादौ X, 153
(ज्या ? I, 881)
ज्या IX, 17
दरिद्रा II, 34
दा दाने I, 7. III, 9 (I, 29,604)
दा लवने II, 12 ( I, 29, 604 )
द्रा II, 8 ( I, 34 )
धा III, 10
ध्मा I, 4
पा पाने I, 2 ( I, 47. II, 9 )
पा रक्षणे II, 9 ( I, 47 )
प्रा II, 14
प्सा II, 2
भा II, 3
मा माने II, 15 (I, 603 IV, 108 f.)
मा मानशब्दयोः III, 8 (I, 603. IV, 103 f. )
म्ना I, 6
या II, 4
रा II, 11 ( I, 38 )
ला II, 10
वा गतिगन्धनयोः II, 5 ( I, 49 X, 311 )
(वा गतिसुखसेवनयो X, 311 )
श्रा I, 1013. II, 7 (I, 46, 1000)
स्था I, 5
स्ना II, 6 ( I, 49 )
हा त्यागे III, 2 ( III, 7 )
हा गतौ III, 7
इ गतौ I, 11 II, 17
इ स्मरणे II, 16 ( I, 11 )
इ अध्ययने II, 46 ( I, 11 )
( कि III, 14 f. )
क्षि क्षये I, 10 ( VI, 17 IX, 34)
क्षि निवासगत्यो VI, 17 ( I, 10 IX, 84 )
क्षि हिंसायाम् IX, 34 (I, 10. V, 26. VI, 17 )
चि V, 5
( चिरि V, 26 )
जि I, 8
( जिरि V, 26 )
ज्रि अभिभवे I, 9
( ज्रि वयोहानौ X, 379 )
धि VI, 16
पि VI, 15
मि V, 4
रि VI, 14
शि V, 3
श्रि I, 883
श्वि I, 997
सि V, 2 IX, 2
स्मि I, 587 ( X, 286 )
हि V, 10
ई IV, 109

घस् I, 66
( चन्ग I, 90 )
शास् I, 60
श्लास् I, 61
सुस् X, 281 (X, 278 f., 286)
अग् I, 1022
अङ्ग् X, 283
अन्ग् I, 83
इन्ग् I, 87
उन्ग् I, 88
( कग् is found in Hem. S'abd. IV, 2, 25 कगेवनू? but styled sautra by the comm
त्रुन्ग् I, 93
तन्ग् I, 80
तिग् V, 17
त्वन्ग् I, 91
मन्ग् I, 85
मार्ग् X, 382
मृग् X, 362
युन्ग् I, 92
रग् शङ्कायाम् I, 1023 ( X, 160 )
रग् आस्वादने X, 159
रन्ग् I, 78
रिन्ग् I, 89
लग् सङ्गे I, 1024 ( X, 160 )
लग् आस्वादने X, 160
लन्ग् I, 79
लिन्ग् गतौ I, 90 ( X, 161 )
लिन्ग् चित्रीकरणे X, 161 ( I, 90 )
वन्ग् I, 84
वल्ग् I, 77
शुन्ग I, 94
श्रन्ग I, 81
श्लन्ग I, 82
षग् I, 1027

ष्ठग् I, 1029
सग् I, 1028
स्थग् I, 1030
स्वन्ग् I, 86
ह्रग् I, 1025
ह्लग् I, 1026
अघ् X, 284
अन्घ् I, 639
( अर्घ I, 564 )
गग्घ I, 95
( घग्घ I, 95 )
( तिघ् V, 18 )
( दघ् V, 26 )
दन्घ् I, 96
द्राघ् I, 644
( मनघ् मण्डने I, 98 )
मन्घ् गत्याक्षेपे कैतवे च I, 641
रन्घ् गतो I, 637 ( X, 203 )
रनघ् भासे X, 202 ( I, 638. X, 176 )
राघ् I, 642
लन्घ् शोषणे I, 98
लन्घ् गतो I, 638 ( I, 98. X, 203 )
लन्घ् भासार्थं X, 203 ( I, 638. X, 176)
लाघ I, 643
वन्घ् I, 640
( [ व ] षघ् V, 16 )
शिनघ I, 97
श्लाघ् I, 645
सघ् V, 18
स्तिघ् V, 28
( अच I, 890 )
अञ्च् पूजायां गतौ च I, 105 ( I, 890. X, 163 )

अञ्च् अव्यक्ते शब्दे गतौ च I, 890
अञ्च विशेषणे X, 163
( अन्च् I, 890 )
अर्च् I, 104 X, 336 ( X, 407 )
उच् IV, 33 (IV, 98 f )
ऋच् VI, 26
कच I, 649
कन्च् I, 650
कुच् शब्दे तारे I, 100
कुच् संपर्चनादौ I, 961 (I, 100. VI, 117)
कुच् संकोचने VI, 117
कुञ्च् I, 102
क्रुञ्च् I, 101
( खच् IX, 49. X, 413 f )
ग्रुच् I, 117
ग्लुच I, 118
ग्लुञ्च I, 115
चञ्च I, 107
( चर्च् परिभाषणे VI, 24 X,162 )
चर्च् अध्ययने X, 162
जर्च् VI, 23
झर्च् VI, 24
तञ्च् गतौ I, 108
तञ्च् संकोचने VII, 12
त्वच् VI, 25
त्वञ्च् I, 109
( पच व्यक्तीकरणे I, 657 )
पच् पाके I, 892 ( II, 34, 45 f )
पन्च व्यक्तीकरणे I, 657 .( X, 13)
पन्च् विस्तारे X, 13 ( I, 657 X, 1 )
पिच् X, 12
पृच् II, 50. VII, 10. X, 383
मच् I, 654
मञ्च् I, 110
मन्च् I, 656 ( I, 110 )
( मर्च X, 21 )
( मुच् कल्कने I, 654 X, 164 )
मुच् मोक्षणे VI, 6 (I, 655. X, 164 )
मुच प्रमोचने X, 164
मुञ्च I, 111
मुन्च् I, 655
म्रुच् I, 113
म्रुञ्च् I, 112
म्लुच् I, 114
याच् I, 891
रच X, 285 ( X, 278 f )
रिच वियेचने VII, 2 ( X, 384 )
रिच संपर्चने° X, 384 (VII, 2
रुच I, 938
लुञ्च I, 103
लोच् दर्शने I, 646 ( X, 204 )
लोच् भासार्थे X, 204 ( I, 646. X, 176 )
वच् II, 38 X, 385 ( 413 f )
वञ्च् गतौ I, 106 ( X, 239 )
वञ्च प्रलम्भने X, 239 ( I, 106 X, 253 )
वर्च् I, 653
विच् VII, 8 ( III, 13 )
वृच् VII, 11
व्यच् VI, 118
व्रस्च् VI, 27
शच् I, 648
शुच् शोके I, 99 ( IV, 138 )
शुच् पूतिभावे IV, 138
श्वच् I, 651
श्वन्च् I, 652
( सच् समवाये I, 340 )
सच सेचने I, 647 ( I, 340 )

( वोज I, 663 X, 126, 113f.)
वृज वर्जने II, 58 X, 367
वृज् वरणे वर्जने वा VII, 11
व्रज गतौ I, 137 (II, 34 X, 24)
व्रज् मार्गणसस्कारगत्या X, 24 ( I, 137. II, 34)
शिनज् II, 55
सञ्ज I, 173
सभाज X, 288 ( X, 286 )
सर्ज I, 148, ( X, 165)
सस्ज I, 138
सृज IV, 112 VI, 35
स्फूर्ज I, 149
(स्वञ्ज परिष्वङ्गे I, 667, MS C)
स्वञ्ज सङ्गे VI, 157
उज्झ VI, 11
झर्झ् VI, 40
अञ I, 194
अट्ट X, 37
अतट् I, 674
इट I, 196
कट् वर्षावरणयो I, 174
कट् गतौ I, 198, 200
कनट I, 199
किट् उत्त्रासे I 177
किट गतौ I, 197
कीट X, 46
कुट कौटिल्ये VI, 112 (X, 240)
कुट प्रतापने X, 240
कुट्ट X, 31
कुनट् I, 201
कुट अप्रमादे X, 234
कुट दाहे X, 291 (X,234)
गट I, 186
गट्ट X, 42
लट I, 178 (X 294)
गुट X, 294
खोट् X, 295
गोष्ट् I, 671
घट चेष्टायाम् I, 1000 ( X, 169, 215 )
घट सघाते X, 169 ( X, 215 )
घट भासार्थ X, 215 ( X, 176 )
घट्ट I, 668 X, 41
घनट् X, 216 ( X, 176 )
घुट् परिवर्तने I, 939
घुट प्रतीघाते VI, 120
चट X, 167 (I, 209 X, 169f)
चिट I, 191
चुट अल्पाभावे I, 203
चुट छेदने VI, 121 X, 28 (I, 203 )
चुट्ट X, 33
चुनट् अल्पाभावे I, 204
चुनट् छेदने X 29 ( I, 203 )
चेट I, 670
छुट VI, 122 X, 30 ( I, 203 )
जट I 181
झट I, 182
तट I, 185
तुट कलहकर्मणि VI, 124
तुट छेदने X, 27 ( I, 203 )
त्रुट VI, 123 X, 235 ( I, 203 )
नट नृत्तौ I, 187 ( I, 1033 X, 26, 216 )
नट नतौ I, 1033 ( I, 187, 1000 X 26 )
नट अवस्यन्दने X, 26 ( I, 187, 1033 )
( नट भासार्थ X, 216 )
पट गतौ I, 195 ( X, 212, 292 )
पट भासार्थ X, 212 ( I, 195 X, 176, 292 )

हेट् I, 193
अठ् I, 227
अन्ठ् I, 681
उठ् I, 218
एठ् I, 675
कठ् I, 216
कन्ठ् I, 678. X, 389
कुन्ठ् I, 224
गुन्ठ् X, 54
पठ् I, 218
पिठ् I, 221
मठ् I, 215
मन्ठ् I, 677
मुन्ठ् I, 679
रठ् I, 212
रुठ् उपघाते I, 219
(रुठ् प्रतीघाते I, 940)
(रुन्ठ् स्तेये I, 207)
रुन्ठ् गतौ I, 228
लुठ् उपघाते I, 220 (I, 228, 942. VI, 128)
लुठ् प्रतीघाते I, 942 (VI, 128)
लुठ् संश्लेषणे VI, 28, ( I, 220, 942 )
(लुन्ठ् स्तेये I, 207 )
लुन्ठ् गतिप्रतीघाते? I, 225
( लुन्ठ् गतौ I, 228)
वठ I, 214
वन्ठ I, 680
(शुन्ठ X, 93)
शठ हिंसासंक्लेशयोः? I, 222 ( X, 49, 256, 298)
शठ संस्कारगत्योः X, 49 (I, 222. X, 298 )
शठ श्लाघायाम् X, 256
शठ सम्यग्भाषणे X, 298 ( I, 222 )
शुठ गतिप्रतीघाते I, 223 (X, 52 )
शुठ आलस्ये X, 52 (I, 223)
( शुन्ठ गतिप्रतीघाते I, 223 )
शुन्ठ् शोषणे I, 226. X, 53.
श्वठ् संस्कारगत्योः X, 50 ( I, 222. X, 299 )
श्वठ् सम्यग्भाषणे X, 299
श्वन्ठ X, 51 ( I, 222. X, 299 )
हठ् I, 217
हेठ विबाधायाम् I, 676 ( IX, 37)
हेठ भूतप्रादुर्भावे IX, 37
अड् उद्यमे I, 253
( अड् व्याप्तौ V, 26 )
अड्ड I, 257
ईड् II, 56. X, 69
ओलन्ड् X, 57
कड VI, 45 ( I, 255 )
कड्ड I, 256
कन्ड् मदे I, 255, 687
कन्ड् भेदे? X, 62 ( I, 687 )
कुड VI, 130
( कुन्ड वैकल्ये I, 201 )
कुन्ड दाहे I, 690 ( VI, 130. X, 63 )
कुन्ड् रक्षणे X, 63 ( I, 690. VI, 130 )
कूड VI, 129
क्रीड I, 243
( क्ष्विड I, 300, 945 )
खड् X, 60
खन्ड् मन्थे I, 688
खन्ड भेदे X, 61 ( I, 688 )
खुन्ड गतिवैकल्ये I, 689
( खुन्ड खण्डने I, 689. X, 62 )
( खेड X, 294 )
खोड प्रतीघाते I, 251
( खोड क्षेपे X, 295 )
गड् I, 1034

स्फुनड् परिहासे X, 56
हिनड् I, 704
हुड् गतौ I, 247
हुड् निमज्जने ( संघाते ) VI, 141
हुनड् I, 683
हूड् I, 248
( हेड् विबाधायाम् I, 193 )
हेड् अनादरे I, 702
हेड् वेष्टने I, 1035 ( I, 702 )
होड् I, 703
हौड् I, 250
हूड् I, 249
अण् शब्दे I, 259
( अण् प्राणने IV, 121 )
ओण् I, 273
कण् शब्दे I, 270 ( I, 1039. X, 170 )
कण् गतौ I, 1038 ( I, 270, 1039. X, 170
कण् निमीलने X, 170
कर्ण् X, 304
कुण् शब्दोपकरणयोः VI, 52 (X, 307)
कुण् आमन्त्रणे X, 307
कूण् X, 257
क्षण् I, 271
गण् X, 306
गुण् X, 308
( क्षण् VIII, 7 )
घिनुण् I, 705
घुण् I, 708. VI, 53 ( I, 709. VI, 54 )
घुलण् I, 706
घूर्ण् I, 709. VI, 54
( घृण् VIII, 7 )
घृनण् I, 707
चण् शब्दे I, 272 ( I, 1040 )
चण् गतौ I, 1040 ( I, 272 )
चुण् VI, 143
चूण् X, 74 ( X, 305 )
चूर्ण् X, 72
तुण् VI, 47.
तूण् संकोचने X, 75, 305
तूण् पूरणे X, 258
द्रुण् VI, 49
घण् I, 267
ध्रण् I, 269
ध्वण् I, 268
पण् I, 710
पर्ण् X, 303
पुण् VI, 50
पूण् X, 77
पृण् VI, 46
पैण् I, 277
फण् I, 1037 ( I, 1000, 1039)
बण् I, 263
भण् I, 264
भ्रण् I, 265
भ्रूण् X, 259
मण् I, 266
मुण् VI, 51
मृण् VI, 48
रण् शब्दे I, 260 ( I, 1039 )
रण् गतौ I, 1039 ( I, 260 )
वण् I, 261
वर्ण् प्रेरणे X, 73
वर्ण् वर्णक्रियादौ X, 302
वेण् I, 898
व्रण् शब्दे I, 262 ( X, 301 )
व्रण् गात्रविचूर्णने X, 301 ( I, 262)
शण् I, 1041
शोण् I, 274
श्रण् I, 1042. X, 76
श्रोण् I, 275
श्लोण् I, 276

अत् I, 279
अन्त् I, 285
( इन्त् I, 285 )
ऋत् I, 287
( कर्त् X, 335 )
कित् निवासे I, 286
( कित् ज्ञाने III, 14 f )
कृत् छेदने VI, 11
कृत् वेष्टने VII, 18 ( VI, 11 )
कूत् X, 82
केत् X, 309
खत् I, 899
चित् संज्ञाने I, 278 ( X, 260 )
चित् संवेदने X, 260 ( I, 278 )
चिन्त् X, 78 (X, 1)
चुत् I, 281
चृत् हिंसाग्रन्थयोः VI, 55
( चृत् संदीपने X, 403 )
च्युत् I, 280
जुत् I, 284, 713
( ज्युत् I, 713 )
द्युत् I, 937 ( I, 713 )
नृत् IV, 9
पत् गतौ I, 962 (IV, 124 X, 310)
पत् गतौ वा X, 310 ( I, 962 )
( पत् ऐश्वर्ये वा IV, 124 )
पुस्त् X, 79
बुस्त् X, 80
मुस्त् X, 81
यत् प्रयत्ने I, 711 (X, 171)
यत् निकारोपस्कारयोः X, 171 (I, 711)
युत् I, 712
वस्त् X, 261 (I, 999)
वात् X, 311
( विस्त् X, 330)

वृत् वर्तने I, 955 ( IV, 113 X 217 )
वृत् वरणे IV, 113 (I, 955)
वृत् भासार्थः X, 217 ( I, 955. X 176 ) ·
श्वित् I, 943
सन्स्त् II, 40
श्चुत् I, 282
श्च्युत् I, 283
स्वर्त् X, 83
अर्थ् X, 363 (X, 278 f )
कत्थ् श्लाघायाम् I, 719
( कत्थ् शैथिल्ये X, 335 )
कथ् X, 312
कुथ् IV, 10
कुन्थ् IX, 42 ( I, 288 )
कुन्थ् I, 288 ( IX, 42 )
क्नथ् I, 1044
क्रथ् I, 1045 X, 392 ( I, 301, 1000 )
क्लथ् I, 1046
क्वथ् I, 964
ग्रन्थ् IX, 41. X, 391 ( I, 718 )
ग्रन्थ् I, 718 ( IX, 41. X, 391 )
( तुत्थ् X, 413 f )
नाथ् I, 716
पथ् I, 963
पन्थ् X, 84
( पर्थ् X, 86 )
( पार्थ् X, 86 )
पुथ् हिंसायाम् IV, 11 (X, 218)
पुथ् भासार्थे X, 218 ( IV, 11. X, 176 )
पुन्थ् I, 289
पृथ् X, 86
प्रथ् I, 1003 X, 87
प्रोथ् I, 900

चन्द् I, 313
चुद् X, 89
(चेद् I, 904)
छद् ऊर्जने I, 1047 (I, 1000. X, 88, 396)
छद् संवरणे X, 88 (I, 1047. X, 396)
छद् अपवारणे X, 396 ( X, 88)
छर्द् X, 92
छिद् VII, 6
छृद् दीप्तिदेवनयोः VII, 8 ( X, 398 )
छृद् संदीपने X, 398
छेद् X, 314
तर्द् I, 305
तुद् VI, 1
तृद् VII, 9
त्रन्द् I, 314
दद् I, 727
नद् अव्यक्ते शब्दे I, 299 (X, 219)
नद् भाषार्थः X, 219 (I, 299. X, 176)
नन्द् I, 312
नर्द् I, 302, 303
निद् I, 905
निन्द् I, 311 (I, 573)
नुद् VI, 56
नेद् I, 906 (I, 644)
(पद् स्थैर्ये I, 295)
पद् गतौ IV, 114. X, 364
पर्द् I, 739
बद् I, 295
बुन्द् I, 901
भन्द् I, 722 ( X, 67 )
भिद् VII, 5 ( X, 413f. )
( मद् ज्ञाप्ये I, 723 )
मद् हर्षग्लपनयोः I, 1048. (I, 1000. IV, 93. X, 241)
मद् हर्षे IV, 93 (I, 1048. IV, 98f. X, 241)
मद् तृप्तियोगे X, 241 (IV, 93)
मन्द् I, 723
मिद् मेधाहिंसयोः I, 907
मिद् स्नेहने I, 944. IV, 37 (I, 908. IV, 98f. X, 90)
मिन्द् X, 90 (I, 908, 944 IV, 37)
मुद् हर्षे I, 726 (X, 177)
मुद् संसर्गे X, 177 (I, 726)
मृद् IX, 43
मेद् I, 908
म्रद् I, 1004
रद् I, 298
रुद् II, 29
( लन्द् X, 57 )
वद् व्यक्तायां वाचि I, 998 (I, 295, II, 45f. X, 395 )
वद् भाषणे X, 395 ( X, 407 )
वन्द् I, 721
विद् ज्ञाने II, 41 ( IV, 115. X, 242 )
विद् सत्तायाम् IV, 115 ( II, 41. X, 242 )
विद् लाभे VI, 8 ( II, 41. IV, 115. X, 242 )
विद् विचारणे VII, 25 ( II, 41. IV, 115. X, 242 )
विद् चेतनादौ X, 242 (II, 41. IV, 115. X, 253 )
विन्द् I, 310
शद् I, 967 ( VI, 57 )
शब्द् X, 172
श्विन्द् I, 720

क्षन् VIII, 3
क्षिन् VIII, 4
खन् I, 913
घृन् VIII, 7
चन् शब्दे I, 326 (I, 1053)
चन् हिंसायाम् I, 1053 (I, 326)
(जन् जनने III, 14f.)
जन् प्रादुर्भावे IV, 122 (X, 413 f.)
झुन् VI, 59
तन् विस्तारे VIII, 1 (X, 400)
तन् श्रद्धाघाते X, 400
तृन् VIII, [illegible] (VIII, 7)
दान् I, 914
धन् शब्दे I, 324
(धन् धान्ये III, 14f.)
ध्वन् I, 325, 1051 X, 318 (I, 390)
पन् I, 748
मन् ज्ञाने IV, 120 (VIII, 9. X, 243)
मन् बोधने VIII, 9 (IV, 120. X, 243)
मन् स्तम्भे X, 243 (IV, 120)
(मन् पूजायाम् X, 401)
मान् I, 749. X, 401
वन् शब्दे I, 328
वन् भक्तौ I, 329 (VIII, 8)
वन् याचने VIII, 8 (I, 329)
(वन् श्रद्धोपहिंसनयोः X, 400)
शान् I, 915
शुन् VI, 60
सन् भक्तौ I, 330 (VIII, 8)
सन् दाने VIII, 2 (I, 330)
स्तन् शब्दे I, 323, 1049, 1050. (I, 390, 1051. X, 317 )
स्तन् गर्जे X, 317 ( I, 323. X, 286)
स्तेन् X, 319 (X, 286)
स्वन् शब्दे I, 327 (I, 390, 1052)
स्वन् अवतंसने I, 1052 (I, 327 )
हन् II, 42 (X, 169 f, 413 f.)
आप् V, 22. X, 404
कम्प् I, 757
कुप् क्रोधे IV, 48 (IV, 98f. X, 223)
कुप् भासार्थः X, 223 (X, 176)
कृप् सामर्थ्ये I, 959 (X, 179, 321)
कृप् अवकल्कने X, 179 (I, 959 X, 321)
कृप् दौर्बल्ये X, 321 (I, 959)
केप् I, 755 (I, 757)
क्रप् I, 1009
क्षप् X, 323 (I, 1058. X, 413f.)
क्षम्प् X, 99
क्षिप् IV, 15. VI, 3
गुप् रक्षणे I, 332 ( I, 763. IV, 49. X, 221)
गुप् गोपनकुत्सनयोः I, 763 ( I, 332. IV, 49)
गुप् व्याकुलत्वे IV, 49 (I, 332, 763. IV, 98f.)
गुप् भासार्थः X, 221 (I, 332, 763f. IV, 49. X, 176)
गेप् I, 756 (I, 757)
ग्लेप् I, 758
चप् I, 339
चुप् I, 342
(चुलुम्प् X, 413f.)
छम्प् X, 98
छुप् VI, 61
जप् I, 338

